# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]




३१ वर्षे
३-४ अङ्कौ

मार्गशीर्ष-फाल्गुनपूर्णिमे, वै० सं० २०३३
मार्च, १९७७ ई०



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# सुसङ्ग्राह्या दर्शनग्रन्थाः

| क्रमसं० | ग्रन्थनाम | मूल्यम् |
|---|---|---|
| १. | न्यायसिद्धाञ्जनम्—[ श्रीवेदान्तदेशिकाचार्यविरचितम् ] पुस्तकरत्नमिदं विदुषा सम्पादकेन स्वर्गीयनीलमेघाचार्येण हिन्दीभाषयानूद्य विविधैर्विमर्शप्रधानैः परिशिष्टैः, अथ च विषयसारभूतया भूमिकया सनाथीकृतम्— | २५-०० |
| २. | न्यायकुसुमाञ्जलिः—[ उदयनाचार्यप्रणीतः ] गद्यपद्यात्मकन्यायकुसुमाञ्जलिरयं सर्वप्रथमं हिन्दीभाषयानूद्य प्रकाशितः। बुधा सम्पादकेन श्रीदुर्गाधरझा शर्मणा विमर्शात्मिकया भूमिकया शास्त्रानुमोदिन्या स्वोपज्ञया टिप्पण्या च समलङ्कृतः— | ५६-५० |
| ३. | न्यायकौस्तुभः — [ श्रीमहादेवपुणतामकरविरचितः ] अनुमानखण्डात्मकस्यास्य द्वितीयभागस्य सम्पादनं न्यायधुरन्धरैः स्वर्गतैः श्रीदामोदरलालगोस्वामिभिर्निपुणं व्यधायि— | १०-९० |
| ४. | पदवाक्यरत्नाकरः—[ श्रीगोकुलनाथोपाध्यायविरचितः ] न्यायशास्त्रस्य ग्रन्थरत्नमिदं श्रीयदुनाथमिश्रविनिर्मितया गूढार्थदीपिकाख्यया व्याख्यया, अथ च विदुषा सम्पादकेन श्रीनन्दिनाथमिश्रेण कृतया गवेषणाप्रधानभूमिकया विविधैः परिशिष्टैश्च समुद्भासितम्— | १५-०० |
| ५. | श्रीमद्भगवद्गीता—[ भट्टभास्करभाष्यविभूषिता ] नवमाध्यायपर्यन्तेयं श्रीमद्भगवद्गीता तत्तत्पाठभेदनिर्णयैः विविधैः परिशिष्टैश्चालङ्कृता शोभते— | ५-०० |
| ६. | तत्त्वचिन्तामणिः — [ गङ्गेशोपाध्यायविरचितः ] मङ्गलवादान्तोऽयं ग्रन्थः श्रीमथुरानाथकृतमाथुरीव्याख्यया समुद्भासितः, अथ च विदुषा सम्पादकेन श्रीबदरीनाथशुक्लमहोदयेन विमर्शात्मिकया भूमिकया तथा अनेकैः परिशिष्टैः टिप्पण्यादिभिश्च सनाथितः— | १५-०० |
| ७. | विज्ञप्तिमात्रतासिद्धिप्रकरणद्वयम्—[आचार्यवसुबन्धुविरचितम्] बौद्धदर्शनग्रन्थोऽयं विंशतिकापर्यन्तं स्वोपज्ञवृत्त्या, त्रिंशतिकापर्यन्तम् आचार्यस्थिरमतिविरचितभाष्यविभूषितः। अयं प्रथमतया गूढार्थदीपिकाख्यया हिन्दीव्याख्यया शास्त्रसारभूतया भूमिकया विविधैरानुसन्धानिकैः परिशिष्टैश्च समलङ्कृत्य प्रकाशितः— | ३९-२५ |

प्रकाशकः निदेशकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

मुख्यसम्पादकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

उपसम्पादकः

डॉ० हरिश्चन्द्रमणित्रिपाठी







उपहार स्वरूप निःशुल्क

वार्षिकमूल्यम् १० रूप्यकाणि
संयुक्ताङ्कयोः ६ रूप्यकाणि

३१ वर्षे
३-४ अङ्कौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# विषयानुक्रमणी





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# सारस्वती सुषमा

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

३१ वर्षः | मार्गशीर्षफाल्गुनपूर्णिमे, वि० सं० २०३३ | ३-४ अङ्कौ

## आलङ्कारिकाणां रससास्वादौ[1]

श्रीकेदारनाथ ओझाः, सम्मानितप्राध्यापकः,

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये ।

सरसहृदयवशभोगं रोगं हरन्तमन्यविषयजातम् ।
वन्दे कविवरहृद्यं नवतां वधतं रसं कञ्चित् ॥ १ ॥

आचार्यवाग्विविधतीर्थजलावपूतः केदारनाथ उदितार्थदृशा सनाथः ।
स्वादं रसस्य तनुते नयवित्सुगम्यं नानापथं सफलदर्शनरागरम्यम् ॥ २ ॥

काव्यस्य दृश्यश्रव्ययोरुभयोरपि विशेषयोः सहृदयस्य सातिशयप्रवृत्या सहृदयताव-शोन्मिषितकाव्यार्थभावनाद्वारकः कश्चिदानन्दविशेषानुभवः सिद्ध्यन् सहृदयप्रत्यक्षश्च न किञ्चित् साधनान्तरमपेक्षते, परम्—

यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम् ।
आस्वादयन्ति भुञ्जाना भक्तं भक्तविदो जना ॥
भावानभिनयसम्बद्धान् स्थायिभावांस्तथा बुधाः ।
आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः ॥

नाट्यशास्त्रोक्तसम्प्रदायमनुसृत्यास्वादपदवीं दधानं रसपदाभिधेयं कमपि पदार्थमभ्यु-पगच्छन्ति आलङ्कारिकाः । तादृशरसपदार्थस्वरूपे स्थायिभावस्य रसत्वं व्याचक्षाणानामप्या-चार्याणां तत्तत्कल्पनाप्रौढिपरम्परया महान् प्रक्रियाभेदः परिदृश्यते । तत्र पण्डितराज-जगन्नाथस्य रसगङ्गाधरे नव्यन्यायग्रुगीनदार्शनिकभाषया विभूषितोऽस्य लेख आधुनिकमनोविज्ञान-शास्त्रस्य क्रीडनमसूचयत् । भारतीयदर्शनशास्त्रेषु विविधभेदभिन्नानां ज्ञानानां क्रमिककार्य-कारणकल्पनामूला मानस्यः प्रक्रिया नैकप्रकारा वर्णिता विद्यन्ते । ताः प्रक्रिया मानसशास्त्रस्य विषयः । एता अपि प्रक्रिया दर्शनभेदेन किञ्चिद् विभिद्यन्ते । समे च दार्शनिकाः स्वस्व-प्रक्रियया सुन्दरमेनं रसं सस्वदुः । तेन च प्रक्रियाभेदः प्रासिध्यत । दार्शनिको जगन्नाथोऽभिनव-

१. सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्याष्टादश (१८) दीक्षान्तमहोत्सवावसरे विश्वविद्यालयेना-योजितायां गङ्गानाथझाप्रवचनमालायां काशीस्थेन विदुषा पं० केदारनाथओझामहोदयेन प्रदत्तमिदं तृतीयं विशिष्टं व्याख्यानम्—सम्पादकः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भारतीनिर्दिष्टाचार्याणां मतानि विशददर्शनगिरा निर्दिशन् समुत्साहितो द्वित्राणामन्येषामपि दर्शनानां प्रक्रियाः प्रादर्शयत् । तेनैव यथा तेन प्रदर्शितानि मतानि विश्लेषयितुं प्रवृत्तं मम मानसं द्वित्रा अन्यदर्शनप्रक्रिया अपि प्रदर्शयितुं समुत्सुकं विदुषां पाठकानां पुरः परिवेषयति ।

तत्र रस-ध्वनिधुरन्धरस्य श्रीमदभिनवगुप्तपादाचार्यमतस्य व्याख्यातृभेदाद् द्वौ पन्थानौ निःसृतौ । मार्गद्वयेऽपि स्थायिभावो न रसः, किन्तु स्थायिभावस्यास्वादो रस इति समानम् । परम्—

(१) प्रथमे व्याख्यातारः स्थायिभावस्य भग्नावरणेन सच्चिदानन्देन गोचरीक्रियमाणत्वमूलास्वादमामनन्ति । अभिनवग्रन्थ उपलभ्यमानयोः **'स्थायिभावो न रसः, विमर्शो रसः'** इति वाक्ययोः समन्वयविरोधौ विद्वद्भिश्चिन्तनीयौ । इदं तु सत्यं यदत्र रसगङ्गाधरे अद्वैतवेदान्तप्रचलिता भाषा न प्रत्यभिज्ञादर्शनस्य पदार्थैक्यं तु प्रतिभाति । भाषाभेदोऽपि सहेतुकः, नव्यन्यायभाषा यथाऽद्वैतवेदान्तमाक्रामत, न तथा प्रत्यभिज्ञादर्शनम् । विमर्शव्यापारविवेचने आत्मना सहान्येऽपि विषया आयान्ति । **'विमर्शो रसः'** इति वाक्येऽपि स्थायिभावस्य विमर्शो रस इति तात्पर्यं निहितमास्ते । **'अहं शकुन्तलाविषयकरतिमान्'** इति सामाजिकानां विमर्शाकारः स्यात् । तादृशविमर्शविषयत्वमेव साच्चिदानन्देन गोचरीक्रियमाणत्वम् ।

(२) अन्ये तु स्थाय्युपहितात्मानन्दविषयिणी अन्तःकरणवृत्तिरास्वाद इति वदन्ति । पूर्ववर्णितो विमर्श एव आस्वादो रसश्च । रत्याद्युपहित आत्मा तत्र भासते ।

अनयोर्व्याख्यानयोर्वस्तुस्थितिरेवम्—आत्मचैतन्यमेव प्रकाशः, तस्य वस्तुना विषयेण साकं सम्बन्धेन विषयभानं भवति, आवृतं वस्तु न चैतन्येन साक्षाद् सम्बध्नाति, वृत्त्या आवरणभङ्गे चैतन्यसम्बन्धेन विषयः प्रकाशते । तथा च रतिरात्मानन्दः, उभयाकारावृत्तिः, आवरणभङ्गः, रतेरात्मसम्बन्धश्चेति पञ्च वस्तून्यास्वादवेलायां विराजन्ते । **प्रथममते पञ्चमः सम्बन्ध आस्वादः स्वीकृतः । द्वितीये वृत्तिरास्वादः ।** आस्वाद एव चोभयो रसः । **अग्रिमे तृतीये आवरणभङ्ग आस्वादः ।**

(३) आत्मानन्दो रसः, आवरणभङ्ग आस्वाद इति तृतीयं व्याख्यानं स्वीयं प्रादर्शयत् । तथा वर्णने **'रसो वै रसः', 'रसं ह्ययं लब्ध्वा आनन्दीभवति'** इत्यादितैत्तिरीयश्रुतौ आत्मानन्दस्य रसशब्देन व्यवहारं कारणं व्यजिज्ञपत् । ततश्च स्थाय्युपहित आत्मानन्दो रसः, आवरणभङ्ग आस्वादः । एषु त्रिषु व्याख्यानेष्वभिनवगुप्तस्य मूलम्, व्याख्याप्रणाली भिद्यते । सहृदयसामाजिकेषु वासनारूपेण स्थिताः साधारणनायिकाविषयिणो रत्यादिस्थायिभावाः साधारणशकुन्तलादिविषयतां दधाना आस्वाद्यन्त इति समानम् ।

**भट्टनायकमतम्**

(४) अस्य मतस्य विवरणे निबन्धग्रन्थेषु भोगभुज्यमानतादिशब्दानां प्रयोगः । सांख्यदर्शने पुरुषो न कर्ता, किन्तु **'भोक्तेति'** आयाति । भोगशब्दं दृष्ट्वा सांख्यसरण्या व्याख्याता भट्टनायक इति रूढिः प्राचलत् । अत्रापि सामाजिकरतेरेवास्वादः । स्थाय्युपहितस्य सत्त्वगुणपरिणामसुखस्य साक्षात्काररूपो भोगः स्थायिभावस्यास्वादः । आस्वाद एव रसः । पूर्वत्र त्रिष्वात्मानन्दस्य वर्णनम् । अत्र सत्त्वगुणपरिणामसुखस्येति एतावानेव विभेदः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वस्तुतस्तु असङ्गस्यापरिणामिनश्च सांख्यपुरुषस्य बुद्ध्यारूढविषयैः सम्बन्ध एव भोगो नान्यत् किञ्चित् । पुरुषोऽपि सच्चिदानन्दः, रस्यते, भुज्यते, आस्वाद्यते इत्यादीनां समानेऽप्यर्थे प्रयोगो भवति । एतावता भोगशब्दस्य व्यवहारः अर्थविशेषो नास्ति 'भोगो व्यक्तिः' इति रसगङ्गाधरः पूर्ववदेवात्मसम्बन्धं प्रख्यापयति । तेनात्राप्यात्मानन्दसम्बन्धः । आत्मन आनन्दांशः सात्त्विकवृत्तौ प्रस्फुरतीति द्योतनाय सत्त्वगुणपरिणामेत्याद्युच्यते ।

चत्वारोऽप्येते स्थायिभावस्य रसपरिणामं ब्रुवते, सामाजिकरत्यादीन् आस्वादन्ते च । प्रथमे चतुर्थे चास्वादो रसश्चैक एव । द्वितीये तृतीये च स्थाय्युपहित आत्मानन्दो रसः, आस्वादो वृत्तिरावरणभङ्गश्च । केवलस्य स्थायिभावस्य रसतां न ब्रुवते, किन्त्वात्मसम्बन्ध-संवलितस्यैवेत्यवधातव्यम् । चतुर्थे भट्टनायकमतेऽप्यात्मसम्बन्ध उक्तप्राय एव । अतः परम-नुकरणीयदुष्यन्तादिनिष्ठरत्यादेरेव सामाजिकैरास्वाद इति मतं प्रचलति ।

**भट्टलोल्लटस्य मतम्**

(५) अस्य मते दुष्यन्तशकुन्तलादिविषयकरत्याद्यंशेऽलौकिकेन ज्ञानलक्षणानामकेन नटादि-विशेष्यांशे च लौकिकेन चक्षुःसंयोगेन सन्निकर्षेण जायमानो विशिष्टो नटविशेष्यकः 'दुष्यन्तोऽयं शकुन्तलाविषयकरतिमान्' इत्याकारकसाक्षात्काररूपः सामाजिकनिष्ठो दुष्यन्तादिवृत्तिरत्यादे-रास्वादः । साक्षात्काररूपास्वादविषयतामापन्नो दुष्यन्तादिनिष्ठो रत्यादिरेव रसः । सामाजि-कानां प्रत्यक्षज्ञानस्वरूपो रत्यादेरास्वाद एव रसास्वादः । अत्रालौकिकादिशब्दे भाषानुवादस्य सरलादिटीकानां चानधिकारप्रयुक्तोऽशुद्धो लेखः । अत्रत्यविषयाणां नवीनशास्त्रपरिशीलनविधुरै-र्दुर्बोधिता । मीमांसकमतानुसारित्वमस्य मुधैव प्रसिद्धम् । पण्डितराजो न्यायभाषया विशदयति । चित्रतुरगादिदृष्टान्तस्यापि भ्रमज्ञान उपयोगः । यथा अतुरगेऽपि तुरगचित्रे तुरगोऽयं धावतीति धीस्तथा समक्षे दुष्यन्ताभिनेतरि नटे दुष्यन्तोऽयं शकुन्तलाविरहे विलपतीति दर्शकानां बुद्धिरुप-जायते । एषु समेषु रसास्वादेषु भ्रमधियो विलासः । अत्रानन्दविषये न किञ्चिदुच्यते, परम् अग्रिममतवद् विषयसौन्दर्यवशादानन्दोऽवसेयः । विवेचयिष्यामि च पश्चाद् निकर्षे विषय-सौन्दर्यमेव प्रायःसर्वत्रानन्ददायकम् आत्मानन्दोदयस्य वर्णनं तु रसास्वादप्रशंसायै ।

**श्रीशङ्कुकमतम्**

( ६ ) पूर्वमते साक्षात्कार आस्वादोऽत्रानुमितिरिति विशेषः । अन्यत् सर्वं पूर्वमत-सदृशम् । सोऽपि विशेषो दार्शनिकज्ञानप्रक्रियामूलकः, न तु रसप्रक्रियामूलकः । अस्यानुमिति-रूपपरोक्षवादितया महती निन्दा शास्त्रतात्पर्यविधुरैर्विधीयते । अनुमितिज्ञानेनानन्दानुभवे बाधा नायास्यतीति प्रदर्शयिष्यामि । दुष्यन्तत्वरूपेण प्रत्यक्षो नटः पर्वतवत्पक्षः । शकुन्तला-विषयकरतिर्वह्निरिव साध्या । 'दुष्यन्तोऽयं शकुन्तलाविषयकरतिमान्' इत्यनुमितेराकारः । अनुमीयमानो दुष्यन्तादिनिष्ठो रत्यादी रसः । सामाजिकनिष्ठा अनुमितिरास्वादः । अत्र विषयसौन्दर्यवशादानन्दं स्फुटं व्यवहरन्ति ।

(७) पण्डितराजोहिता अनिर्वचनीयख्यात्यभिधाना अद्वैतवेदान्तप्रसिद्धा सामाजिकेषु अनिर्वचनीयं दुष्यन्तत्वादिकं सामाजिकान्तरङ्गे च अनिर्वचनीयं शकुन्तलादिविषयकं रत्यादिकञ्चोत्पादयन्ती रसगङ्गाधरे नव्या इत्यादिना निर्दिष्टा रसरसास्वादप्रक्रिया । दुष्यन्ते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लौकिकी शकुन्तलारतिः स्थायिभावः, दुष्यन्ताभिन्नेषु सामाजिकेष्वनिर्वचनीया समुत्पद्यमाना शकुन्तलारती रसः। सामाजिकानाम् आत्मानन्देन सह रसस्य सम्बन्ध आस्वादः। अहं दुष्यन्तः शकुन्तलाविषयकरतिमान् इति सामाजिकानामनुभवः।

आनन्दवर्णनमत्र आत्मानन्दवशात्। यथा शुक्तिशकले रजतज्ञानम्। यथा शुक्तिका-त्वस्याज्ञानम् इदन्त्वेन च शुक्तिशकलस्य तत्र ज्ञानं भवति, तथा काव्यार्थभावनामहिम्ना रसगङ्गाधरवर्णितविगलितपरिमितेत्यादिरीत्या सामाजिकात्मानो विगलितचैत्रत्व-ब्राह्मणत्व-गौरत्वादि विभेदकधर्माणः सामान्यनायकायमाना दुष्यन्ताभेदमापद्यन्ते। यथा स्मर्यमाण-मापणस्थरजतं शुक्तिशकले समुत्पद्य प्रत्यक्षं भवति। तथा काव्यार्थभावनया भाव्यमाना दुष्यन्त-निष्ठा शकुन्तलारतिः सामाजिकात्मनि समुत्पद्य सामाजिकैरनुभूयते। प्रत्यक्षे विषयसान्निध्य-मपेक्षितम् एतावता समुत्पादस्य वर्णनम्। रसगङ्गाधरस्य भाषानुवादविधाना सरला नामटीका चैतादृशविषये भावाऽवबोधेनाधिकुर्यादिति वस्तुतो जिज्ञासुभिः प्रयासो विधीयताम्।

(८) व्यञ्जनावृत्तिम् अनिर्वचनीयख्यातिञ्च नाङ्गीकुर्वतां प्रायो न्यायप्रक्रियया व्युत्पाद-यतां दोषवशादसतोऽसन्निकृष्टस्य च भानमिति स्वीयां प्रौढिं द्योतयतां रसगङ्गाधरे परे शब्देन वर्णिता बौद्धदर्शनसंस्कारकल्पिता रसरसास्वादप्रक्रिया। 'अहं दुष्यन्तः शकुन्तलाविषयकरतिमान्' इति सामाजिकानां रसरसास्वादो। एतादृशानुभवदशायां शकुन्तलारती रसतामेति। अत्र मते रसस्यास्वाद इति भेदव्यपदेशो भाक्तः। काव्यार्थभावनावशादेवान्य आचार्याः स्वप्नतुरगा-दीनामिव विभावादीनां प्रतीतिं शकुन्तलायाः साधारणीकरणम् अनिर्वचनीयोत्पत्तिञ्च उपपाद-यन्ति। तदा काव्यार्थभावनामहिम्नोऽपरिमितत्वात् तत एव वस्तूनामभावेऽप्यतीतानाम् असन्नि-कृष्टानां कथमपि ज्ञातानां मानसप्रत्यक्षं कथन्नाङ्गीक्रियतामिति पूर्वमतापेक्षया कल्पनालाघवं मन्वते। यद्यपि पूर्वोक्तभट्टलोल्लटमतेऽपि प्रत्यक्षम्, परं तत्र नटविशेष्यकं चाक्षुषम्, अत्र त्वात्म-विशेष्यकं मानसम्। विषयसद्भावाभावोऽलौकिकप्रत्यक्षे न बाधक इत्युक्तम्। आत्मनि दुष्यन्ताभेदः काव्यार्थभावनाप्रकर्षात् पूर्वमते यथा तथाऽत्रापि। अवाच्याया अलक्ष्यायाश्च शकुन्तलारतेः प्रतीतिरानुमानिकीति मूल उक्तम्। पञ्चमे सन्निकर्षविशेषणं दत्तं नोक्तमत्र। मम तु तथैव प्रतिभाति, आत्मांशे मनःसंयोगो लौकिकः; दुष्यन्ते दुष्यन्तविशेषणे रत्यादौ च ज्ञानलक्षणानामकोऽलौकिकः।

(९) रामानुजदर्शने भ्रमज्ञानं नाङ्गीक्रियते। शुक्तिरजतस्थले शुक्तावपि रजतस्यांशाः केचन वर्तन्ते, येन चाकचिक्यं प्रतिभाति। तेन शुक्तौ रजतमिति ज्ञानं जायते। परं न सर्वत्र सर्वदा, अपि तु दोषवशाच्छुक्तित्वस्य तिरोधानेऽभान एव। तथैव काव्यार्थभावनारूपदोषवशाद् नटस्य दुष्यन्तविभेदकधर्मास्तिरोधीयन्ते।

एवं शकुन्तलाभिनेतरि शकुन्तलाविरोधिधर्माणामज्ञानम्। अभिनयवशाच्चाभेदबुद्धि-रिति 'दुष्यन्तोऽयं शकुन्तलाविषयकरतिमान्' इति प्रत्यक्षं सामाजिकानां रसास्वादः। अन्यश्च विशेषो भट्टलोल्लटप्रक्रिययेवावसेयः।

(१०) दुष्यन्तशकुन्तलारत्यादीनाञ्च परोक्षं शाब्दं ज्ञानम्। अभिनेतुश्च प्रत्यक्षं ज्ञानम्। काव्यार्थभावनाप्रकर्षाद् अभिनेयाभिनेत्रोस्तत्परोक्षापरोक्षज्ञानयोश्च भेदो न भासते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेन साक्षाद् दुष्यन्तशकुन्तलादिदर्शनमिव सामाजिकानां रसास्वादोऽनुभवश्चानन्दस्य। एतद् भ्रमज्ञानानङ्गीकुर्वतो मीमांसकप्रभाकरस्य मतम्।

(११) सर्वं वस्तु वासनात्मकं बुद्धयात्मकं वा। इदं रजतमिति भ्रमस्थले बुद्धयात्मकमेव रजतं सन्निकृष्यते, भवति च प्रत्यक्षम्। तत्र बुद्धिस्थस्यैव भानम्, न दूरस्थस्य भानमिति न ज्ञानलक्षणासन्निकर्षस्यापेक्षा। यत्र बाह्यो विषयो न सन्निकृष्यते, प्रत्यक्षं च जायते, तत्र बुद्धिस्थस्यैव भानम्। यद्यपीदम् आत्मख्यातिनाम्ना योगाचारस्य मतं प्रसिद्धम्, परं वैयाकरणसिद्धान्तलघुमञ्जूषाग्रन्थेऽनिर्वचनोयोत्पादखण्डनप्रसङ्गेऽसतोऽपि भानमिति दृशा समादृतम्। तेन वैयाकरणमतमिति वक्तुं शक्यते। अन्यच्च वैयाकरणमतमग्रे वर्णयिष्यामि।

अभिनयव्यापारेण काव्यार्थपरिशीलनेन च दुष्यन्तशकुन्तलारतिप्रभृतिभावा बुद्धौ समारूढाः। नटे प्रत्यक्षीक्रियमाणेऽसन्तोऽपि सामाजिकैः प्रत्यक्षीक्रियन्ते। तादृशं सामाजिकम् 'अयं दुष्यन्तः शकुन्तलाविषयकरतिमान्' इत्याकारकं प्रत्यक्षं रसास्वादः। प्रत्यक्षावस्थापन्ना च शकुन्तलारती रसः।

(१२) अन्यद् वैयाकरणमतम्। काव्यगता अभिनेतृप्रयुक्ताश्च दुष्यन्तशकुन्तलारमणीराजगौरदयाधीरवीरप्रभृतिशब्दा न विशेषार्थे गृहीतशक्तिकाः, विशेषाणामतीतानामप्रत्यक्षात्। अनुमानशब्दादिप्रमाणानां सामान्यविषयकत्वात्। प्रतीयमानोऽपि कश्चिच्छाब्दप्रत्ययभेदो न जातिगुणादिभेदभिन्नविशेषणभेदमूलकः, तादृशजाति-गुणादिधर्माणां प्रत्यक्षादज्ञानाच्च। किन्तु तच्छब्दान् प्रवृत्तिनिमित्तीकृत्य तत्तच्छब्दवत्सु अर्थेषु आधुनिकानां शक्तिग्रहः; तत्तच्छब्दप्रकारक एव बोधः। दुष्यन्तरमणीत्वेन कण्वदुहितृत्वेन गृहीतायां शकुन्तलायाम् अगम्येति बुद्धिः सम्भवति। शकुन्तलाशब्दवत्यां नागम्येति बुद्धिः स्यात्। भवेच्च सामाजिकानां रतेरालम्बनम्। भावनाप्रकर्षाच्च स्वात्मनि दुष्यन्तशब्दवत्त्वेन नायकत्वपरिज्ञानम्। तेन च शकुन्तलारतिविषयोऽहमिति सामाजिकानां मानसप्रत्यक्षं रसास्वादः। प्रत्यक्षदशायां तादृशरती रसः।

अत्र शक्तिग्रहवर्णन एव किञ्चिन्नूतनम्। शब्दप्रकारको बोधः कारणमालाप्रकरणे प्रयोजनान्तराय रसगङ्गाधरे गृहीत उपपादितश्च। शाब्दबुद्धेरपि विषयविशेषेऽपरोक्षत्वमत्र रसप्रकरणे 'तत्त्वं वाक्यजबुद्धिवत्' इत्यनेन सूचितम्। प्राक्तनवैयाकरणमतमसतो भानमङ्गीचकार। अत्र च शब्दप्रकारकमिति विशेषः।

इत्थं पण्डितराजः स्वविश्लेषणशालिन्या शेमुष्या अभिनवगुप्तमतमेव त्रिधा व्याख्याय 'नव्याः-परे' इति मतद्वयं स्वयमुद्भाव्य च यन्मां समुदसाहयत् तेन दिक्प्रदर्शनमुखेन चतस्रो रसास्वादप्रक्रियाः प्रादर्शयम्। अल्पीयस्यैव सामग्रया नातिदृढोऽपि कथमप्यग्रेसरणं यद्भावि तद् भवतु इति न्यायेन पञ्चमीमपि प्रस्तौमि।

(१३) स्वयं महेश्वरोऽपि जीवोऽविद्यावशाद् अल्पज्ञत्व-पारतन्त्र्य-परिमितत्वादिकलाक्रान्तः समयेन विद्योदयेन महेश्वरधर्मान् सर्वज्ञत्वस्वातन्त्र्यविभुत्वादिरूपान् स्वस्मिन् विमृशति 'स एवाहं महेश्वरः' इति प्रत्यभिजानीते च क्रमशो महेश्वररूपतामेति विमुञ्चति च बन्धमिति प्रत्यभिज्ञादर्शनशैली। तद्रीत्या सामाजिकाः सहृदयाः काव्यार्थभावनाप्रकर्षाद् दुष्यन्तनायकगुणान् स्वस्मिन् विमृशन्ति 'तादृशशकुन्तलारतिमानहम्' इति प्रत्यभिजानते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एतादृशो विमर्शो रसः, सामाजिकेषु विमर्श एव रसास्वादः। विमृश्यमाना रतिः स्थायिभावः, आनन्दश्चात्मानन्दविमर्शात्, अन्या अनुपपत्तयश्च काव्यार्थभावनाप्रकर्षपेषणीपेष्टव्याः।

**आसु कतमा प्रक्रिया समीचीना**

अलौकिकेऽस्मिन् विषये कल्पनामात्रशरीराणां मोक्षपदवीमिव रसास्वादानन्दानुभूतिमारोहन्तीनां सोपानपरम्परामिवाचरन्तीनां प्रक्रियाणां का समीचीना का च नेति वस्तुतो वक्तुं न पार्यते, समेषामेव तैर्थिकानां स्वस्वमार्गे प्रतिष्ठितत्वात्।

अत एव प्राथमिकेषु चतुर्षु मतेषु सामाजिकरत्यादीनामास्वादात् सहृदयानाञ्च रसास्वादाधिकारः सिद्धयति, रसास्वादानुकूलवासनावतामेव सहृदयत्वात्। अनुकार्यदुष्यन्तादिरत्यादेरास्वादनये तु सामाजिकवासनानामनुपयोगाद् जरन्मीमांसकादीनामपि रसास्वादप्रसक्त्या सिद्धान्तव्याकोपभयात् पञ्चमादीनि मतानि हेयानीति केषाञ्चिद् व्याख्यानं मुधैव, सर्वैरपि देशिकैः स्वस्वप्रक्रियायां भिन्ननिष्ठरत्यादेरास्वादस्य सहृदयतोल्लसितकाव्यार्थभावनाकार्यत्वेनैव वर्णनात्। तथा च सहृदयतां विना भावनोल्लासाभावेन रसास्वादस्य खपुष्पायमाणत्वात् कुतो निर्वासनानां रसास्वादप्रसक्तिः?

एवमेव प्रत्यक्षज्ञानस्यैवाह्लादजनकतयाऽनुमितिरूपपरोक्षरसास्वादवर्णने सहृदयसाक्षिसिद्ध आनन्दो नोपपद्यत इति श्रीशङ्कुकमतं न समीचीनमिति वचोऽनर्हम्। तस्य मते वस्तुसौन्दर्यायतस्याह्लादस्यानुभवे वस्तुज्ञानगतं परोक्षत्वम्, अपरोक्षत्वं वा किं कुर्वीत? किं पुत्रादीनां समुन्नतिः साक्षात्क्रियमाणेव कुण्डलीस्थानुकूलग्रहवशादनुमीयमाना नाह्लादयति? व्ययबोधकपत्रेण समृद्धिपूर्णतयाऽनुमीयमानः कोषः किं राज्ञो नानन्दाय? अवनतिश्च पुत्रादीनामनुमितेव साक्षात्कृताऽपि क्लेशयत्येव। तस्मात् सुष्ठूक्तं श्रीशङ्कुना वस्तुसौन्दर्यबलादेवाह्लाद इति। यत्र कुत्रचिद् वस्तुसौन्दर्यसत्त्वेऽपि अनुमितिवशान्नाह्लादोऽनुभूयते, तत्रानुमिताव-प्रामाण्यग्रहोऽवसेयः।

अत्र रसप्रकरणे पण्डितराजः 'विभावादिषु य एव चमत्कारो स एव रसः' इति मतान्तरमवातारयत्। तेन किं सूचयतीति विचारणीयम्। स्थायिभावस्य रसत्वे स्थायिनः सौन्दर्यादेव आनन्द इत्यायाति। तथा च रसानुभववेलायां विषयसौन्दर्यवशादाह्लाद इत्यालङ्कारिकाणामनुभवः।

यद्यपि—

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्॥

इति वेदान्तडिण्डिमो वस्तूनां सच्चिदानन्दे ब्रह्मण्यध्यस्तत्वाद् विषयेष्वानन्दो ब्रह्मण एवेति ख्यापयति, तेन वेदान्तप्रक्रियावशात् सच्चिदानन्दसम्पर्कस्वरूप आस्वाद एवाह्लादयेत् सामाजिकान्, नान्यविध आस्वाद इत्यायाति, तथापि विवेचनपरीक्षायां विषयसौन्दर्यमेव तिष्ठत्याह्लादमूलम्। अन्याः प्रक्रिया विशीर्णा जायन्ते। तथाहि—प्रथममुक्तडिण्डिमस्य स्वरूपमेव विविच्यताम्। ब्रह्मणोऽध्यासवशादेव वस्तूनां प्रियत्वमास्थीयेत, तदा अविशेषाद् जगदिदं प्रियमेव स्यात्, न किञ्चिदप्रियम्। किन्तु, वस्तुस्वभावादेवात्मानन्दाध्यासेन किञ्चित् प्रियम्, अन्यदप्रियमिति तेषामपि प्रक्रिया। अतः स्वभावबलादेवानन्दांशस्याभिव्यक्तेरभावेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दुःखं सदाऽप्रियमेवावतिष्ठते। सांख्यमते सत्त्वरजस्तमसां परिणामाः पदार्था इति वस्तुनः स्वभावादेव सुखदुःखे संसिद्धचतः।

आद्येषु त्रिषु मतेषु साक्षात्कार आत्मानन्दोदयो यदि, तर्हि काव्यातिरिक्तस्थले घटादिसाक्षात्कार आत्मानन्दोदयोऽस्ति न वा? आद्य आनन्दोदये साधारणे जाते किं कृतं काव्येन, तदर्थभावनया वा? यदि घटादिस्थले प्रकाशाय चिदंशस्यैवोदयो नानन्दांशस्य, काव्यस्थले चानन्दांशस्थायीति ब्रूपे, किं कृतोऽयं विशेषः? काव्यकृत इति चेत्, किं करोति काव्यम्? वयं तु ब्रूमः—काव्यमलौकिकं नूतनं शब्दार्थस्वरूपमुपनयति। सहृदयतोल्लसिता भावना तु तस्य क्लेशमोहप्रयोजकांशं तक्षन्ती सुखप्रयोजकांशं सूक्ष्मतरं सामाजिकान्तरङ्गे स्थापयति।

इदमेव रजस्तमसोरभिभवनं सत्त्वोद्रेकश्च ग्रन्थेषु वर्णितम्। यद्वशात् काव्यसमर्पितः शोको जुगुप्सा वाऽऽह्लादायैव, न क्लेशाय। तस्मात् काव्यतदर्थभावनयोर्विलक्षणवस्तुसमर्पणेनोपयोगः। तदेव सुन्दरं वस्तु। तस्यैवानुभव आस्वादो वाऽऽह्लादयति। वस्तुसौन्दर्याच्चानन्दानुभवः सिध्यति।

प्रागुक्ते नव्यमतेऽपि अन्तर्निहितं वस्तुसौन्दर्यमेव चमत्कारप्राणः प्रतिभाति। साक्षात्कार आत्मानन्दोदयवशादाह्लाद इति तन्मतम्। तत्तु अनुपदमुक्तैर्विविधविकल्पजालैः प्रवद्धं कथं प्ररोहेत्? यदि साक्षात्कारबलादेवानन्दोदयः, तर्हि दुष्यन्तनिष्ठरत्यादेर्भट्टलोल्लटवत् साक्षात्कारेण कथं न तुष्यन्ति नव्याः? कथञ्च नूतनस्यानिर्वचनीयस्य रत्यादेरुत्पादने प्रयतन्ते? न च अनिर्वचनीयस्यैव साक्षात्कार आह्लादकः, न व्यावहारिकस्य इति दृशा तथा यतन्त इति वाच्यम्, व्यभिचरितत्वात्। व्यावहारिकेणापि सुन्दरवस्तुनाऽऽह्लादस्योदयात्। स्वीये रजतखण्डे जायमानेन रङ्गेणानिर्वचनीयेन कीदृग् हृष्यतीति स एव जानाति।

इदं तु तस्य हृद्यम्—लौकिकसामग्रीसमर्पितो दुष्यन्तादिनिष्ठो रत्नादिर्लौकिको दुःखमोहप्रयोजकांशेनापि घटितो न समेभ्यः सहृदयेभ्यः सुखप्रदः, किन्तु सुखांशमात्रेण नूतनतया समुत्पन्न एव। अन्यानिर्वचनीयापेक्षया विलक्षणं सौन्दर्यं तु काव्यार्थभावनोत्थतयैवेति सर्वत्र समानम्।

भट्टनायकस्य मतेऽपि वस्तुसौन्दर्यमनपेक्ष्य न किञ्चिदानन्दानुभवहेतुतया पर्यवस्यति। तथाहि—सांख्यप्रक्रियायां तत्तत्सुखदुःखाकारेण परिणताया बुद्धेः पुष्करपलाशवन्निर्लेपेऽसङ्गे पुरुष ऐक्याध्यासरूपो भोगो दुःखादेरपि पौरुषेयः समानो न किञ्चिद् रसास्वादे वैलक्षण्यमर्पयति, रजस्तमसी अभिभूयोद्रिक्तस्य सत्त्वस्य सुखाकारपरिणामोऽपि सर्वत्र लौकिकसुखसाक्षात्कारे समानः सन् न भेदमावहति, किन्तु काव्यसमर्पितस्य वस्तुनः सौन्दर्यस्वभाव एव रजस्तमसोरभिभवे सत्त्वोद्रेके च प्रभवतीति किमु वक्तव्यम्।

एवं सति एकदेशि—'परेतु' मते आनन्दानुभवहेतुतया वर्णितो दुष्यन्तादिनिष्ठरत्यादेर्मनिससाक्षात्कारप्रभवो विषयसौन्दर्यबलायात इति पर्यवसेयम्।

प्रायः श्रीशङ्कुकसपक्षभावमापन्नस्य भट्टलोल्लटस्य मतेऽपि श्रीशङ्कुकसम्मतवस्तुसौन्दर्यबलायात एवानन्दानुभव इत्यलमेकत्र विषये विशेषाभिनिवेशेन।

**आनन्दस्वरूपविचारे किञ्चित्**

वेदान्तनये द्विविध आनन्दः सम्भवति। प्रथमः—आत्मस्वरूपोऽलौकिकः, द्वितीयः—सुखरूपा चेतसो वृत्तिर्लौकिकी।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्वनेकविधसुखस्वीकारे गौरवात् समेषां वस्तूनामात्मन्यध्यस्ततयैव प्रकाशः, विषयप्रकाशनाय चिदंशेऽध्यासस्यावश्यकतयाऽऽनन्दरूपप्रियत्वाभिव्यक्तये चानन्दांशेऽध्यासोऽप्यावश्यकः। तथा चैकेनात्मानन्देन सर्वत्र प्रियत्वोपपत्त्या नानासुखस्वीकारे गौरवं स्फुटमेव। घटादिसाक्षात्कारे सर्वत्र प्रियत्वानभिव्यक्त्याऽपि न क्षतिः। नैयायिकानामिव यत्र **'इदं ममानुकूलं मम भवतु'** इति वासना वृत्तिर्वा तत्रैव प्रियत्वाभिव्यक्तेः स्वीकारात्। यत्र **'इदं मम प्रतिकूलं मम न भवतु'** इति वासना, तत्र दुःखरूपा वृत्तिरेव, न प्रियत्वाभिव्यक्तिरिति चेत्, आत्मानन्दस्यैकत्वेऽपि तदभिव्यञ्जकनानावृत्तिस्वीकारे लाघवस्य दूरापास्तत्वात्, घटादिसाधारणानन्दस्य रसस्थल आस्वादे लौकिकत्वस्यावर्जनीयत्वाच्च।

अस्तु वा यथा तथा द्विविधं सुखं वेदान्तनये प्रसिद्धं तदादायैवात्र व्यवस्थापनीयम्। आदिमे मतत्रये नव्यमते चात्मस्वरूपानन्दस्य वर्णनम्। तस्यापि रसस्थलेऽन्यलौकिकसुखापेक्षया सातिशयत्वेऽपि लौकिकत्वमव्याहतम्। इदञ्च रसगङ्गाधरे **'सविधर्वात्ति'** **'विषयसंवलितः'** इत्यादिशब्दैः ख्यापितम्।

सांख्यमते बुद्धिसत्त्वस्य सुखाकारपरिणामविशेषो लौकिक एव, अन्यसुखस्यापि तादृशत्वात्। स च चतुर्थे भट्टनायकमते परिगृहीतः। आत्मस्वरूपस्य कियति विभेदेऽपि सर्वत्र दर्शने आत्मन आनन्दत्वम्, अनुकूल आत्मीये प्रियत्वञ्चाहं चिन्तयामि। असकृत् संस्कृतहिन्दीपत्रिकासु प्रकाशयञ्च। भवति च प्रत्यक्षे वेदान्तस्येव सांख्यस्याप्यात्मसम्पर्कः। तथा चैतादृशानन्दस्वरूपे सांख्य-वेदान्तयोर्न विशेषः, तथाप्यत्रान्यप्रसिद्धमार्गेणैव व्यवस्थापयामि।

न्यायनये वस्तुनोऽनुकूलतया वेदनाजन्य आत्मवृत्तिविशेषगुणः सुखं लौकिकमेव। तच्च पञ्चमषष्ठाष्टममतेषु परिगृह्यत इति तेषां वर्णितपदार्थसहचारात् प्रतीयते। तथा चाद्यमतत्रयेऽलौकिकस्यान्येषु पञ्चसु मतेषु लौकिकस्यानन्दस्यानुभवः। तत्रापि कुत्रचिदलौकिकत्वव्यवहारस्तूपाये शब्दार्थयोस्तद्भावनायाञ्च वर्तमानालौकिकत्वप्रयुक्तो भाक्तः, न तु वस्तुतः, तदलौकिकत्वस्याप्रसिद्धेरसमन्वयाच्च।

वस्तुत आदिमेष्वपि त्रिषु लौकिकस्य चेतोवृत्तिरूपस्यैव सुखस्यानुभवो जायात्। असमाहितचेतसामलौकिकात्मस्वरूपानन्दानुभवेऽनधिकारात् शास्त्रयुक्तिविरोधाच्चेत्युक्तप्रायमेव। सहृदयहृदयं रसास्वादानन्दानुभवे तस्य विलक्षणसामग्रीजन्यत्वे आनन्दस्य लौकिकसुखान्तरवैलक्षण्ये सातिशयत्वे च साक्षिभवदपि, अपरिचितस्यानन्दगतालौकिकत्वस्यानुभवे कथं साक्षि स्यात्? **पण्डितराजस्तु अभिनवगुप्तपादाचार्याणां** काव्यनाटकादिभ्य आत्मानन्दानुभवाभिनिवेशं पश्यन् श्रुतिमप्युदाजहार। वस्तुतः काव्यरसस्य रस्यमानतासारत्वेन बहुभिर्वर्णनादास्वाद्यता विद्युदुद्योतवदस्थिरा वृत्तिरूपैव। श्रुतिप्रतिपाद्य आत्मरूपोऽनुभवो रसः, नानुभाव्यः। आनन्दं रसं प्राप्य स्वयमानन्दो भवति, आनन्दाकारवृत्त्या तु लौकिक्या जीव आनन्दीभवति। लौकिकस्य लौकिक एवानन्द इति आनन्दीपदेन श्रुतिः सूचयति, अलं दिग्दर्शनातिरेकेण।

**ख्यातेरवसरः**

प्रदर्शितासु समासु रसास्वादप्रक्रियास्वानन्दानुभवस्य समत्वं दधानासूपाये उपेये वा ज्ञानेऽवश्यं भ्रमत्वम्। भ्रमसम्पादिका च सर्वत्र सहृदयतोल्लसिता काव्यार्थभावना समाना, पञ्चमादीनां प्रक्रियाणामुपेये ज्ञाने भ्रमत्वम्। आद्येषु चतुर्षु मतेषूपायभूत एव ज्ञाने भ्रमत्वम्। तथाहि—एते आचार्याः काव्यसमर्पितां शकुन्तलादिनायिकां सामाजिकवृत्तेः स्वनायिका-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विषयकरतेः साधारणीकरणापरपर्यायभावनाविशेषमहिम्नाऽऽलम्बनतां नीत्वा शृङ्गाररसेनाभिसिञ्चन्ति सामाजिकान्। स्वशृङ्गारविभावत्वञ्च स्वविशिष्टत्वम्, वैशिष्ट्यञ्च अप्रमात्वप्रकारकनिश्चयविशेष्यत्वाभाववविशिष्टं यत् स्वागम्यत्वप्रकारकं ज्ञानं तद्विशेष्यत्वाभाववत्त्वम्, स्वरत्यालम्बनत्वञ्चेति सम्बन्धद्वयेन। यद्विषयिणी रतिः स्वस्मिन् वर्तते, यस्याञ्चेयमगम्येति बुद्धिर्नोदेति, स वै विभाव इति संक्षिप्तः सरलार्थः।

यथाऽन्यत्र भ्रमस्थले शुक्तिविशेष्यांशस्य ज्ञानं न भवति, सामान्यांशस्तु ज्ञायते, तथाऽत्र साधारणीकरणादिव्यापारद्वारा स्वनायिकामपेक्ष्य शकुन्तलायां यो विशेषो दुष्यन्तरमणीत्व-शकुन्तलात्वातीतत्व-कण्वकन्यात्वादिः स तिरोधत्ते, कान्तात्वेन च स्फूर्यमाणा स्वविभावत्वमुपगता शकुन्तला रसोत्पादहेतुरिति शकुन्तलायां विभावत्वभ्रमाधीनो रसास्वाद इति तेषां दर्शनम्। अन्येषां मत उपेयभूते रसे रसास्वादे वा ज्ञाने स्फुटं भ्रमत्वम्। नटे दुष्यन्ताभेदस्य सामाजिकात्मनि वा दुष्यन्ताद्यभेदस्यातीतस्यान्यनिष्ठस्य च शकुन्तलादिरत्यादेर्नटे सामाजिकात्मनि वावगाहनात्।

ख्यातिः—

भ्रमस्थले ख्यातिनाम्ना दार्शनिकज्ञानप्रक्रिया प्रसिध्यति, तत्र काचित् ख्यातिप्रक्रिया काव्यसमर्पितनायिकादिषु विभावत्वप्रत्ययमालम्ब्य समनुयन्ति।

(१) तत्र वैयाकरणसिद्धान्तलघुमञ्जूषायां सम्यक् सप्रमाणमुपपादिता सत्ख्यातिः। एनां तत्रासतोऽपि भानभङ्गीकृत्यासत्ख्यातिमपि वक्तुं शक्ष्यन्ति। क्वचित् कदाचित् सतः ख्यातिर्भानं सत्ख्यातेरर्थः।

(२) विज्ञानवादियोगाचारविवृत्ताऽऽत्मख्यातिर्द्वितीया। आत्मनो बुद्धेः, बुद्धिसतोर्वा वस्तुनो बहिः ख्यातिर्ज्ञानमर्थः। आन्तरस्य बाह्यतयाख्यानात् केचनान्यथाख्यातिमेनां व्याचक्षते।

(३) नैयायिकानामन्यथाख्यातिः, शुक्तेः रजततया भानम्। अत्र ज्ञानलक्षणासन्निकर्षोपयोगः।

(४) सांख्यसृष्टा सदसत्ख्यातिः, शुक्ताविदं रजतमिति प्रत्यक्षं भ्रमः। असन्निकृष्टस्य दूरे सतो रजतस्यासतश्च रजतसम्बन्धस्य भानमित्यर्थः।

(५) वेदान्त्युपबृंहिता अनिर्वचनीयख्यातिः, इदं रजतमिति भ्रमप्रत्यक्षम्। प्रत्यक्षे चासन्निकृष्टं न भासते, अत्र च रजतं भासते, अतो नूतनं समुत्पन्नं च रजतं भासत इति अङ्गीकार्यम्। इदञ्च नूतनं रजतं न सत्, शुक्तिज्ञानेन बाध्यत्वात्। सतश्च बाधायोगात्। नाप्यसत्, असतः शशशृङ्गादेरभानादस्य च भासमानत्वात्। सत्त्वेनासत्त्वेन च निर्वक्तुं न शक्यत इति अनिर्वचनीयं रजतम्, तस्य भानमिति भावः।

(६) अख्यातिरेव ख्यातिः, अख्यातिर्भ्रमज्ञानमनङ्गीकुर्वाणानां व्यवहारे भ्रमत्वं मन्वतां मीमांसकप्राभाकराणां षष्ठी। इदं रजतमिति भ्रमस्थले अंशद्वयम्—१. इदम्, २. रजतम्। प्रथमं सन्निकृष्टं प्रत्यक्षम्, द्वितीयं रजतमसन्निकृष्टं चाकचिक्यादिना स्मर्यते। प्रत्यक्षं स्मृतिश्च ज्ञानद्वयं प्रमा। किन्तु दोषवशाज्ज्ञानयोर्विषययोश्च भेदाग्रहान् प्रवृत्तिः।

सर्वत्र चासु यस्मिन् भ्रमस्तस्य विशेषधर्मस्यादर्शनं साधारणधर्मस्य च दर्शनम्। लोभातिशय-निद्रा-मनोऽनवधानता-भावनाविशेषानभ्यस्ततताप्रभृतिषु कस्यचिद् दोषस्य समान-

२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तयाऽपेक्षा । यथा शुक्तिरजतभ्रमस्थले शुक्तित्वनीलपृष्ठत्वादेरदर्शनं साधारणचाकचिक्यादेर्दर्शनम्, रजततृष्णा, रजतस्मृतिः, रजतस्यासन्निधानं च, तेन इदं रजतम् इति भ्रमः ।

प्रथमा स्फुटं कुत्रचिन्न गृहीता । किन्तु रसगङ्गाधरे 'परे तु' मते सर्वा सामग्री प्रदर्शिता । सन्निकर्षमात्रं न प्रदर्शितम् । तत्र प्रथमायाः ख्यातेः परिग्रहः प्रतिभाति, अन्यथाऽपि तस्य व्याख्यानं प्रदर्शितमेव । आत्मख्यातिर्द्वितीयाऽपि बुद्धिसतो भानाद् वैयाकरणमतेनापि प्रदर्शिता । अन्यथाख्यातिर्भट्टलोल्लटमते गृहीता ।

तत्र साधारणीकरणादिना शकुन्तलादेर्दुष्यन्तरमणीत्वादिविशेषस्यादर्शनम् । साधारणस्य कान्तात्वस्य दर्शनम्, सहृदयतोल्लसिता काव्यार्थभावना दोषश्चेति सर्वाभिः ख्यातिभिरपेक्ष्यते ।

एषा च सर्वापेक्षिता सामग्री स्वकान्तायां सतः शकुन्तलादाववर्तमानस्यापि स्वविभावत्वस्य सामाजिकेषु साक्षात्कारं जनयतीति प्रथमां सत्ख्यातिं मन्वते । बुद्धौ वासनारूपेण वर्तमानस्य स्वविभावत्वस्य बुद्धिस्थशकुन्तलादौ प्रत्यक्षं सामाजिकानामनया सामग्र्येत्यात्मख्यातिः । अविभावरूपायां शकुन्तलायां ज्ञानलक्षणेन सन्निकृष्टस्य स्वविभावत्वस्य शकुन्तलायां सामाजिकानामालोचनम् अविभावस्य विभावतया प्रत्यक्षमन्यथाख्यातिः । यत्र कुत्रापि सतः स्वविभावत्वस्य शकुन्तलायाश्च सतस्तत्सम्बन्धस्य च ख्यातिः सदसत्ख्यातिः । अनया सामग्र्या अनिर्वचनीया सामाजिकान्तरङ्गे प्रकटिताङ्गा शकुन्तला इङ्गन्ती विभाविता सती रसास्वादहेतुः । भावनाविभिन्नकाले न भासमानामसतीं सामाजिकरतिमुद्बोधयन्ती नासती सा शकुन्तला अनिर्वचनीयेति अनिर्वचनीयख्यातिः ।

प्रभाकरस्याख्यातिस्तु एवं विव्रियेत—पूर्वोक्तसामग्रीसत्त्वे स्वविभावस्य स्मृतिः । शकुन्तलायां स्वविभावभेदो न गृह्यते, एतावतैव शकुन्तलाभिनयेन सामाजिकरतेरुद्बोधः । न शकुन्तलायां स्वविभावत्वख्यातेरावश्यकता, अख्यात्यैव सामाजिकानां रसास्वादनिर्वाहः ।

( ७ ) एका प्रत्यभिज्ञादर्शनस्य अपूर्णख्यातिः क्वचिदुपलभ्यते, सम्यगुपपादनं तु तस्या नाद्याप्युपालभे, रजते रजतस्य ख्यातिः सम्पूर्णख्यातिः, शुक्तिशकले रजतस्य ख्यातिरपूर्णा । केषाञ्चिदवयवानां तत्र सत्त्वात् । यद्यपीयं सामग्री रामानुजदर्शनेऽपि वर्ण्यते, किन्तु तत्रास्याः ख्यातेश्चर्चा नास्ति, प्रत्यभिज्ञादर्शनेऽपि क्वचिदेव दृष्टा । अनया ख्यात्या सामाजिकानां शकुन्तलादावपूर्णस्वविभावपरिज्ञानमिति रतेरुद्बोधः ।

एवं शकुन्तलादौ सामाजिकविभावत्वोपपत्तये ख्यातिप्रकारान् प्रादर्शयम् । उपेये रसास्वादेऽप्येवं ख्यातीनां समन्वयः सम्भवति, तथापि लेखविस्तरभिया कोमलमतीनां काव्यविहरणशीलानां नातिरञ्जनजनकञ्चेति परित्यजामि । रसगङ्गाधरे द्वे ख्याती स्फुटम्, अन्या अस्फुटं प्रदर्शिताः । तदध्ययनाधमर्णस्य मम ऋणविमुक्तय एतावदावश्यकं तदाकार्षम् ।

इत्थं स्वादविवेचनेन रसिकः सत्यं मुदं प्राप्स्यति
रम्यं वस्तु न दूषयेन्मम मतिः स्पर्शो न दोषो यतः ।
गङ्गावारि नु काशिकं शवगतिः पापारि पुण्यौषधं
तृप्तोऽयं परिवेष्य वः पुर इदं विद्याविनोदोद्यतः ॥
बुधजनोदधिवारिसमुज्ज्वलं जयशिवेति वचःपवनार्चितम् ।
सकलशास्त्रसुवर्णरसप्लुतं क्षितितलं मम काशिकमर्थितम् ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# व्यञ्जनावृत्तिसमीक्षा

डॉ० रामप्रसादत्रिपाठी
प्राचीनव्याकरणदर्शनागमविभागाध्यक्षः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये ।

निरूपणीया विषयाः—

१ ●व्यञ्जनायाः स्वरूपम् ।
२ ●व्यञ्जनायां प्रमाणम् ।
३ ●अस्याः स्वीकारे कलाटीकाकृतां श्रीबालभट्टानां युक्तयः ।
४ ●अस्याः स्वरूपनिर्वचने श्रीनागेशभट्टानां विलक्षणं कृत्यम् ।
५ ●उक्तविषये समन्वयप्रकारः ।
६ ●वाक्यनिष्ठा शक्तिरपि ज्ञातैव बोधहेतुः ।
७ ●व्यञ्जनायाः स्वरूपसत्या हेतुत्वे कलाकृत्सम्मतिः ।
८ ●वस्तुतस्तज्ज्ञानस्य हेतुत्वेऽपि न कश्चन विरोधः ।
९ ●व्यञ्जनालक्षण आलङ्कारिकाः ।
१० ●प्रस्थानरत्नाकरकृतां मतेऽस्या लक्षणम् ।
११ ●रत्नप्रभाकृत्सम्मतमेतल्लक्षणम् ।
१२ ●अत्र निष्कर्षः ।

**अथ व्यञ्जनायाः स्वरूपम्**

शिष्यानध्याप्य सायंकाले गुरुर्वक्ति—'अर्कोऽस्तं गतः' इति । वाक्यनिष्ठशक्तिसम्बन्धेन सूर्यकर्तृकं भूतकालिकमस्तंगमनमिति बोधो भवति । परन्तु तद्बोधेन सहृदयानां मनसि न भवति विश्रान्तिः, अपि तु अस्माभिः सर्वैरपि सन्ध्योपासनं कर्तव्यमिति अस्य द्वितीयार्थस्य बोधेनैव विश्रान्तिर्लभ्यते । स चायं द्वितीयोऽर्थ उक्तवाक्येन सम्बद्ध एव बोध्यते, असम्बद्धो वा ? न तावदन्त्यः पक्षः, असम्बद्धार्थबोधनेऽतिप्रसङ्गो दुर्निवारः स्यात् । कस्याप्यर्थस्य बोधोऽस्तु नाम, को वारयेत् ? नापि प्रथमः, सम्बन्धस्याद्यावव्यज्ञातत्वादिति चेत्, उच्यते—यो हि सम्बन्धो भवद्भिरज्ञातः, स व्यञ्जनाभिधोऽस्तीति ज्ञायताम् । शब्दतदर्थयोरयं सम्बन्धो द्योत्यद्योतकभावव्यङ्ग्यव्यञ्जकभावशब्दाभ्यामपि सङ्कीर्तितो भवति । अयं च सम्बन्धो वाच्यवाचकभावरूपशक्तिसम्बन्धात्, लक्ष्यलक्षणभावरूपलक्षणासम्बन्धाच्च विलक्षण एवास्ति ।

शक्यार्थसम्बद्धः, असम्बद्धो वा नानाविधोऽर्थोऽनेन सम्बन्धेन बोध्यते । व्याकरणदर्शनस्य त्वयं सम्बन्धः प्राणभूत एवास्ते । एनमन्तरा व्याकरणशास्त्रसर्वस्वभूतस्फोटतत्त्वस्य प्रकाशनमेव न भविष्यति । उक्तञ्च महर्षिणा व्याडिना—

शब्दस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।
स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते[1] ॥

श्रीभर्तृहरिणाऽपि "प्रत्येकं व्यञ्जका वर्णा भिन्ना वाक्यपदेषु ये"[2] इति ।

१. वा० प० १।७६—हरिवृषभटीकायामुद्धृतेयं कारिका । २. वा० प० १।८८ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत्र प्रथमयोक्त्या प्राकृतध्वनेः शब्दस्य (स्फोटस्य) व्यञ्जकत्वम्। वैकृतध्वनेः स्फोटस्य स्थितिविशेषहेतुत्वं प्रतिपाद्यते। द्वितीययोक्त्या प्रत्येकं वर्णाः पदस्फोटं वाक्यस्फोटं च व्यञ्जयन्ति। अत्र वर्णपदेन प्राकृतध्वनिरेव गृह्यते। अत एव चोक्तम्—"प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते"[1] इति। यतः प्राकृतध्वनिः स्फोटस्य व्यञ्जकः, अतस्तदीयो मात्राद्विमात्रा-त्रिमात्रात्मकः कालः स्फोटस्यारोपितः कालो भवति, स्फोटस्तु वस्तुतो दिग्देशकालाद्यनव-च्छिन्न एव, विभुत्वोऽपरिमितत्वादनवच्छिन्नत्वाच्च।

आभ्यामुक्तिभ्यां ध्वनेर्व्यञ्जकत्वं सुस्पष्टमायाति, अतश्च ध्वनिगता व्यञ्जनावृत्तिः स्वीकार्या। अनया व्यञ्जनया स्फोटस्य स्वरूपमभिव्यक्तं भवति। अतः स्फोटरूपव्यङ्ग्येन सह ध्वनिरूपव्यञ्जकस्य व्यङ्ग्यव्यञ्जकभावसम्बन्धः सुसम्पन्नो भवति। परन्त्वनया व्यञ्जनया पदार्थबोधो वाक्यार्थबोधो वा न भवति। अर्थस्य बोधस्तु स्फोटेनैव प्रकाशितेन भवतीति जिज्ञासायां तदपि तत्त्वं शाब्दिकैरभ्युपेयत एव—स्फोटोऽप्यर्थस्य व्यञ्जको भवतीति।

**व्यञ्जनायां प्रमाणम्**

प्रमाणं चात्र "उपसर्गाः क्रियायोगे"[2] इति सूत्रीयं भाष्यम्। तत्र हि क्रियायोग इत्यनेन क्रियया सहोपसर्गस्यायं व्यङ्ग्यव्यञ्जकभावसम्बन्ध एव स्वाभिप्रेतो भगवतः सूत्रकारस्य; न तु वाच्यवाचकभावः, स तु क्रियया सह धातोरेव[3]। किञ्च, "भूवादयः" इति सूत्रीयं भाष्यमत्रास्ति प्रमाणभूतम्। तथाहि—"क्रियाविशेषक उपसर्गः, पचतीति क्रिया गम्यते, तां प्रत्युपसर्गो विशिनष्टि" इत्युक्तं भाष्यकृता। उद्द्योतकारेण चैवं व्याख्यातम्—'क्रियाविशेषक उपसर्ग इति—यथाऽन्वयव्यतिरेकाभ्यां प्रत्ययोऽर्थबोधकः, तथा ताभ्यामेव क्रियागतविशेषद्योतक उपसर्गः, क्रियावाची धातुरेवेति भावः'[4] इति। अत्र क्रियाविशेषक उपसर्गः, क्रियागतविशेषद्योतक इत्यर्थः। एवञ्च क्रियाविशेषस्य द्योत्यता, उपसर्गस्य द्योतकता स्पष्टं लभ्यते। क्रियोपसर्गयोः द्योत्यद्योतकभावसम्बन्धः सुतरामनुभूयते।

किञ्च, "भूवादयः" इति सूत्रस्य 'क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः'—इत्यर्थे क्रिया-वाचिन इत्यंशो व्यञ्जनावृत्तिमहिम्नैव लब्धः। अन्यथा वादयो भ्वादयो धातुसंज्ञा इति प्रथमकक्षा, ततश्चादिशब्दस्य प्रकारवाचितया वाप्रकारा भ्वादयो धातुसंज्ञा इति द्वितीयकक्षा, ततः प्रकारशब्दस्य सदृशार्थकत्वेन वासदृशा भ्वादयो धातुसंज्ञा इति तृतीया कक्षा, तत्र प्रतियोगितावच्छेदकव्यापकीभूतधर्मेण सादृश्यं गृह्यत इति नियमबलेन क्रियावाचिनो भ्वादय इत्यादि लभ्यते, प्रतियोगितावच्छेदकत्वव्यापकीभूतेन क्रियावाचित्वेन सादृश्यस्य ग्रहणात्।

इदं च क्रियावाचित्वं न शक्त्या लब्धुं शक्यम्, वादिपदस्य तत्र शक्तेरभावात्। नाऽपि लक्षणया प्राप्तव्यः, लक्षणायाः शाब्दिकमतेऽभावात्। नाऽपि शक्यतावच्छेदकस्यारोपः कर्तुं शक्यः, मुख्यार्थस्य बाधितस्थल एव तदौचित्यात्। प्रकृते वा सदृशरूपो वादिशब्दस्य मुख्योऽर्थस्तस्य भ्वाद्यर्थेऽन्वयबाधो नास्तीति कृत्वा व्यञ्जनावृत्तिरेव शरणम् ईदृशार्थबोधने। अयमर्थो न प्रमाविषयतामधिरोहति इति तु न वाच्यम्, भगवता भाष्यकृतैवास्यार्थस्य

---

१. म० भा० प्र० उ० १।३।१, २. म० भा० १।४।५९।
३. म० भा० १।३।१ ४. म० भा० १।३।१।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महता संरम्भेण बोधितत्वात्[1]। अपि चात्रैव सूत्रे शब्दतः स्फुटं व्यञ्जनायाः समर्थनं क्रियते भाष्यकारेण। तथा हि—"अथवा नान्तरेण क्रियां भूतभविष्यद्वर्तमानकाला व्यज्यन्ते। अस्त्यादिभिरपि भूतभविष्यद्वर्तमानकाला व्यज्यन्ते[2]" इति। अत्र 'व्यज्यन्ते' इत्यस्य व्यञ्जनया बोध्यन्ते इत्यर्थः सुस्पष्टं प्रतीयते।

एवमेव "आरोपितत्वं नञ्द्योत्यम्[3]", "द्योतकाः प्रादयो येन[4]" इत्यादिकया भट्टोजिदीक्षितोक्त्या, वैयाकरणसिद्धान्तलघुमञ्जूषायामेतत्समर्थने श्रीनागोजिभट्टोक्त्या[5], किञ्च "व्यर्थं सद् यद्यत्सूत्रं पदं वा ज्ञापकमुच्यते, तत्सर्वं व्यञ्जकमेव शब्दप्रमाणपर्यालोचनायाम्" इति भैरवमिश्रोक्त्या[6] चैषा व्यञ्जनाख्या वृत्तिः प्रतिपदं समाद्रियते शाब्दिकैः।

**अस्याः स्वीकारे कलाटीकाकृतां श्रीबालंभट्टानां युक्तयः**

लघुमञ्जूषायाः कलाटीकायां श्रीबालंभट्टा एतत्समर्थने बह्वीर्युक्तीरुपस्थापयामासुः। तथाहि—"यत्तु 'गतोऽस्तमर्कः' इत्यादौ न व्यञ्जना प्रतिष्ठां लब्धुं योग्या, एकसम्बन्धिज्ञानादपरसम्बन्धिस्मरणवत् स्मृतिरेव तं तमर्थं विषयीकरिष्यति–इति, तन्न रमणीयतामर्हति, उक्तवाक्यश्रवणोत्तरं सन्ध्यावन्दनं कर्तव्यमिति मया स्मृतम् इत्यनुव्यवसायो न भवति, तत्ताया उल्लेखोऽपि न भवति, स्मृतौ तु तत्तोल्लेख आवश्यकः। इदं पदं वाक्यं वा एतदर्थस्य न वाचकम्, न लक्षकम्, नाऽपि स्मारकम्, अपि तु व्यञ्जनया बोधकमिति प्रामाणिकव्यवहारेण शक्त्यादिव्यतिरिक्ताया व्यञ्जनाया अभ्युपगमाच्च। मुख्यार्थासम्बद्धस्याप्यनया बोधदर्शनाच्च"[7] इति।

**अस्याः स्वरूपनिर्वचने श्रीनागोजिभट्टानां विलक्षणं कृत्यम्**

सिद्धान्तलघुमञ्जूषायामेतत्स्वरूपनिरूपणावसरे 'संस्कारविशेषो व्यञ्जना' इत्यूचिरे श्रीनागोजिभट्टाः। संस्कारे विशेषस्त्रिधा उक्तस्तैः। तथा च—यथा लक्षणाया मुख्यार्थबाधग्रहपूर्वकमेव बोधो भवति, तथात्र न भवति, मुख्यार्थस्य बाधग्रहो भवतु वा न भवतु, अनया तु बोधो जायत एवेति मुख्यार्थबाधग्रहनिरपेक्षबोधजनकत्वं संस्कारे प्रथमो विशेषः। लक्षणया तु मुख्यार्थसम्बद्धस्यैवाप्रसिद्धस्यैव वा बोधो भवति, अनया तु स नियमो न समादृत इति मुख्यार्थसम्बद्धासम्बद्धसाधारणप्रसिद्धाप्रसिद्धार्थविषयकत्वमुक्तसंस्कारे द्वितीयो विशेषः। उक्तसंस्कारस्योद्बुद्धानुद्बुद्धत्वसाधारण्ये सर्वत्रैव सर्वेषामनया बोधः कथं न भवति, इत्यतिप्रसक्तिवारणाय वक्त्रादिवैशिष्ट्यज्ञानस्यैतज्जन्यबोधे सहकारिताऽभ्युपेयत इति वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धत्वमपि तत्र तृतीयो विशेष[8] इति।

अत्रोच्यते—एषा संस्कारविशेषरूपा व्यञ्जना न्यायदर्शने समवायसम्बन्धेनात्मनि तिष्ठेत्, वेदान्तदर्शने तादात्म्यसम्बन्धेनान्तःकरणे निवत्स्यतीति शब्दतदर्थयोरुभयोरप्यविद्य-

---

१. म० भा०, १।३।१। २. म० भा० तदेव। ३. वै० भू० सा० कारि०—४०।
४. वै० भू० सा० कारि०—४२। ५. वै० सि० ल० म०, र० प्र० युता, पृ० १३३।
६. भै० परिभाषे० टी०—१ प्रक०।
७. वै० सि० ल० म०, क० टी०, पृ० १६३।
८. वै० सि० ल० म०, र० प्र० युता, पृ० १३३।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मानतया तयोरस्याः कथं सम्बन्धता स्यात् ? सम्बन्धस्योभयवृत्तित्वनियमात् । अस्यां परिस्थितौ न्यायशास्त्राभ्युपगताया इच्छायाः शक्तित्वाङ्गीकारे तस्याः पदपदार्थयोः सम्बन्धत्वाभावरूपं दूषणं पूर्वं भवद्भिरेवोद्भावितं तार्किकाणां शिरस्सु[1], स एव दोषोऽधुनोक्तसंस्कारस्य वृत्तित्वसमर्थकानां भवतां शिरस्यापतितः कथं दूरीकर्तुं शक्य इत्यहो विलक्षणं कृत्यं भवतां मान्यवराणाम् ।

**उक्तविषये समन्वयप्रकारः**

व्यङ्ग्यव्यञ्जकभावसम्बन्धरूपैव व्यञ्जना मन्तव्या, संस्कारविशेषस्य तु तज्ज्ञापकतया तस्मिन् ज्ञापके हेतौ व्यञ्जनापदस्य व्यवहारो लक्षणयाऽप्रसिद्धशक्त्या वा । अनुभूयते च क्वचित् कार्ये क्वचिच्च कारणे एकस्यैव शब्दस्य प्रयोगः । यथा शक्यसम्बन्धरूपे कारणे लक्षणापदस्य व्यवहारो भवति न्यायशास्त्रे, शक्यताऽवच्छेदकारोपात्मके तत्फले लक्षणाशब्दस्य प्रयोगो भवति व्याकरणशास्त्रे । उच्यते च स्वयमपि "**द्योतकत्वं च क्वचित् समभिव्याहृतपदीयशक्तिव्यञ्जकत्वम्**"[2] इति । एतेनोक्तस्य व्यङ्ग्यव्यञ्जकभावसम्बन्धस्य व्यञ्जनापदेन ग्रहणं शब्दस्थले स्पष्टं सूचितमस्ति । अपि च यथा दीपे प्रकाशकत्वशक्तावपि घटादिभिः संयोगसम्बन्धे सत्येव तस्याश्चरितार्थता वक्तुं शक्या, नान्यथा, तथैव शब्दे व्यङ्ग्यव्यञ्जकभावसत्त्वेऽप्यर्थेन सह तद्भिन्नस्य तादृशसंस्कारविशेषविषयत्वस्य सत्तयैव तच्चरितार्थता । उक्तञ्च—"**उपकारः स यत्राऽस्ति धर्मस्तत्रानुगम्यते**[3]" इति ।

नन्वर्थबोधात् प्राक् कथमस्य व्यङ्ग्यव्यञ्जकभावसम्बन्धस्य ज्ञानम् ? एतज्ज्ञानमन्तरा च कथमर्थविशेषविषयकः शाब्दबोध इति चेत्, अत्रोच्यते—वाच्यवाचकभावसम्बन्धवदस्याप्यनादितया दोषाभावात् । एतच्च पदविषयकव्यञ्जनाविषये, वाक्यगता व्यञ्जना तु स्वरूपसती एव शाब्दबोधजनिका, वाक्यनिष्ठशक्तिसम्बन्धवत्[4] । अत एवोक्तं कलाकृद्भिः—"**व्यञ्जना स्वरूपसती हेतुः**[5]" इति ।

**वाक्यनिष्ठा शक्तिरपि ज्ञातैव बोधहेतुः**

परमार्थदृष्ट्या वाक्यगता शक्तिरपि ज्ञाता सत्येव शाब्दबोधं जनयतीत्येव सिद्धान्तः[6] । अत्रेयमाशङ्का जागर्ति यद् वाक्यार्थस्य वाक्यशक्त्यैव ज्ञातत्वे तस्यापूर्वत्वं भज्येतेति चेत्, अत्रेत्थं पर्यालोच्यते—पदार्थांशे पदस्य शक्तेः सत्त्वेन पारिशेष्यादन्वयांश एव वाक्यशक्तिः पर्यवस्यति । तत्रान्वयसामान्ये सा शक्तिः, अन्वयविशेषस्तु समभिव्याहाररूपाकाङ्क्षाज्ञानेनैव लभ्य इत्यन्विताभिधानवादिमतवदेतस्योपपत्तिः[7] ।

---

१. वै० सि० ल० म०, र० प्र० युता, पृ० १७ । शक्तिनिरू० ।
२. वै० सि० ल० म०, व्य० निरू० ।
३. वा० प०—३।३।६ ।
४. यदि च पदशक्तिः पदार्थांशे ज्ञाता, अन्वयांशे चाज्ञातोपयुज्यत इति तु शक्तिवादः, तदा ममापि वाक्यस्य शक्तिरज्ञातैवोपयुज्यत इति वादाभ्युपगमस्तुल्य इति भावः । वै० भू० सा०, स्फो० निरू०, कारि०—६६, पृ० २६७ ।
५. वै० सि० ल० म०, क० टी०, पृ० १६१ । ६. वै० भू० सा०, कारि०—६७ ।
७. वै० सि० ल० म० टिप्पणी, पृ० ३९४–९५ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदि तु समुदितार्थे विशिष्टवाक्यस्यैव प्रथमं शक्तिग्रहः, पश्चात्तत्तत्पद आवापेनोद्वापेन च तद्ग्रह इति शाब्दिकानां राद्धान्तेनोक्तव्यवस्था[1] न सम्भवतीति उच्यते, तदा श्रीनागोजिभट्ट-सिद्धान्तमनुसृत्य मध्ये स्मृतिरूपाया वाक्यार्थोपस्थितेरसम्भवेन व्यापारतयानपेक्षणेन[2] चेष्टं साधनीयम्, स्फुटीकृतश्चायमाशयो दर्पणकृताऽपि[3]।

वाक्यार्थज्ञाने पदार्थज्ञानं व्यापार इति भाष्यमतं तु प्रक्रियाकल्पे पदार्थोपस्थितिविषया जायमाने वाक्यार्थबोध एवेति न तत्पक्षाद् विरोधः। वाक्यनिष्ठशक्तिज्ञानेन वाक्यार्थस्य स्मरणमेव कुतो न स्वीक्रियते ? एकसम्बन्धिज्ञानमपरसम्बन्धिनः स्मारकमिति नियमादिति तु न शङ्कनीयम्, एकसम्बन्धिज्ञानं ह्युद्बुद्धसंस्कारमात्रेणापरसम्बन्धिनं स्मारयति, अत एव धूमज्ञानेन व्याप्तिज्ञानसहकृतेनाग्नेरनुमितिरेव भवति, न त्वेकसम्बन्धिज्ञानविधयाऽपर-सम्बन्धिनोऽग्नेः स्मृतिः।

एवमेवात्र वाक्यशक्तिपक्षेऽपि 'सैन्धवमानय' इत्यादिनानार्थकस्थल एकतरार्थविषयक-बोधोत्पत्तये तात्पर्यज्ञानस्यापि सहकारितया स्वीकारेणोक्तशङ्का नोपस्थातुमर्हति। शब्दानां स्वरूपेऽर्थेऽपि शक्तिरिति शाब्दिकसिद्धान्तेन 'घटोऽस्ति' इत्यादिस्थलेऽप्यर्थद्वयविषयकबोध-सम्भावनायां सर्वत्रैव तात्पर्यग्रहस्य हेतुतयाऽपेक्षितत्वेन संस्कारमात्रस्य हेतुत्वाभावान्नास्ति वाक्यार्थस्य स्मृतित्वाशङ्का। एवं च वाक्यनिष्ठशक्तेर्ज्ञानस्य हेतुत्वे सिद्धान्तिते वाक्यनिष्ठ-व्यञ्जनाया अपि ज्ञानमेव वाक्यार्थबोधे हेतुत्वेन स्वीकरणीयम्।

**व्यञ्जनायाः स्वरूपसत्या हेतुत्वे कलाकृत्सम्मतिः**

व्यङ्ग्यार्थस्यानैयत्येन शब्देन सहानादिसम्बन्धासम्भवेन संस्कारविशेषस्यैव व्यञ्जनात्व-पक्षेण च पदे वाक्ये च सर्वत्र स्वरूपसती एव व्यञ्जना हेतुः। एतावता शाब्दबोधात् प्राक् कथं व्यङ्ग्यव्यञ्जकभावरूपसम्बन्धस्य ज्ञानमिति शङ्काया उत्थानमेव न भवति। अत एवोक्त-मनुपदमेव व्यञ्जनायाः स्वरूपसत्या हेतुत्वं कलाकृद्भिः—'शक्तिरेतज्जन्मगृहीतेव बोधहेतुः, व्यञ्जना तु जन्मान्तरगृहीताऽपि' इत्यपि शक्तेरस्या भेदकत्वम्। इदमेवाभिप्रेत्य व्यञ्जना स्वरूप-सती हेतुरिति प्रवादः[4]। अतिरिक्ताया व्यञ्जनायाः पदार्थान्तरत्वस्य स्वरूपसत्याऽन्वयबुद्धौ तद्धेतुतायाः प्रमाणाभावेनासत्त्वाच्चेति श्रीजगदीशतर्कालङ्कारमतेनाऽप्येतत्प्रत्येतुं[5] शक्यते यद् व्यञ्जनावादिमते स्वरूपसत्या एव तस्याः शाब्दहेतुत्वस्याभ्युपगम इति।

**वस्तुतस्तज्ज्ञानस्य हेतुत्वेऽपि न कश्चन विरोधः**

व्यङ्ग्यव्यञ्जकभावसम्बन्धस्य व्यञ्जनात्वमते तस्य ज्ञानं शाब्दबोधे हेतुतयाऽभ्युपेयते। यथा "लक्षणेत्थं भूताख्यान"[6] इति सूत्र उदाहृतस्य 'वृक्षं प्रति विद्योतते विद्युत्' इत्यस्य

---

१. वै० भू० सा०, स्फोटनिरू० कारि० ६७।
२. वै० सि० ल० म०, र० प्र० युता, पृ० ४०५।
३. वै० भू० सा०, द० टी०, कारि–६७।
४. वै० सि० ल० म०, क० टी०, पृ० १६१।
५ शब्दशक्तिप्रकाशिका, कारि०–२४, पृ० १७६।　　६. पा० सू०–१।४।९०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वृक्षसम्बन्धिविद्योतनमित्यर्थः प्रादर्शि मनोरमाकृता[1]। तत्र वृक्षविद्योतने शक्यार्थौ लक्ष्यलक्षणभावसम्बन्धश्च प्रतेर्द्योत्योऽर्थः, तस्य वृत्तिजन्योपस्थितेरभावे कथमन्वयबोधः स्यादिति तत्र व्यञ्जनाया ज्ञानमावश्यकम्।

एवमेव 'सर्पिषोऽपि स्यात्' इत्यत्र बिन्दुरूपेऽर्थेऽपिशब्दस्य व्यञ्जनावृत्तिः, तस्या ज्ञानेनैव बिन्दुरूपार्थस्योपस्थितिः, तद्विषयकः शाब्दबोधश्च। अपिशब्दस्य कर्मप्रवचनीयभेदे प्रक्रियापक्ष इदमेवोचितम्। ध्वनितं चैतत्—"अपिः पदार्थ" इति सूत्रव्याख्यावसरे सिद्धान्तकौमुद्याम्[2], लघुशब्देन्दुशेखरे[3] च।

किञ्च, शाब्दबोधे वृत्तिविशिष्टज्ञानस्य हेतुत्वं वदद्भिर्मञ्जूषाकारैरस्या ज्ञानस्य हेतुता स्पष्टं प्रतिबोधिता। अन्यथा लक्षणायाः शक्तिरूपत्वे व्यञ्जनायाश्च स्वरूपसत्या एव हेतुत्वे तत्र वृत्तिपदं निष्प्रयोजनं स्यात्, शक्तिविशिष्टज्ञानमेव हेतुतया वचनीयं स्यात्। अतश्च प्रकृतिप्रत्ययपदान्यतमशब्दस्थलेऽज्ञाताया वृत्तेरनुपयोगे ज्ञाताया एव व्यञ्जनाया हेतुता। अन्यत्र त्वस्तु नाम स्वरूपसत्याः कारणता इति विचारयन्तु सुधियः।

किञ्चानुमानेनार्थापत्त्या लक्षणाज्ञानेन वा एषा गतार्था इत्यभ्युपेयते न्यायदर्शनविद्भिः। ततोऽप्यायाति यदस्या ज्ञानमेव शाब्दं प्रतिकारणमिति। न हि ज्ञानस्य प्रतिविधानं ज्ञानाद् विजातीयेन कर्तुं शक्यते।

**व्यञ्जनालक्षण आलङ्कारिका:**

रसरूपस्यात्मनोऽभिव्यक्त्यर्थमङ्गीकृताऽऽलङ्कारिकैः स्वप्राणभूतेव व्यञ्जनाख्या शब्दवृत्तिः। एतस्या लक्षणमनेकत्र स्थलेषूल्लिखितं तदनुगामिभिः। यथा च काव्यप्रकाशटीकाकारेण श्रीवामनाचार्येण "व्यञ्जना च शक्तिलक्षणाद्यजन्यप्रतीतिजनकः पदादिगतो व्यापारः[4]" इत्युक्तम्। श्रीहरिदासभट्टाचार्येणाऽपि वाच्याविभिन्नार्थप्रतिपादकत्वे सति वृत्तित्वमिति लक्षणमुक्तम्[5]। वस्तुतः शब्दमात्रेण भिन्नमर्थतः पूर्वचर्चितमेवैतल्लक्षणम्। मूलग्रन्थत एवेदं लक्षणं लभ्यते। तथा च—

विरतास्वभिधाद्यासु ययाऽर्थो बोध्यतेऽपरः।
सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च॥ इति।

स्वकार्यसम्पादनेन शब्दस्य ज्ञानस्य क्रियायाश्च व्यापारः सकृदेव क्षीणसामर्थ्यो भवतीति कार्यान्तरार्थं पुनरन्यो व्यापारोऽपेक्ष्यत इति नियमेनाभिधादीनां निवृत्तौ सत्यां व्यञ्जनाख्यो व्यापार आश्रीयते। व्यञ्जन-ध्वनन-गमन-प्रत्यायनादिशब्दैरप्ययं व्यापारः सङ्कीर्तितो भवति[6]।

**प्रस्थानरत्नाकरकृतां मतेऽस्या लक्षणम्**

'लक्षणास्थले फलप्रत्यायिका, नियतशक्त्यनेकार्थस्थले विवक्षितातिरिक्तवाच्यप्रत्यायिका वृत्तिर्व्यञ्जना' इति स्थलभेदेन लक्षणद्वयमुक्तं प्रस्थानरत्नाकरे गोस्वामिश्रीपुरुषोत्तममहाराजेन[7]।

१. प्रौ० म० सि० कौ० कार० प्र० लक्षणेत्थं सूत्रम्।
२. वै० सि० कौ० कार० प्र०। ३. ल० श० शे० कारकप्रक०, अपिः पदार्थ० सूत्रम्।
४. का० प्र० २।१२, पृ० ६९।
५. सा० द० कुसु० टी०, २ परि०, पृ० ५। ६. सा० द० २।१२-१३, पृ० ५१-५२।
७. प्र० र०, प्र० परि०, पृ० ९५।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रत्नप्रभाकृत्सम्मतमेतल्लक्षणम्

"वक्त्रादिवैलक्षण्यहेतुका या प्रतिभाशालिनामन्यार्थधीस्तद्धेतुव्यापारत्वं व्यञ्जनात्वम्"[1] इति ।

अत्र निष्कर्षः

अलङ्कारशास्त्रोक्तं लक्षणं भेदघटिततया प्रतियोगिज्ञानापेक्षमिति गुरुशरीरम्, मदुक्तलक्षणापेक्षया । किञ्च, व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनमिति लक्षणेन लक्ष्ये स्वेतरभेदसाधने अंशतः सिद्धसाधनदोषोऽपि । किञ्च, शब्दतदर्थयोः सम्बन्धविशेषो व्यञ्जना नाम । स चावश्यं केनचिन्नाम्ना व्यपदेश्य इत्यादि मदूहितलक्षणेनैव पूरयितुं शक्यते ।

श्रीगोस्वामिकृतं लक्षणं त्वननुगमदोषग्रस्तमेवेति कथं समादरार्हं स्यात् ? तृतीयमपि रत्नप्रभालक्षणं यत्तत्पदघटितत्वेनाननुगतमेव । [ क्रमशः ]

---

१. ल० श० शे० कारकप्र०, 'अनभिहिते' इति सूत्रम् ।

● ● ●



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# सर्ववेदपारिषदं हीदं साहित्यशास्त्रम्

पं० वायुनन्दनपाण्डेयः, प्राध्यापकः,
साहित्यविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

पुराकाले यावन्तो वस्तुतत्त्वसमीक्षका आलोचका वा अभूवन्, ते सर्वे किमप्यमूलं नालेखिषुः। कमप्याचार्यं तद्ग्रन्थे वा प्रामाण्येनावसाय ते किमप्यवोचन्। 'नामूलं लिख्यते किञ्चित्' इति विदुषां गर्वोक्तिरासीत्। पदार्थपरीक्षणपटवो नागेशप्रभृतय आलोचका अपि महाभाष्यप्रामाण्येन स्वोक्तिं प्रमाणयन्ति। आलोचनामर्मज्ञा दोषज्ञाः पण्डितराजजगन्नाथप्रभृतयो ये न हि प्रामाणिकेन भवता परैरनुक्तं किञ्चिदुच्यते'[1] इत्याद्युक्त्या दीक्षितमाक्षिपन्ति, 'बाधे दृढेऽन्यसाम्यात् किं दृढेऽन्यदपि बाध्यताम्'[2] इति न्यायेन युक्तिसमक्षं शिथिलीकुर्वन्ति प्रतिवादिमतम्, तेऽपि मूलमवधार्यैवेति न तिरोहितं विपश्चिताम्। प्रायः सर्वत्र स्वमतं निरूप्य 'तदाहुर्मम्मटभट्टाः'[3] 'मम्मटभट्टा अपि एवमुपसमाहार्षुः'[4] इत्यादि निगदन्ति।

रसविषये नवरसातिरिक्तं भक्तिवात्सल्यादिरसमुपपादयतां मतं समीक्ष्य 'भरतादिमुनिवचनानामेवात्र रसभावादिव्यवस्थापकत्वेन स्वातन्त्र्ययोगात्', 'रसानां नवत्वगणना च मुनिवचननियन्त्रिता भज्येत इति यथाशास्त्रमेव ज्यायः'[5] इत्यादिना मुनिवचनप्रामाण्येन सिद्धान्तविरोधेन च निराकरोति।

परश्चात्त्वे न तथा, साम्प्रतं तु 'येन केन प्रकारेण प्रसिद्धो मानवो भवेत्' इत्युक्तिं गतार्थयन्तः शास्त्रविरुद्धं परम्पराविरुद्धं वा यत् किमप्युपपाद्य स्वोपज्ञतामाविष्कुर्वन्तो हृष्यन्ति। रहस्यविदस्तमुपेक्षन्ते। परमपरास्ता वाक्स्वोक्तैव मास्त्विति किमपि विवेचनमपेक्षितमेव। तेष्वन्यतमस्यैकं निदर्शनमुपस्थापयामि—'साहित्यं मीमांसापरिशिष्टम्' इति कश्चित्, 'व्याकरणपरिशिष्टम्' इति विद्वत्सु प्रायोवादः। 'वादे वादे जायते तत्त्वबोधः' इति विविच्यते।

अथ किमिदं साहित्यम्? हितेन (सुकुमारमतीनां रामादिवत्प्रवर्तितव्यम्, न रावणादिवदित्यादि कृत्याकृत्यप्रवृत्तिनिवृत्तिकारि कान्तासम्मिततयोपदेशेन) सह सहितं तस्य भावः साहित्यम्। अत्र हितशब्दो लाक्षणिकः, अर्शं आद्यजन्तो वा। नन्वेवं 'अहरहः सन्ध्यामुपासीत्', 'स्वर्गकामो यजेत्', 'न कलञ्जं भक्षयेत्' इत्यादिप्रवृत्तिनिवृत्तिकार्युपदेशकारित्वात् सर्वेषां वेदशास्त्रादीनां सहितत्वमुक्तं भवतीति चेन्न, विशिष्टस्य साहित्यस्यात्र विवक्षितत्वात्, प्रवर्तनारूपशासनाप्रधानेषु वेदादिशास्त्रेषु प्रौढमतीनामेव दुःखेन च प्रवृत्तिदर्शनात्।

सुकुमारमतीनपि नीतिशास्त्रपराङ्मुखान् विनेयान् ललितोचितसन्निवेशचारुलोकशास्त्रविलक्षणशब्दार्थमयकाव्यं कान्तावत् स्वाभिव्यङ्ग्यशृङ्गारादिरसेन सरसतामापाद्य स्वाभिमुखीकृत्य सदुपदेशरूपस्वार्थे प्रवर्तयति। यथा कान्ता गुरुजनाधीनमपि मधुरालापहासकटाक्षादिभिः सरसतामापाद्य स्वस्यां प्रवर्तयति, तद्वत्।

---

१ र० गं० द्वि० आ०। २. तत्रैव। ३. र० गं० प्र० आ०।
४ तत्रैव। ५. तत्रैव।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रौढमतीनां कृते निष्फलमिदमित्यपि न वक्तव्यम्, चणकभक्षिणामपि कृषकाणां सुकोमलापूपशष्कुलीशाल्योदनादौ साभिनिवेशप्रवृत्तिदर्शनात् ।

अपि च संसृतिरोगोपशमनाय गुडुच्यादिकटुक्वाथवदुपकारकेषु वेदादिशास्त्रेषु सत्स्वपि मोदकापूपादिवदुपकारके मधुरकाव्ये कस्य सहृदयस्य प्रवृत्तिर्न स्यात् ।

अपि च यथा प्रथमं मधुरमास्वाद्यानन्तरं कटुकौषधं सेवन्ते, तथैव सुस्वादुना रसेन मिश्रितं हितकरं कठिनोपदेशमपि पालयन्ति, तदुक्तम्—

स्वादुकाव्यरसोन्मिश्रं शास्त्रार्थमुपयुञ्जते ।
प्रथमालीढमधवः पिबन्ति कटुभेषजम्[1] ।। इति ।

एवं वेदादिशास्त्राणामपि निष्फलत्वं नापादनीयम्, कान्ताकुचमण्डलस्पर्शिनामपि प्रौढानां रिपुगजकुम्भविदारणेऽभिनिवेशात् ।

नन्वेवं साहित्यमुपपादयन् भवान् काव्यमुपपादयतीति चेत्, सत्यम्; यद्यपि वाङ्मयमात्रं साहित्यम्, तथाप्यत्र काव्यस्यैवाभिप्रेतत्वात् । 'साहित्यसङ्गीतकलाविहीनः'[2] 'साहित्यपाथोनिधिमन्थनोत्थम्'[3], 'येषां न चेतो ललनासु लग्नं मग्नं न साहित्यसुधासमुद्रे'[4], 'साहित्ये सुकुमारवस्तुनि'[5] इत्यादौ तथैव दर्शनात् । 'यो यो जयति साहित्ये तस्य वाणी प्रसीदति' इति मुकुलभट्टः ।

अथवा हितं निरतिशयसुखास्वादरूपो रसस्तेन सह सहितं तस्य भावः साहित्यमिति । ( अत्र व्यङ्ग्यव्यञ्जकभावेन सहभावो बोध्यः ) 'रसो वै सः', 'रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति' इति श्रुतेः ।

सहितं च सहितं च सहिते, तयोर्भावो वा साहित्यम् । किं पुनरिदं सहितं च सहितं चेति । शब्देन सहार्थः सहितः, अर्थेन सह शब्दः सहितः । एवं च शब्दार्थयोः सहभावः साहित्यम् । किं पुनर्वाङ्मयमात्रस्य साहित्यभावमभ्युपैति ? 'औत्पत्तिकस्तु शब्दस्यार्थेन सह सम्बन्धः'[7] इति मीमांसाशास्त्रोक्तेः, 'सिद्धे शब्दार्थसम्बन्धे'[8] इति महाभाष्योक्तेश्च शब्दार्थसम्बन्धस्य नित्यत्वात् सर्वत्र सहभावसत्त्वादिति चेन्न, विलक्षणसाहित्यस्यात्रोपक्रान्तत्वात् । वैलक्षण्यञ्चात्र शास्त्रे लोके च घट इत्ययं शब्दः, घट इत्ययमर्थ इति तादात्म्यात् सहभावसत्त्वेऽपि क्वचित् शब्दस्य प्राधान्यम्, क्वचिदर्थस्येति न तिरोहितं मतिमताम् ।

तद्यथा शास्त्रे 'अग्नेर्ढक्'[9] इत्यादावग्निशब्दस्य प्राधान्यम्, तत एव ढक्प्रत्ययोत्पत्तेः । 'न वेति विभाषा'[10] इत्यादावर्थस्य प्राधान्यम्, निषेधविकल्पयोर्विभाषासंज्ञेति बोधात् । लोकेऽपि गवित्ययमाहेत्यादावनुकरणे शब्दस्य प्राधान्यम्, अर्थस्यानपेक्षणात् । घटमानय इत्यादावर्थस्य प्राधान्यम्, शब्दस्यानयनासम्भवात् ।

वेदेष्वपि शब्दानामेव प्राधान्यम्, तुल्येऽप्यर्थे 'अग्निमीळे' इत्येव वाच्यम्, 'ईळे अग्निम्' इति तु न । प्रभुरपि कस्मैचित् 'समरसिंहः' इत्युपाधिं ददाति, तदा स समरसिंह इत्येवाभिधेयः, न रणकेशरीति । तत्र शब्दस्यैव प्राधान्यम् ।

---

१. का० अ० । २. भर्तृहरिः । ३. ४. ध्व० लो० मू० उद्धृतम् ।
५. श्रीहर्षोक्तिः । ६. अ० वृ० मा० १५ तमे पद्ये । ७. जै० सू० ।
८. म० भा० वा० । ९. पा० सू० ४-२-३३ । १०. पा० सू० १-१-४४ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुराणेतिहासादिष्वर्थस्यैव प्राधान्यम्, न शब्दस्य। तेषामिदमिष्टसाधनमिदमनिष्टसाधनमित्येतावन्मात्रबोधने तात्पर्यात्। सुहृदोऽप्येवमिष्टसाधनान्युपदिशन्ति, परं बलाद् न नियोजयन्ति।

परमत्र शब्दार्थयोः स्वस्वरूपगुणीभावे सहभावो विवक्षितः। अर्थात् शब्दः स्वामिधेयमर्थश्च स्वस्वरूपं गुणीकृत्यैकार्थसम्पादनप्राधान्येन तत्परौ सङ्गतौ सुहृदाविव रसादिरूपव्यङ्ग्यमभिव्यङ्क्तस्तदभिव्यञ्जने मनागपि न्यूनताऽऽधिक्यरहितो यः शब्दार्थयोः सहभावस्तत् साहित्यमभिप्रेतम्। ध्वनितश्चायमर्थो ध्वनिकारेण—

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः[1]॥

इत्यादिना।

मम्मटेन च प्रकाशे काव्यफलं प्रकाशयता 'शब्दार्थयोर्गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत् काव्यम्'[2] इत्यादिना तदेवाङ्गीकृतम्।

एवं च गुणीभूतशब्दार्थोभयकत्वमेव काव्ये वैलक्षण्यम्।

पण्डितराजेन चोत्तमोत्तमं काव्यं लक्षयता 'शब्दार्थौ यत्र गुणीभावितात्मानौ कमप्यर्थमभिव्यङ्क्तस्तदाद्यम्'[3] इत्यादिनाऽयमेवार्थो निरणायि।

अग्निपुराणेऽपि—

शास्त्रे शब्दप्रधानत्वमितिहासेषु निष्ठता।
अभिधायाः प्रधानत्वात् काव्यं ताभ्यां विभिद्यते[4]॥

अर्थाद् वेदादिशास्त्रेषु शब्दप्राधान्यम्, इतिहास-पुराणादिष्वर्थप्राधान्यम्, काव्येऽभिधायाः अभिधानव्यापारस्य प्राधान्यादुभयोर्गुणीभूतत्वमिति काव्यं ताभ्यां भिन्नमिति शब्दार्थयोर्गुणीभूतत्वे साहित्यमुपपादितम्।

हृदयदर्पणेऽपि—

शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग् विदुः।
अर्थतत्त्वेन युक्तं तु वदन्त्याख्यानमेतयोः॥
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यधीर्भवेत्॥

इत्युदाहरतो भट्टनायकस्याप्यत्रैव तात्पर्यम्।

नन्वेतदनुपपन्नम्, सर्वत्रोभयोर्व्यञ्जकत्वाभावात्। क्वचिच्छब्दो व्यनक्ति, क्वचिदर्थः। अत एव शब्दशक्त्युद्भवोऽर्थशक्त्युद्भवो वा व्यङ्ग्य इति व्यवहारो जायते, न तूभयोर्व्यञ्जकत्वे सहभाव इति चेन्न, शाब्दयां व्यञ्जनायामर्थस्यार्थ्यां च शब्दस्यापि साहचर्यात्।

व्यवहारश्चान्वयव्यतिरेकाभ्यां प्राधान्यमूलकः, तदुक्तम्—

शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः।
एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता[5]॥

---

१. ध्व० लो० प्र० उ०। २. का० प्र० प्र० उ०। ३. र० ग० प्र० आ०।
४. ३३७ अध्या० २–३ श्लो०। ५. सा० द० द्वि० प० १८ तमा का०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति सर्वत्र द्वयोः सहभावोऽस्त्येव ।

एतदेवार्थमुररीकृत्य वक्रोक्तिजीवितकारो राजानककुन्तकः प्रतिपादनकौशलेन नवीनमिव किञ्चिदुद्भावयामास । यच्चोक्तं तेन 'न पुनरेतस्य कविकर्मकौशलकाष्ठाधिरूढरमणीयस्याद्यापि कश्चिदपि विपश्चिदयमस्य परमार्थ इति मनाङ्मात्रमपि विचारपदवीमवतीर्णः'[1] इति । तद् ध्वन्यालोकालोकितहृदयस्य तस्य प्रतिपादनवैलक्षण्यमात्रम् ।

एतदेवोक्तं तेन—

साहित्यमनयोः शोभाशालितां प्रति काप्यसौ ।
अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः[2] ॥

शोभाशालिता च सहृदयाह्लादकारितेति । सहृदयाह्लादश्च रसास्वादेनेति सर्वसम्मतम् ।

निष्कर्षे च—

वृत्त्यौचित्यमनोहारि रसानां परिपोषणम् ।
स्पर्धया विद्यते यत्र यथास्वमुभयोरपि ॥
सा काप्यवस्थितिस्तद्विदानन्दपरिस्पन्दसुन्दरा ।
पदादिवाक्परिस्पन्दसारः साहित्यमुच्यते ॥[3] इति ।

अथवा सहितानां भावः साहित्यम्, सहितशब्दात् "गुणवचनब्राह्मणादिभ्यः कर्मणि च' (पा० सू० ५।१।१२४) इति चाद् भावे ष्यञि कृते रूपम् । सहभावश्च चतुर्दशाष्टादश वा प्रस्थानभिन्नानां विद्यानाम् । 'सकलविद्यास्थानैकायतनं पञ्चदश काव्यं विद्यास्थानम्' इति यायावरीयोक्तेः । 'पञ्चमी साहित्यविद्या, सा हि चतसृणामपि विद्यानां निष्यन्दः'[4] इति च तदुक्तेः ।

सहितस्य कर्म साहित्यम् । कर्मणि ष्यञि कृते रूपम् । यस्मादत्र विचार्यमाणे कविकर्मणि सर्वा विद्याः परिसमाप्यन्ते । तदुक्तं भामहेन—

न स शब्दो न तद्वाच्यं न स न्यायो न सा कला ।
जायते यन्न काव्याङ्गमहो भारो महान् कवेः[5] ॥ इति ।

राजशेखरोऽप्येवमाह—'शब्दार्थयोर्यथावत् सहभावेन विद्या साहित्यविद्या'[6] इति । सहभावे यथावत्त्वं चालौकिकचमत्कारनिःष्यन्देऽन्यूनानतिरिक्तत्वेनावस्थितिरेवेति ।

भोजदेवश्च शब्दार्थयोर्द्वादशसम्बन्धान् साहित्यपदेनाह । तथा हि—'अभिधाविवक्षातात्पर्यप्रविभागव्यपेक्षासामर्थ्यान्वयैकार्थीभावदोषहानगुणोपादानालङ्कारयोगरसावियोगरूपाः शब्दार्थयोर्द्वादशसम्बन्धाः साहित्यम्'[7] इत्युच्यते । महिमा तु काव्यस्य रसात्मकत्वाद्, रसस्य च शब्दार्थाभ्यामुभाभ्यां परिपोषदर्शनात् । रसपरिपोषे शब्दार्थयोः साहित्यम्, उभयं च प्रधानमित्यवादीत् । तद्यथा—त्रिविधं हि शास्त्रं शब्दप्रधानमर्थप्रधानमुभयप्रधानं चेति । तत्र शब्दप्रधानं वेदादि, अध्ययनादेवाभ्युदयश्रवणात् । मनागपि पाठविपर्यासे प्रत्यवायश्रवणाच्च । अर्थप्रधानम्—

१. व० जी० प्र० उ० । २. व० जी० प्र० उ० श्लो० १७ ।
३. तत्रैव ३५–३६ तमौ श्लो० । ४. का० मी० द्वि० अ० । ५. का० अ० ।
६. का० मी० द्वि० अ० । ७. शृ० प्र० स० प्र० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इतिहासपुराणादि, तस्यार्थवादमात्ररूपत्वात्। उभयप्रधानं सर्गबन्धादिकाव्यम्, तस्य रसात्मकत्वात्, रसस्य चोभयौचित्येन परिपोषदर्शनात्। काव्यस्यापि शास्त्रत्वमुपपादितमेवेति[1]।

**काव्यदृष्ट्या विमर्शः**

काव्यं सृजद्भिर्महाकविभिरप्ययमेवार्थो व्यञ्जनयाऽभ्यधायि। तथा हि—कविकुलगुरुः कालिदासो रघुवंशमहाकाव्यमारभमाणो मङ्गलपद्यं निबध्नाति—

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ[2] ॥ इति।

अयं भावः—काव्यं निर्मातुं प्रवृत्तस्य काव्यत्वप्रतिपत्तिरपेक्षिता, अतः कविर्वागर्थमयकाव्यस्य प्रतिपत्तये वागर्थाविव सम्पृक्तौ जगतः पितरौ वन्दमानः काव्यत्वमप्युपदिशति **'वागर्थौ सम्पृक्तौ काव्यम्'** इति। तस्य तयोः साहित्य एव पर्यवसानम्। भारविप्रखरप्रातिभप्रभाशिथिलीकृतगुणौघेन माघेन च **'शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते'**[3] इति वदता **'काव्यं शब्दार्थौ'** इत्यवोचि। तत्र साहित्ये द्वन्द्वदर्शनात् काव्ये शब्दार्थयोः साहित्यमभिप्रेतमिति सिद्धम्।

काव्यालङ्कारविधायिभिर्भामहप्रभृतिभिराचार्यैः **'साहित्यं काव्यम्'** इति काव्यलक्षणेनाभ्यधायि, तद्यथा—'शब्दार्थौ सहितौ काव्यम्'[4] इत्यवोचत्। तत्र सहिताविति पदविवेचनेन पूर्वोपपादित एवार्थः स्फुटीभवति। राजानककुन्तकेनापीदमेव निरणायि—

शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि[5] ॥

इत्यादि वदता।

**जल्हणश्चाप्येवमाह**

शब्दार्थयोः समो गुम्फः पाञ्चालीरीतिरुच्यते।
शीलाभट्टारिका वाचि बाणोक्तिषु च सा यदा ॥

इत्यादिना।

परं वामनाचार्यः साहित्य एव द्वन्द्वसमासो भवतीति विचार्य साहित्यार्थकसहितशब्दमन्तरेणैव लक्षणं व्यधित। तथा हि 'काव्यशब्दोऽयं गुणाऽलङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते'[6] इति। अनन्तरं मम्मटाचार्योऽपि तथैव विशिष्टशब्दार्थौ काव्यमिति लक्षयाञ्चक्रे। इत्थं साहित्यं काव्यमिति निष्पन्नम्।

काव्यस्यापि शास्त्रत्वमुपपादितं[7] महिमभट्टेन। परं काव्यस्य स्वरूप-रस-दोष-गुण-रीति-वृत्तीनां शासनात् साहित्यं शास्त्रम्, शास्यतेऽनेनेति व्युत्पत्तेः। तच्च काव्ये नैपुण्यमपेक्षितम्। यथा भाषाया व्युत्पत्त्यै व्याकरणमपेक्षितम्, तद्वत्। यज्ज्ञानात् काव्यस्य निर्माणे दोषगुणादीनामवधारणे च शक्तिर्जागर्ति तत् साहित्यशास्त्रम्। तथा हि—उपमानोपमेययोर्भिन्नलिङ्गत्वं दोषो भोजराजादिभिरुक्तः। मम्मटाचार्यश्च तं दोषं भग्नप्रक्रमतायामन्तर्भावयन्नुदाजहार 'चिन्तारत्नमिव च्युतोऽसि करतो धिङ् मन्दभाग्यस्य मे'[8] इति।

---

१. व्य० वि० तृ० वि०।
२. र० व० प्र० स० प्रथमः।
३. शि० पा० व० द्वि० स० ८६ तमः श्लो०।
४. का० लं० प्र० प० १६ तमः श्लो०।
५. वक्रो० जी० प्र० उ० स० श्लो०।
६. का० त० सू० प्र० अ० १ सूत्रे।
७. व्य० वि० तृ० वि०।
८. का० प्र० स० उ०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत्रोपमेये पुंसि च्युत इति वाच्यो धर्मः, उपमाने चिन्तारत्ने च्युतमिति लिङ्ग-विपरिणामेन प्रतीयमानो धर्मः। तथा चात्र च्युत इति साधारणो धर्म उपमेयेऽन्वेति, न पुनर्नपुंसकत्वविशिष्ट उपमाने, विशेष्यविशेषणभावान्वये समानलिङ्गवचनयोस्तन्त्रत्वात्। इत्थं वाच्यप्रतीयमानधर्मविशिष्टयोरुपमेयोपमानत्वप्रतीतौ भग्नप्रक्रमतामावहतीति दोषः। परञ्च 'गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः' इत्यादौ तथा सत्त्वेऽपि न दोष इति साहित्यशास्त्रेणैव ज्ञायते। यत्र लिङ्गयोर्वचनयोर्वा भेदेऽपि साधारणधर्मवाचकपदमुपात्तस्वरूपभेदं न प्राप्नोति, किन्तूपात्तेनैव रूपेणोभयत्रान्वेति तत्र दोषाभावः। आनुपूर्वीभेदाभावेनोभयत्राऽप्यन्वय-योग्यत्वादिति।

अपि समानेऽपि पुनरुक्तिदोषे कर्णावतंसादिपदमदुष्टं जघनकाञ्च्यादिपदं दुष्टमिति शासनात् शास्त्रम्। उक्तं च वामनेन 'तदिदं प्रयुक्तेषु'[1] इति। कविसमयख्यातीनां च शासनात् शास्त्रम्।

अपि च गमनार्थे हन् धातुं पाणिनीयाः पठन्ति, हन् हिंसागत्योरिति धातुपाठात्। परं साहित्यशास्त्रं तिङन्तस्य हन्तेर्गमनार्थे प्रयोगेऽसमर्थदोषं शास्ति। उदाजहार च—'कुञ्जं हन्ति कृशोदरी'[2] इति। तिङन्तो हन् धातुर्गमनार्थे न समर्थः, यदाचार्यो हिंसागत्योरिति पठति, तत्र गतेरभ्यर्हितत्वात् 'अभ्यर्हितं च' इति ( पा० सू० ) पूर्वनिपातो युक्तो न हिंसायाः, परमाचार्यो न गतेः पूर्वनिपातं करोति तज्ज्ञापयत्याचार्यस्तिङन्तस्य हन्तेर्हिंसायामेव प्रयोगो युक्तः, न गतौ। गतौ तु कृदन्तस्यैव 'जघनम्' इत्यादेरिति।

अपि च प्रवृत्तिनिवृत्तिकारित्वात् साहित्यं शास्त्रम्। रसास्वादद्वारा स्वाभिमुखीकृत्य रामादिवद्वर्तितव्यम्, न रावणादिवदिति कृत्याकृत्यप्रवृत्तिनिवृत्तिकारित्वात्। तदुक्तम्—

प्रवृत्तिं च निवृत्तिं च नित्येन कृतकेन वा।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते॥ इति।

अथवा 'स्वानुपजीविप्रमाणाप्रयोज्यज्ञानविषयत्वसामान्याभाववत् सकलपुमर्थसाध-नार्थविषयकज्ञानसाधनत्वं शास्त्रत्वम्'[3] इत्यपि कश्चित्। स्वानुपजीवीनि प्रमाणानि न्याय-वेदान्तादीनि, तत्प्रयोज्यज्ञानविषयता द्रव्यादिपदार्थेषु ब्रह्ममायादिषु तत्सामान्याभाववन्तः सकलपुमर्थसाधनानि च रसादयस्तद्विषयकज्ञानसाधनत्वात् साहित्यस्य शास्त्रत्वमिति।

महिमभट्टोऽपि त्रिविधं हि शास्त्रम्—शब्दप्रधानमर्थप्रधानमुभयप्रधानञ्चेति। तत्रो-भयप्रधानं शास्त्रं काव्यं सर्गबन्धादि, काव्यस्य रसात्मकत्वात्, रसस्य च परिपोषः शब्दार्थो-भयोरौचित्येनैवेति काव्यमुभयप्रधानं[4] शास्त्रमिति निरूपयाञ्चक्रे।

**अलङ्कारशास्त्रम्**

तदेतत् साहित्यशास्त्रं प्राचीनैरलङ्कारशास्त्रतया व्यवहृतम्। तत्राऽलङ्कृतिरलङ्कार इति भावे घञि कृते निष्पन्नोऽलङ्कारशब्दो दोषाभावगुणालङ्कारादिसंवलनकृतसौन्दर्यवाचकः। तस्य प्रतिपादकत्वादस्य शास्त्रस्यालङ्कारशास्त्रत्वेन व्यपदेशः। तदुक्तं वामनेन—'काव्यं ग्राह्य-मलङ्कारात्', 'सौन्दर्यमलङ्कारः', 'स दोषगुणालङ्कारहानोपादानाभ्याम्', 'शास्त्रतस्ते' इति चतुर्भिः[5]

१. का० ल० सू०। २. सा० द० स० प०। ३. ध्व० लो० भूमिका।
४. व्य० वि० तृ० वि०। ५. का० लं० सू० प्र० अ० १–४ सू०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सूत्रैः । अलङ्क्रियतेऽनेनेति करणव्युत्पत्त्या 'अकर्तरि च कारके संज्ञायाम्' इति घञि कृते पुनरलङ्कारेषूपमादिष्वलङ्कारशब्दः प्रयुज्यते । तथा हि द्विधा प्रयोग उपलभ्यतेऽलङ्कारशब्दस्य । 'रूपकादिमलङ्कारं बाह्यमाचक्षते परे'[१] इति भामहो रूपकादिषु प्रयुङ्क्ते । 'अलङ्कारान् सर्वानपि गलितगर्वान् रचयतु'[२] इत्यादिना पण्डितराजोऽलङ्कारशास्त्रीयग्रन्थेष्वपि प्रयुङ्क्ते ।

यद्यपि काव्यस्वरूपदोषगुणरीतिवृत्तिरसालङ्कृत्यादीनां प्रतिपादकमिदं शास्त्रम्, तथाप्यलङ्काराणां बाहुल्येन निरूपणात् काव्यप्रयोजकतया च तेषां प्राधान्यादस्यालङ्कारशास्त्रत्वेन व्यपदेशः । काव्यप्रयोजकता च स्वयं ध्वनिकारेणैव निरणायि 'काव्यवृत्तेस्तदाश्रयात्' इत्यादिना ।

वस्तुतो भामह-दण्डिप्रभृतयो प्रतीयमानमर्थं वाच्योपस्कारकतयाऽलङ्कारपक्षनिक्षिप्तं मन्यमानाः काव्येऽलङ्कारस्यैव प्राधान्यं जगदुस्ततो 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायादस्य शास्त्रस्यालङ्कारशास्त्रत्वेन व्यपदेशो जातः । तदुक्तं राजानकरुय्यकेण—'इह हि तावद् भामहोद्भटप्रभृतयश्चिरन्तनाऽलङ्कारकाराः प्रतीयमानमर्थं वाच्योपस्कारकतयाऽलङ्कारपक्षनिक्षिप्तं मन्यन्ते'[३] इत्यादि ।

इत्थं प्राचीनैः काव्यवृत्तीनां रसगुणालङ्काररीतिवृत्तिलक्षणानां षण्णां गुणानामलङ्कारेष्वन्तर्भावात् तत्प्रतिपादकशास्त्रस्यालङ्कारशब्देन व्यपदेशोऽकारि । अनन्तरमलङ्कारा गुणेष्वेव ग्रथ्यन्ते प्रायश इति विचार्य गुणालङ्कारयोर्गुणस्यैवाधारतायोगात् प्राधान्यम्, अलङ्कारसहस्रेणाप्यलङ्कृतस्य निर्गुणस्य लोके तथा प्रतिष्ठाऽदर्शनाच्च । 'रीतिरात्मा काव्यस्य'[४] इति वादिन आचार्या रीतिं लक्षयन्तो विशिष्टपदरचनेत्युदाहृत्य विशेषश्च गुणात्मेत्युदाजह्रुः । रसांश्च गुणेष्वन्तर्भावयामासुः । अनन्तरं रसस्यैव रसादिरूपध्वनेर्वा प्राधान्यमवसाय रसाभिव्यञ्जने च शब्दार्थयोर्यथावत् सहभावमाकलय्येदं शास्त्रं साहित्यशास्त्रमिति व्यपदिदिशुः । तत्रापि मूलं भामहकृतं काव्यलक्षणमेव 'शब्दार्थौ सहितौ'[५] इति । इत्थं साहित्यशब्दस्य वाङ्मयमात्रे, काव्ये, काव्यालोचकशास्त्रे च प्रयोगः ।

**साहित्यशास्त्रस्योपजीव्यत्वम्**

काव्यस्योद्भवे भामहः प्रतिभाव्युत्पत्त्यभ्यासाः[६] कारणं स्वीचक्रे । दण्डिना[७] प्रतिभाश्रुतममन्दाभियोगपदेनेदमेवोक्तम्, वामनोऽपि 'लोको विद्याप्रकीर्णञ्चेति काव्याङ्गानि'[८] इति निजगाद । रुद्रटमम्मटजयदेवादिभिरप्येवमेव । राजशेखरो जगन्नाथश्च शक्तिमेव केवलं कारणं स्वीचक्रतुः । शक्तेः कारणतया व्युत्पत्त्यभ्यासावुपपादयामासुः ।

इत्थं प्रायः सर्वैर्व्युत्पत्तिरपेक्षिता । तत्र शास्त्राणामभ्यसनमपेक्षितम्, तानि शास्त्राणि 'पदवाक्यप्रमाणसाहित्यच्छन्दोऽलङ्कारश्रुतिस्मृतिपुराणेतिहासागमनाट्याभिधानकोशकामार्थयोगशास्त्रादीनि' परिगणितानि । वामनश्च [९]शब्दस्मृत्यभिधानकोशच्छन्दोविचितिकलाकामशास्त्रदण्डनीतिपूर्वाणां विद्यानां कारणत्वं निरूपयाञ्चक्रे । मम्मटोऽपि[१०] 'लोकशास्त्रकाव्याद्यवेक्षणाद्

१. का० अ० प्र० १३ई श्लो० । २. र० ग० प्र० आ० चतुर्थः श्लो० ।
३. अ० स० । ४. वामनः, का० ल० सू० । ५. का० ल० प्र० प० ।
६. तत्रैव । ७. का० द० । ८. का० ल० सू० ।
९. तत्रैव । १०. का० प्र० प्र० उ० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्युत्पत्तिः' इति व्याचक्षाणः—लोकस्य स्थावरजङ्गमात्मकलोकवृत्तस्य, शास्त्राणां छन्दोव्याकरणाभिधानकोशकलाचतुर्वर्गगजतुरगखड्गादिलक्षणग्रन्थानां काव्यानां च महाकविसम्बन्धिनाम्, आदिग्रहणादितिहासादीनां च विमर्शनाद् व्युत्पत्तिमुपपेदे । अत्र चतुर्वर्गेत्यनेन—

गौतमस्य कणादस्य कपिलस्य पतञ्जलेः ।
व्यासस्य जैमिनेश्चापि दर्शनानि षडेव हि ॥

इति सर्वाणि सद्गृहीतानि ।

राजशेखरश्च 'श्रुतिः, स्मृतिः, इतिहासः, पुराणम्, प्रमाणविद्या, समयविद्या, राजसिद्धान्तत्रयी, लोकः, विरचना, प्रकीर्णकं च काव्यार्थानां द्वादशयोनय इत्याचार्याः'[1] इत्याचचक्षे ।

अन्यत्र च विद्यामुपविद्यां च गृहीत्वा काव्यरचनायां प्रयतः स्यात्, तत्र विद्या व्याकरणं कोशश्छन्दोऽलङ्कारशास्त्रं च । उपविद्याः चतुष्षष्टिः कलाः सन्ति । सुकविसन्निधिः लोकवृत्तम्, देशव्यवहारः, विद्वद्गोष्ठ्यः, सूक्तयः, महाकविनिबन्धाश्च काव्यमातरः[2] सन्ति ।

**प्रतिपाद्यविषयाः**

साहित्यशास्त्रे काव्यात्मत्वेनालङ्काराः, रीतयः, वक्रोक्तिः, ध्वनिः, रसः, औचित्यञ्चोपपादितम्, काव्यस्वरूपतया च विशिष्टशब्दार्थौ विशिष्टः शब्दो वा स्वीकृतः । अतोऽत्र शास्त्रे शब्दस्य, अर्थस्य, तयोः सम्बन्धस्य अभिधा-लक्षणा-तात्पर्य-व्यञ्जनादिवृत्तीनामलङ्कार-गुण-रीति-वृत्ति-ध्वनि-रसादीनां काव्यत्वविघटकानां दोषाणां विशेषलक्षणानां चोपपादनं लभ्यते ।

**सर्ववेदपारिषदं हीदं शास्त्रम्**

महामहर्षिभिर्महाभाष्यकृद्भिः पतञ्जलिपादैर्व्याकरणमुद्दिश्योक्तम् 'सर्ववेदपारिषदं हीदं शास्त्रम्' इति वाक्यं साहित्यशास्त्रमपि याथातथ्येन व्याप्नोति । काव्यकारणीभूतव्युत्पत्तये सर्वेषां शास्त्राणां परिशीलनमावश्यकमिति, काव्ये विचार्यमाणे सर्वा विद्याः परिसमाप्यन्त इति च पूर्वमेवोक्तम् । साहित्यशास्त्रस्यापि जीवातुभूताः सर्वा विद्या लक्ष्यन्ते । तत्र शब्दार्थमयस्य काव्यस्य निर्माणाय परिशीलनाय वा शब्दमात्रं सुतरामपेक्षितम्, यतो हि तत् पदविद्या, शब्दानुशासनम् इति च पदेनाभिधीयते । सर्वासां ( अष्टादशप्रस्थानभिन्नानाम् ) विद्यानामुपकारकं तद् वेदस्य प्रमुखमङ्गम्—'मुखं व्याकरणं स्मृतम्' इत्युक्तेः । 'सर्वेषु गात्रेषु शिरः प्रधानम्' इति तस्य प्राधान्यं शास्त्रेषु वर्णितम् । तदुक्तम्—

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् ।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न कुत्रचित्[3] ॥

इति व्यवहारसाधनत्वादपि शब्दस्य स्फुटं महत्त्वम् ।

दण्डिनाऽप्युक्तम्—

इदमन्धंतमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते[4] ॥

इति स्फुटं महत्त्वं शब्दानुशासनस्य ।

अपि च काव्ये दोषाणां परिवर्जनं नितरामपेक्षितम् । उक्तं च भामहेन—

१. का० मी० अ० अ० । २. का० मी० द० अ० । ३. पराशरोपपुराणे ।
४. का० आ० प्र० प० ४थः श्लो० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वथा पदमप्येकं न निगाद्यमवद्यवत् ।
विलक्ष्मणाहि काव्येन दुःसुतेनेव निन्द्यते[1] ॥ इति ।

दण्डिरप्यवोचत्—

तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन ।
स्याद् वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्[2] ॥ इति ।

एवं दोषे सति गुणानामप्यकिञ्चित्करत्वस्य बहुश उपपादितत्वात् । तेषु गुणराशिनाशकः द्रारिद्रचदोषस्येवात्युत्कटस्यानुकरणमन्तरा समाधातुमशक्यस्य नित्यस्य च्युतसंस्कृतिदोषस्य ज्ञानं व्याकरणशास्त्रमन्तरा भवितुं नार्हतीति काव्यव्युत्पत्तये शब्दशास्त्रं सुतरामपेक्षितम् । व्याकरणस्य शक्तिग्राहकेषु 'शक्तिग्रहं व्याकरणोपमानम्' इत्यादिषु प्रथमोपादानतयाऽर्थज्ञानाय चापेक्षितम् । काव्येष्वपि व्याकरणवर्णनं बहुश उपलभ्यते । तथा हि माघेन—

असम्पादयतः कञ्चिदर्थं जातिक्रियागुणैः ।
यदृच्छाशब्दवत् पुंसः संज्ञायै जन्म केवलम्[3] ॥

पद्येऽस्मिन् 'चतुष्टयी शब्दानां प्रवृत्तिः—जातिशब्दाः, गुणशब्दाः, क्रियाशब्दाः, यदृच्छाशब्दाश्चतुर्थाः' इति महाभाष्यार्थो वर्णितः ।

अपि च—

अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना ।
शब्दविद्येव नो भाति राजनीतिरपस्पशा[4] ॥

अत्र अपस्पशा (आचाररहिता) राजनीतिस्तथैव न शोभते, यथा पस्पशाह्निकम् (महाभाष्यस्य शास्त्रारम्भसमर्थकोपोद्घातभूतमशं० ) विना व्याकरणमित्येवार्थो श्लेषानुप्राणितोपमया वर्णितः ।

श्रीहर्षोऽपि—

क्रियेत चेत् साधु विभक्तिचिन्ता व्यक्तिस्तदा सा प्रथमाऽभिधेया ।
या स्वौजसां साधयितुं विलासैस्तावत् क्षमानामपदं बहु स्यात्[5] ॥

अत्र व्याकरणमेवानेकार्थकशब्दैः प्रकृतोपस्कारकतया वर्णितवान् इति दिग्दर्शनमात्रम् ।

अपि च—

जातिक्रियागुणद्रव्यस्वभावाख्यानमीदृशम् ।
शास्त्रेष्वस्यैव साम्राज्यं काव्येष्वप्येतदीप्सितम्[6] ॥

इत्यादिना दण्डिना 'सङ्केतितश्चतुर्भेदो जात्यादिः'[7] मम्मटेन च व्याकरणशास्त्रमनुसृतमिति न तिरोहितं मतिमताम् ।

---

१. का० ल० प्र० प० ।
२. का० द० प्र० प० ७ मः श्लो ।   ३. शि० पा० व० द्वि० सं० ४७ तमः श्लो० ।
४. तत्रैव ११२ तमः श्लो० ।   ५. नै० म० तृ० स० २३ तमः श्लो० ।
६. का० द० द्वि० प० १३ तमः श्लो० ।   ७. का० प्र० द्वि० उ० १० मी० का० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवमलङ्कारशास्त्रे प्राचीनाचार्याः सादृश्यमुपमामुपपेदे । तथा हि दण्डिना—

यथा कथञ्चित् सादृश्यं यत्रोद्भूतं प्रतीयते ।
उपमा नाम सा तस्याः प्रपञ्चोऽयं प्रदर्श्यते[1] ॥

इत्यनेनोद्भूतं सादृश्यमुपमेति निरूपिता ।

भामहोऽपि—'उपमेयस्य यत् साम्यं गुणलेशेन सोपमा'[2] इति साम्यमुपमेत्यूचे ।

मम्मटश्च—'साधर्म्यमुपमा भेदे'[3] इत्युपमां लक्षयाञ्चक्रे ।

तत्र पूर्वाचार्यैः क्लृप्तां सादृश्यमुपमां परित्यज्य साधर्म्यमुपमेति प्रतिपादने का वाचोयुक्तिरिति विचार्यमाणे प्रतिभाति यत् सादृश्यमेवोपमारूपकयोर्द्वयोरलङ्कारयोर्जीवातुभूतम् । परमुपमायां भेदकरम्बितं रूपके भेदाकरम्बितं सादृश्यमिति ।

अयं भावः—सादृश्यं द्विविधम्—१. नैयायिकाभिमतम् २. मीमांसकाभिमतं च ।

नैयायिकाभिमतं सादृश्यमभावगुणक्रियादिपदार्थेष्वन्तर्भूतं नातिरिक्तम् । यदुक्तं तल्लक्षणम्—'तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्' इति । तच्च साधर्म्यरूपम्, तदेवोपमालङ्कारजीवातुभूतम् । तदेव मम्मटेनोक्तं साधर्म्यमुपमेति ।

मीमांसकाः पुनः सादृश्यमतिरिक्तपदार्थं इति स्वीकुर्वन्ति । तन्मते साधर्म्यमेव न सादृश्यम्, अपि तु सादृश्यप्रयोजकं साधर्म्यमिति भेदः ।

अपि च सादृश्यस्योपमानं प्रतियोग्युपमेयमनुयोगि भवति । साधर्म्यं चोपमानोपमेयोभयानुयोगिकं साधारणधर्मप्रतियोगिकं भवतीत्यपरो भेदः । तच्च सादृश्यं भेदाकरम्बितम् । तदेव रूपकालङ्कारजीवातुभूतम्, रूपके भेदाकरम्बितसादृश्यस्य प्राचां मते प्रतीतेः । वैयाकरणाश्च द्विविधमपि सादृश्यं प्रतिपादयन्ति । तथा हि—'नञिव युक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः'[4] इति परिभाषायामाशङ्कितं यत् सादृश्यमन्यप्रतियोगिकमेव भवति, भेदघटितत्वात् तस्य । पुनः 'अन्यसदृशेत्यत्रान्यग्रहणं किमर्थमिति । समाहितं च यदयमाचार्योऽन्यग्रहणं करोति तद् ज्ञापयति यद् भेदाघटितमपि सादृश्यं भवति' इति । इत्थमन्यसदृशेत्यनेन निष्पन्नं यदुपमानप्रतियोगिकं सादृश्यमुपमानाभेदरूपमपीति । तथैवालङ्कारिकैरपि द्विविधं सादृश्यं गृहीतम् ।

एवं शक्तिरतिरिक्तपदार्थ इति मीमांसकाः, गुणरूपेति नैयायिकाः । अतिरिक्तपदार्थं इति वैयाकरणा आलङ्कारिकाश्च निगदन्ति । अतः प्रथममतमेव ज्यायः[5] इत्युक्तेः । सङ्केतग्रहसहकारेणार्थबोधिका शक्तिरभिधा, न तु सङ्केतरूपैवेति तैरभ्युपगमात् ।

एवं शक्यतावच्छेदकारोपरूपा लक्षणेति वैयाकरणाः, शक्यसम्बन्धरूपेति नैयायिकाः । तत्र शक्यसम्बन्धरूपलक्षणास्वीकारे लक्षणाहेतुभूतप्रयोजनस्य सम्प्रत्ययो न स्यात् । यदि सम्बन्धज्ञानमात्रेण प्रयोजनसम्प्रत्ययश्चेत्, तदा 'गङ्गायास्तटे घोषः' इति वाक्यादपि स्यात्,

---

१. का० द० द्वि० प० १४ तमः श्लो० । २. का० अ० द्वि० प० ३० तमः श्लो० ।
३. का० प्र० द० उ० १२५ तमा का० । ४. प० भा० शे० तृ० प्र० ७५ तमा प० भा० ।
५. र० ग० द्वि० आ० श० नि० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न च प्रतीयते तस्मान्न सम्बन्धरूपा लक्षणा, अपि तु शक्यताऽवच्छेदकारोपरूपैवेति । तदुक्तं पण्डितराजैः 'शक्यताऽवच्छेदकरूपेण लक्ष्यमाणस्य स्वीकारात्'[1] इति ।

बहुत्र वैयाकरणा वेदान्तिनश्च निगदन्ति 'व्यवहारे भाट्टनयः' इति । एवमालङ्कारिका अपि । तथाहि मम्मटेन 'भाट्टानुसारिलक्षणाऽलक्षि । अन्योऽर्थो लक्ष्यते यत् सा लक्षणेति'[2] । अत्र यदिति क्रियाविशेषणमतो यल्लक्ष्यते = ज्ञायते सा ज्ञप्तिरेव लक्षणेति लक्षणं निष्पन्नम् । भट्टपादैरप्युक्तम्—'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते'[3] इति । शक्यसम्बन्धो लक्षणेति[4] परिभाषमाणो पण्डितराजो न्यायसिद्धान्तमनुसरति । परं सम्बन्धो लक्षणाहेतुः, न तु सम्बन्धरूपैव लक्षणा । एवं वृत्तिर्ज्ञाने हेतुः, न तु ज्ञानरूपैवेत्यवसाय टीकाकृद्भिर्यदिति तृतीयार्थकमव्ययं स्वीकृत्य यया वृत्त्याऽन्योऽर्थो लक्ष्यते सा लक्षणेति निरणायीत्यन्यत् ।

काव्येऽपि बहुशो मीमांसासिद्धान्तो वर्णितः । यथा –

विश्वरूपकलनादुपपन्नं तस्य जैमिनिमुनित्वमुदीये ।
विग्रहं मखभुजामसहिष्णुर्व्यथतां मदशनिं स निनाय'[5] ॥ इति ।

अपि च—

सामान्यवाचिपदमप्यभिधीयमानं मां प्राप्य जातमभिधेयविशेषनिष्ठम् ।
स्त्री काचिदित्यभिहिते सततं मनो मे तामेव वामनयनां विषयीकरोति[6] ॥

अत्र जातौ शक्तिरिति मीमांसकमतं विलक्षणतयाऽत्रोपनिबद्धम् ।

एवम्—

कलशे निजहेतुदण्डजः किमु चक्रभ्रमकारितागुणः[7] ।

'तदुदितः स हि यो यदनन्तरः ।'[8] इत्यादौ न्यायसिद्धान्तो विलक्षणतया वर्णितः ।

एवम्—'प्रकाशस्वाभाव्यं विदधति न भावास्तमसि यत्'[9] इत्यादौ शुष्कतर्कवासनावासितचेतसा कविना तर्कन्याय एव वर्णितः ।

इत्थं साङ्गोपाङ्गश्रुतिस्मृतीतिहासपुराणादीनामप्यर्था काव्यार्थयोनितया राजशेखरेणोक्तम्[10] । सर्वेषाञ्चोदाहरणानि तत एव द्रष्टव्यानि । विद्याविरुद्धादिदोषेषु कामशास्त्रार्थयोगशास्त्रादिभ्यो विरोधो दर्शितः ।

अपि च प्रमाणविषये दार्शनिकानां विविधानि मतान्युपलभ्यन्ते, तद्यथा—चार्वाकाः प्रत्यक्षमेवैकं प्रमाणम्, वैशेषिका बौद्धाश्च प्रत्यक्षानुमाने, सांख्या आप्तवचनेन सह त्रिविधम्, नैयायिकाः प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि, प्राभाकराः—अर्थापत्तिरपीति पञ्च, भाट्टा अनुपलब्धिसहितानि पूर्वोक्तानि पञ्चेति षट् । पौराणिकाः सम्भवैतिह्याभ्यां सह पूर्वोदीरितानि षडित्यष्टौ प्रमाणानि स्वीकुर्वन्ति । चेष्टेत्यपि केचन निगदन्ति । साहित्ये सर्वेषां प्रमाणानामलङ्कारतयोपादानं [11]लक्ष्यते । इति सर्ववेदपारिषदत्वमस्य निष्पन्नम् ।

१. र० ग० द्वि० आ० ल० नि० ।
२. का० प्र० द्वि० उ० १२ तमा का० ।
३. श्लो० वा० का० प्र० उद्धृतम् ।
४. र० गं० द्वि० आ० ल० नि० ।
५. नै० म० का० पं० स० ३९ तमः श्लो० ।
६. का० मी० अ० अ० ।
७. नै० द्वि० स० ३२ तमः श्लो० ।
८. नै० च० स० ३ तमः श्लो० ।
९. व० जी० प्र० प० ।
१०. का० मी० अ० अ० ।
११. कु० न० १०८-११७ अल० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**स्वतन्त्रशास्त्रत्वम्**

सर्वासां विद्यानां निःष्यन्दभूतं यद्यपीदं साहित्यं क्वचित् क्वचित् तत्तच्छास्त्रसिद्धान्तकणिकां बिभर्ति, तथाप्यस्य स्वतन्त्रशास्त्रत्वं नाविदितचरम्। गुणालङ्कृतिरीतिवृत्तिरसादीनामुपपादनमस्य स्वतन्त्रविषयत्वात्। शब्दार्थवृत्तीनां यद्यपि पद-वाक्य-प्रमाणशास्त्रेषूपपादनं लभ्यते, तथाप्यस्य वैशिष्ट्यं तत्रापि स्फुरति। तथा हि मुख्य-लाक्षणिक-गौणेति भेदात् त्रिधा शब्दः, मुख्यो लक्ष्यो गौणश्चेति त्रिधाऽर्थः। अभिधा-लक्षणा-गौणीति त्रिधा वृत्तिरिति मीमांसका निगदन्ति। नैयायिका गौणीं लक्षणायामन्तर्भाव्य मुख्यो लाक्षणिकश्चेति द्विधा शब्दः, द्विधा अर्थः, वृत्तिद्वयीं चाङ्गीकुर्वन्ति।

परं साहित्यिका वाचकः, लक्षको व्यञ्जकश्चेति शब्दस्त्रिधा, वाच्यो लक्ष्यो व्यङ्ग्यश्चेत्यर्थास्त्रिधा, अभिधा-लक्षणा-व्यञ्जनेति त्रिधा वृत्तय इति निगदन्तो स्ववैशिष्ट्यमुपपादयन्ति।

नव्यवैयाकरणा अप्येवं स्वीकुर्वन्ति। प्राचीनानामप्यत्राभिप्राय इति न वैषम्यम्। सर्वे दार्शनिका अत्र समानाभिनिवेशेन प्रवृत्ताः।

'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः' इति भरतसूत्रं मीमांसको भट्टलोल्लटस्तार्किकः श्रीशङ्कुकः सांख्याचार्यो भट्टनायक आलङ्कारिकोऽभिनवगुप्तपादाचार्यश्च व्याख्यातवन्तः।

मीमांसका नैयायिकाश्च व्यङ्ग्यमर्थमभिधया लक्षणया वा गतार्थयितुं प्रयतमाना अत्र निराकृताः। तत्रैव प्रायो मीमांसकानां नैयायिकानां च राद्धान्ता अनेकश उद्धृता निराकृताश्च।

**अत्राधिकारिणः**

बालानां सुखबोधाय कृतस्य तर्कसङ्ग्रहस्य बाला एवाधिकारिणः। प्रौढमनोरमायाश्चाधिकारिणः प्रौढा एव। परं के ते बालाः प्रौढाश्चेति जिज्ञासायां न बालपदेन स्तनंधया गृह्यन्ते, अपि तु अधीतसकलशास्त्रा अनधीतन्यायशास्त्रो गृह्यन्ते।

एवं प्रौढत्वं च 'सकलदर्शनार्थज्ञानपूर्वकमहाभाष्यगूढार्थज्ञानवत्त्वम्'[1] इति रत्नकारः। महाभाष्याध्ययने च सर्वेषां दर्शनानां ज्ञानमुपयोगि, तत्र दर्शनान्तरस्यापि प्रतिपादितत्वात्। तात्पर्यमिदं प्रतिशास्त्रमधीतशास्त्रान्तरस्यैवाधिकारः। साहित्येऽप्येवम्। व्याकरणानभिज्ञस्य तु कुत्रापि गतिर्नास्ति। न स भाषां जानाति, न वा प्रयोगविधिम्, अतो व्याकरणं सर्वशास्त्रोपकारकम्, विशेषतः साहित्यशास्त्रस्येति। मीमांसा-न्यायशास्त्रयोर्मूलभूतसिद्धान्तं यो न जानाति स कथं 'प्रत्यक्षादेर्नीलादिविषयः फलं च प्रकटता संवित्तिर्वेति'[2] व्याख्यातुं क्षमते? कथं वा 'तद्वानपोहो शब्दार्थः[3] इत्यपि कश्चित्' इति मम्मटोक्तिं सरलतयाऽवगन्तुं विनेयानवबोधयितुं वा प्रभविष्यति। एवं 'पदानां स्मारकत्वेनावाचकत्वात्'[4] इति ध्वनिकृदुक्तिं कथमवगच्छति। परं व्याकरणस्य सर्वशास्त्रपरिषद्रूपत्वात् तज्ज्ञानात् सामान्यतया सर्वेषां शास्त्रतत्त्वानां ज्ञातत्वादत्र वैयाकरणानामधिकारः।

---

१. प्रौ० म० श० र०।  २. का० प्र० द्वि० उ०।
३. तत्रैव।  ४. ध्व० लो० तृ० उ०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

साहित्यं व्याकरणपरिशिष्टम्

पदसाधुत्वलक्षणेन व्याकरणशास्त्रेण पदानि संस्क्रियन्ते। तेषां यथावत् प्रयोगोऽभ्युदयनिःश्रेयससिद्धये भवति। तदाह श्रुतिः—'एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति' इति।

दण्डिनाप्युक्तम्—

गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः।
दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति[1]॥ इति।

अपि च—

यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले।
स शान्तिमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः[2]॥ इति।

अतो व्याकरणनिष्पन्नानां शब्दानां यथावत् प्रयोग एव साहित्यम्। साहित्येन च प्रयोगनियमः क्रियते। तथा हि कार्तार्थ्यादयः श्रुतिदुष्टाः शब्दा रौद्रादिरस एव प्रयोक्तव्याः, न शृङ्गारादौ। एवमश्लीलशब्दाः सुरतारम्भगोष्ठयादावेव प्रयोक्तव्याः। ग्राम्यशब्दान् विदूषका एव प्रयुञ्जन्तु। रणित-क्वणित-गुञ्जित-रवादिशब्दानां सत्यपि समानार्थकत्वे क्रमशो मञ्जीरादि-रशनादि-भ्रमर-मण्डूकादिध्वनिष्वेव प्रयोगः साधुः।

भट्टिना च व्याकरणनिष्पन्नानां शब्दानां सुप्रयोगं चिकीर्षुणा भट्टिकाव्यमकारि। तत्राऽपि कुलाङ्गनाकुचकञ्चुकवद् व्याकरणसाहित्ययोः सम्बन्धमवधार्य साहित्यशास्त्रीयगुणालङ्कारनिरूपणाय प्रसन्नकाण्डं व्यरचि। उक्तं च—

दीपतुल्यप्रबन्धोऽयं शब्दलक्षणचक्षुषाम्।
हस्तामर्श इवान्धानां भवेद् व्याकरणादृते[3]॥

जयमङ्गलोऽपि तत्रैवावोचत्—'यदधीतव्याकरणशास्त्रस्यैवात्राधिकारः' इति, अत एव भामहो वामनश्च स्वस्वग्रन्थे शब्दशुद्धिं निरूपयाञ्चक्राते। अपि च व्याकरणाध्ययनस्यानुषङ्गिकप्रयोजनेषु 'यस्तु प्रयुङ्क्ते'[4] इत्यप्युपपादितम्, तत्तु साहित्ये एव सम्यक् प्रयोगात् साफल्यमेति। न क्वचिद् व्याकरणग्रन्थे प्रयोगो लक्ष्यते। तत्र लक्ष्यलक्षणयोरेवोपादानात्। साहित्यमुद्दिश्यैव तदुक्तेश्चरितार्थत्वात् सिद्धं व्याकरणाङ्गत्वं साहित्यस्येति।

साहित्यशास्त्रेऽपि तत्र तत्र व्याकरणस्यैव महत्त्वमुपपादितम्। तथाहि ध्वनिकारैरुक्तम्—'प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानाम्। ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति, तथैवान्यैस्तन्मतानुसारिभिः सूरिभिः काव्यतत्त्वार्थदर्शिभिर्वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्याद् ध्वनिरित्युक्तः'[5] इति।

अत्र तन्मतानुसारिभिरित्युक्त्या साहित्यशास्त्रस्य व्याकरणानुसारित्वं सिद्धम्।

अपि च काव्यात्मनो ध्वनेर्मूलं व्याकरणशास्त्रमेव। यदुक्तं तैरेव—'परिनिश्चितनिरपभ्रंशशब्दब्रह्मणां विपश्चितां मतमाश्रित्यैव प्रवृत्तोऽयं ध्वनिव्यवहारः'[6] इति।

---

१. का० द० प्र० प० षष्ठः श्लो०। २. म० भा० पस्प० उद्धृतम्।
३. भ० का० २२ तमे सर्गे ३३ तमः श्लो०। ४. म० भा० पस्प०।
५. ध्व० लो० प्र० उ० १३३-१३५ पृ०। ६. ध्व० लो० तृ० उ० ४४३ पृ०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं मम्मटाचार्या अपि गुणीकृतवाच्यस्य व्यङ्ग्यार्थाभिव्यञ्जने समर्थस्य शब्दार्थमय-काव्यस्य ध्वनित्वेन व्यवहारे मूलं वैयाकरणानेवाहुः 'बुधैर्वैयाकरणैः'[1] इत्यादिना।

अपि च 'अत्रिलोचनसम्भूतज्योतिरुद्गमभासिभिः'[2] इति पद्ये क्लिष्टत्वदोष उपपादितः। स च पददोषः। अत्रानेकपदस्यैकपदत्वं समस्तत्वात् स्वीकृतम्, तच्च समासे शक्त्यभाववादि-मीमांसकनैयायिकदिशा नोपपद्यते। एवं 'चतुष्टयी शब्दानां प्रवृत्तिः'[3] इति शाब्दिकसिद्धान्त-मुररीकृत्यैव विरोधालङ्कारस्य दशभेदाः प्रदर्शिताः।

जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद् गुणैस्त्रिभिः।
क्रिया द्वाभ्यामपि द्रव्यं द्रव्येणैवेति ते दश[4] ॥ इति।

न हि मम्मट एव, दण्डिरपि—

कूजितं राजहंसानां वर्धते मदमञ्जुलम्।
क्षीयते च मयूराणां रुतमुत्क्रान्तसौष्ठवम्[5] ॥

इति क्रियाविरोधम्।

तथा—

प्रावृषेण्यैर्जलधरैरम्बरं दुर्दिनायते।
रागेण पुनराक्रान्तं जायते जगतां मनः[6] ॥

इति गुणविरोधमुदाहृत्य तमेव सिद्धान्तमनुससार।

अपि च—लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः[7]।

इत्यत्रोत्प्रेक्षां प्रतिपाद्योपमाभ्रान्तिं निराचक्रे। तत्र मूलं महाभाष्यमेव। यदुक्तं महाभाष्यकारैः पतञ्जलिपादैः—'न तिङन्तेनोपमानमस्ति'[8] इति।

तथैव दण्डिनोक्तम्—

केषाञ्चिदुपमाभ्रान्तिरिव श्रुत्येह जायते।
नोपमानं तिङन्तेनेत्यतिक्रम्याप्तभाषितम्[9] ॥ इति।

परिसंख्यालङ्कारस्योद्द्योते नागेशेनाप्युक्तम् 'नियमोऽप्यत्र दर्शने'[10] इति। तस्याय-मभिप्रायः साहित्यदर्शने शब्दशास्त्रस्य नियमोऽपीति।

उपमालङ्कारभेदा अपि वाक्य-समास-वति-क्विप्-क्यच्-क्यङ्-णमुलादिप्रत्ययभेदमूलकाः सन्ति। एवं श्लेषेऽपि वर्णश्लेषादिभेदा ज्ञेयाः।

भट्टोद्भटोऽपि 'क्रियायाः प्रतिषेधेऽपि यत् फलस्य विभावनम्'[11] इत्यादिना विभावनाऽ-लङ्कारं लक्षयन्ननुससार, शब्दशास्त्रे वैयाकरणैः क्रियायाः कारणत्वस्याभ्युपगतत्वात्। किं बहुना, प्रायः सर्वत्र शब्दशास्त्रानुसरणं लक्ष्यते।

---

१. का० प्र० प्र० उ० ध्व० का० नि०। २. का० प्र० स० उ०।
३. म० भा० ऋलृक् सूत्रे। ४. का० प्र० द० उ० ११० तमा का०।
५. ६. का० द० द्वि० प० ३३४–३५। ७. का० द० २२६ तमः श्लो०।
८. म० भा० 'धातोः कर्मणः समानकर्तृकादिच्छायां वेति सूत्रे।
९. का० द० द्वि० प० २२७ तमः श्लो०। १०. का० प्र० द० उ०।
११. अलङ्कारसारसङ्ग्रहे।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्याकरणेऽपि प्रक्रियांशे महाकविप्रयोगमनुसृत्यैव प्रयोगप्रक्रिया लक्ष्यते। यतो हि क्वचिद् विरोधमुद्भाव्य समाधिर्लक्ष्यते। यथा सिद्धान्तकौमुद्याम् 'कथं तर्हि हापितः क्वासि हे सुभ्रु'[1] इति, 'कथं तर्हि आजघ्ने विषमविलोचनस्यवक्षः'[2], 'दमयन्ती कमनीयता मदम्'[3] इत्यादयः। एवमर्थांशेऽपि- 'त्रयः समुदिता हेतुः'[4] इति प्रकाशकृदुक्तेः 'वेदाः प्रमाणम्'[5] इतिवत् समाधानं विस्तरभयाद् विसदीकृत्य नोच्यते।

अतः साधूक्तं विद्वद्वरैर्यद् 'व्याकरणस्यैव पुच्छभूतमिदं साहित्यशास्त्रम्' इति। इदमलङ्कारशास्त्रं व्याकरणस्यैव परिशिष्टभागः, न न्यायशास्त्रस्य, न वा मीमांसाशास्त्रस्य। यत् साहित्यतत्त्वं नैयायिकमीमांसकानामभूमिरिति बहुश उपपादितं विद्वद्वरैः, तस्यैव तत्परिशिष्टमित्युपपादनं वदतो व्याघात इव लक्ष्यते।

अपि च नैयायिका व्यङ्ग्यमर्थमनुमेयं लक्ष्यं वा स्वीकृत्य व्यञ्जनामनेकशः खण्डयन्ति। तार्किकः श्रीशङ्कुको रसमनुमेयं निरूपयति। मीमांसकाश्च क्वचिद् व्यञ्जनाया नामापि न गृह्णन्ति। 'स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः' इति निगदन्तोऽपि व्यञ्जकं शब्दं व्यञ्जनां वृत्तिं च नाङ्गीकुर्वन्ति। मीमांसका भट्टलोल्लटधनिकधनञ्जयप्रभृतयो बहुशो व्यञ्जनां निराकुर्वन्ति।

व्यञ्जनां निराकरिष्णवो महिमभट्ट-मुकुलभट्टप्रभृतयोऽपि शब्द एकामेवाभिधां शक्तिमुपपादयन्तः प्राचीनव्याकरणागममेवानुसरन्ति, न मीमांसादिशास्त्रम्, तत्राभिधा-लक्षणा-गौण्यादीनां विभिन्नानां शब्दशक्तीनामुपपादितत्वात्।

तत्र व्यञ्जनाया एव मुख्यतया प्रतिपादकमिदं कथं मीमांसापरिशिष्टं कथं वा मीमांसासाहित्यस्योद्गमस्रोत इति न विचारपथमारोहति मतिमताम्।

मीमांसाशब्दो 'मान पूजायाम्' इति धातोर्निष्पन्नः पूजितविचारवचनः। वेदार्थविचारे संल्लग्नास्ते ते विद्वांसो यं यं प्रशंसितं विचारं कृतवन्तस्तेषामेकत्र दर्शनमेव मीमांसाशास्त्रम्। अतो मीमांसायामपि शास्त्रान्तरोपकारका विचाराः सन्ति, शास्त्रान्तरेऽपि तथोपलभ्यते। यथा व्याकरणे 'अरुण्या पिङ्गाक्ष्यैकहायन्या सोमं विक्रीणाति' इत्याद्यरुणाधिकरणम्, निषादस्थपत्यधिकरणं च चर्चितं नागेशेन।

इत्थमभिधा-लक्षणादिनिरूपणं मीमांसाशास्त्रे यदुपलभ्यते तन्नान्यशास्त्रविसंवादीति कृत्वा शास्त्रान्तरेऽप्यंशतः पूर्णतो वा गृहीतम्। विसंवादे न्यूनाधिकरूपेण परिवर्तनमपि दृश्यते। परमभिधा-लक्षणे एव न साहित्यस्य मुख्यप्रतिपाद्ये। साहित्ये तु मुख्यतया व्यञ्जनैव प्रतिपादिता। शब्दार्थमयकाव्यस्य विवेचने प्रस्तुते शब्दा अर्था वृत्तयश्च विवेचिताः। परं काव्यजीवातुभूतस्य व्यङ्ग्यस्य शब्दवृत्तेर्व्यञ्जनाया वा विवेचनं मीमांसाशास्त्रे खपुष्पायमाणं वर्तते। व्याकरणे च मूलतया विद्यते —द्योत्योऽर्थो ध्वनिश्चेत्यस्ति व्याकरणपरिशिष्टभूतं साहित्यम्। न तु कतिपयोदाहरण-शब्दप्रयोगान्मीमांसापरिशिष्टमिति। अपि चापौरुषेयं काव्यं वेदः 'पश्य देवस्य काव्यम्' इति श्रुतेः। तस्य च प्रधानमङ्गं व्याकरणमतः पौरुषेयमपि काव्यं तत्समालोचकं शास्त्रं प्रधानाङ्गभूतव्याकरणस्यैव परिशिष्टभूतम्, न मीमांसाशास्त्रस्येति शिवम्।

१. भ० का० अंशः। २. किरा०। ३. नैषधे।
४. का० प्र० प्र० उ०। ५. व्यु० वा०।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri




# जीवातोरालङ्कारिकी समीक्षा

श्रीशशिधरशर्मा, वाचस्पतिः,

प्राध्यापकः — पञ्जाबविश्वविद्यालये

संस्कृतमहाकाव्यचिरत्नरत्नानां मध्ये हीरकायमाणस्य सहृदयहृदयहर्षप्रकर्षशील-श्रीहर्षकृतिव्रततितिसुमनःसमानस्य नैषधीयचरितस्य विवरणपरः टीकाकृतां मूर्धन्येन धन्याभिधानेन मल्लिनाथसूरिणा कृतो जीवातुर्बहुधैव जीवातूयते रसिकपरिषदः। प्राचीनाऽप्राचीना बह्व्यष्टीका यद्यपि काव्यतल्लजे उपपञ्चाशदस्मिन्निबद्धाः[1], तासु च काश्चन प्रकाशमपि प्राप्ताः प्रकाशाद्यास्तथापि माल्लिनाथी सर्वा अपि ता अतिशेत इत्यत्र नास्ति मिथ्यावादः। अतिरोहितस्तत्र हेतुः। अतिसंक्षिप्ता अतिविस्तरा एव वा ताः।

'प्रकाशः नारायणीयो यद्यपि प्रेयान् पाठकानाम्, परन्त्वलङ्करणविषये स मौनितामेवावहति। यत्र च किमपि वदति तत्रापि न सुवदति[2]। अलाङ्कारांश्चानुपेक्षणीयतत्त्वं काव्यानाम्। किमतः परमत्र प्रमाणं भवेद् यद् ध्वनिकारादीनां प्रतपत्यपि त्रिजगत्पूरणे प्रतापतपने लोकहृदयेष्वलङ्कारानुरागस्य प्रभा नैव मालिन्यमाप, प्रत्युत तदात्मतासम्प्रदायोऽप्यन्यवर्तत। एवञ्चालङ्कृतिविवेचनाविधुरं नैषधीयचरितव्याख्यानं न पूर्णमिति शक्यं वक्तुम्।

विद्याधरस्य साहित्यविद्याधरी, यस्या अंशा निर्णयसागरीयसंस्करणे प्रकाशिताः,[3] हान्दिकीमहोदयस्यानुवादसंस्करणे च सापि कृतास्पदा नैषधीयचरिते। गूढभावसुभगालङ्कारवृन्दानि लीलयैवासाववद्योतयतीति टीकाकृत एव भणितिः[4]। तत्पश्चाद्भुवा व्याख्यातारश्च तां बहुमानेन सङ्केतयन्ति।[5]

---

१. A Critical Study of Śriharsa's Naisadhiya Caritam, Dr. A. N. Jani, Chap V.

२. अत्र परमेको दोषो यदलङ्कारविवेचनवैधुर्यम्। यत्र क्वचिदलङ्कारनिर्देशोऽपि तत्र प्रायः स्खलनं व्याख्यातुः। तथाहि व्यङ्ग्योपमेति यत्र लेखितुं युक्तं तत्र लुप्तोत्प्रेक्षेति। नायं प्रमादः शोधकानाम्, बहुत्र तथा लिखितत्वात्। वेंकटेश्वरीये १९२७ संस्करणे भूमिका, पृ० ५।

३. म० म० शिवदत्तदाधीचेन १९०७ तमे खैस्तवाब्दे सम्पाद्य प्रकाशितम्।

४. लीलाद्योतितगूढभावसुभगालङ्कारवृन्दान्विता।
संसत्यां सुमनोवरैर्नरवर प्रोल्लासिनी शोभना॥

५. ईशानदेवो नैषधव्याख्यारम्भे प्रशशंस।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चाण्डूपण्डितस्य नैषधव्याख्यानपाण्डित्यं पण्डितमण्डल्यां सुप्रथितम्—सोऽपि सबहुमानं तस्य स्मरति स्म[1]।

तथापि सूक्ष्मेक्षिकायां विद्याधरकृतमलङ्कृतिविवेचनं स्थवीय[2] एवेत्यनुपदमेव व्यक्तिमेष्यति। सर्वाद्यनैषधचरितटीकाकर्तृत्वात् तद्ग्रन्थिभेदप्रथमप्राविण्याच्च बहुमानभाजनं तु स भवत्येव।

मल्लिनाथः किल टीकाकृतां युवराजः, सर्वतन्त्राणामीशिता, विजयनगरराजस्य प्रौढदेवस्य काले चतुर्दश्यां खैस्तवशताब्दयां भारतभुवमलञ्चकारेत्याधुनिकाः[3]। स सस्फुटभावगुणार्थशब्दध्वन्यलङ्कृतिरहस्यविदां विदां मुदे क्षुद्रव्याख्याविषार्तश्रीहर्षगवीसमुज्जीवनाय च जीवातुव्याख्यानं कृतमित्यातिष्ठते—

श्रीमल्लिनाथविदुषा विदुषां मतेन तेनैष नैषधकथामृतकाव्यबन्धः।
व्याख्यायते स्फुटसभावगुणार्थशब्दध्वन्यलङ्कृतिरहस्यविदां मुदे तु॥ इति।

क्षुद्रव्याख्याविषार्तानां श्रीहर्षकविसद्गिराम्।
उज्जीवनाय जीवातुर्जीयादेष मया कृतः॥[4]

अस्य सुपुत्रावपि परस्परं पितरश्चाप्यतिशयानाविवाऽवर्तेताम्। एतच्च प्रतापरुद्रीयव्याख्यायां मल्लिसूरिसूनोः कुमारस्वामिनो वचनैरेव प्रमाणीक्रियते।

त्रिस्कन्धशास्त्रजलधिं चुलुकीकुरुते स्म यः।
तस्य श्रीमल्लिनाथस्य तनयोऽजनि तादृशः॥ १।
कोलचलपेद्दयार्यः प्रमाणपदवाक्यं पारदृश्वा यः।
व्याख्यातसर्वशास्त्रः प्रबन्धकर्ता च सर्वविद्यासु॥ २।

---

१. टीकां यद्यपि सोपपत्तिरचनां विद्याधरो निर्ममे
श्रीहर्षस्य तथापि न त्यजति सा गम्भीरतां भारती।
दिक्कूलङ्कषतां गतैर्जलधरैरुद्गृह्यमाणं मृदुः
पारावारमपारस्तु किमिह स्याज्जानुदघ्नं क्वचित्॥

२. विद्याधरेशानदेवचाण्डूपण्डितानां टीकाविषये विशेषानुसन्धित्सुभिर्द्रष्टव्याः—
(i) Introduction to Naiṣadhacaritam by K. K. Handiquri.
(ii) A Critical study of Śriharsa's Naiṣadhīyacaritam, Dr. A. M. Jani.
(iii) नैषधपरिशीलन—डॉ० चण्डिकाप्रसाद शुक्ल इत्यादि।

३. "Prince of commentators a master of all Śastras Mallinatha flouished in the time of the Vijayanagara-king Praudhadeva-1419-66 A. D. "मल्लिनाथसूनुकुमारस्वामिकृतव्याख्योपेतस्य प्रतापरुद्रीयस्य व्याख्यायाम्, वे० राघवः।

४. श्लोकाविमौ चौखम्भीये संस्करणेऽवर्तमानावपि, नैषधपरिशीलने (पृ० ५५२) समुद्धृतौ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्यानुजन्मा तदनुग्रहात्तविद्योऽनवद्यो विनयावनम्रः ।
स्वामी विपश्चिद्वितनोति टीकां प्रतापरुद्रीयरहस्यभेत्त्रीम्[1] ॥ ३ ।

तथा चानवद्यविद्यावद्योतविद्योतिते स्थानेऽपि कृतवसतिरज्ञोऽपि कालेन सुज्ञतामेति, किं पुनर्निसर्गावदातसर्वविद्यो मल्लिनाथसदृशस्तादृशेऽन्वये लब्धजन्मा ।

अलङ्कारशास्त्रे च परिवारस्यैवाऽस्य विशिष्टो व्यद्योतिष्टाधिकारः ।[2] तथा चाऽस्य सुपुत्रः प्रतापरुद्रीयमलङ्कारग्रन्थं व्याचक्षाणस्तत्र तत्र विद्यानाथीयैकावल्यां मल्लिनाथनिबद्धाद् व्याख्याग्रन्थादुद्धरति स्म ।

किञ्च, यथा कविकुलगुरोः काव्येषु कृतव्याख्यानेन सूरिणा तेन रचितो घण्टापथः किरातार्जुनीये, तं कृतवतैव च सर्वङ्कषा शिशुपालवधे, तथैव काव्यप्रौढ्यादरेण तां सन्दृब्धवतैव जीवातुर्नैषधीयचरिते इति प्रौढेः पराकाष्ठाऽत्र । एवञ्च स्थाने पूर्वटीकानां गुणाष्टीकायामस्यां स्थानमञ्जसैवापुः[3] ।

वस्तुतः पञ्चमहाकाव्येषु मल्लिनाथकृतानि व्याख्यानान्येव सर्वाङ्गीणानि । तथा चाऽस्मदृदृष्टौ मल्लिनाथो नाथायत एव व्याख्यातॄणाम् । स हि व्याकरणमामूलचूलमुन्मीलयति, दार्शनिकग्रन्थीन् सवैभवं विभिनत्ति, इतराभिभाविना प्रातिभेन भाववैभवं विभासयति । अलङ्काराणां तादृशो व्याख्याता न सुलभः । गभीरगभीरं हि स तान् विविनक्ति । किं बहुना, सङ्करसंसृष्टिपर्यन्तं कणेहत्य निरूपयति । कोषविषये तु तत्समो नास्त्येव । तदुद्धृतेषु बहवः कोषा निःशेषतामेवोपसेदुरद्य । शब्दार्णवप्रभृतयस्तादृशा एव ।[4] हा ! हन्त !!

एवं सत्यपि माल्लिनाथेषु व्याख्यानेषु तादृशान्यपि स्थलान्यस्माकं दृक्पथं पस्पृशुः— यानि नालङ्कारिकसरणिसंवादीनि । अद्य तु स्थालीपुलाकन्यायेन तादृशानामनेकेषामेकमेवो-दाह्रियते सारासारविवेचनचतुराणां पुरस्ताद् मल्लिकृताजीवातोः ।

कविराजराजिमुकुटायमानः श्रीमान् श्रीहर्षः पुण्यश्लोकं नृपं नलं प्रात्यहिकतदभ्युदय-प्रसङ्गेनेत्थं वर्णयाम्बभूव—

अजस्रमभ्यासमुपेयुषा समं मुदैव देवः कविना बुधेन च ।
दधौ पटीयान् समयं नयन्नयं दिनेश्वरश्रीरुदयं दिने दिने ॥[5] इति ।

टीकाकर्ता धुरं वहन् मल्लिनाथोऽनवद्यविद्यासनाथो जीवातुसमाख्यायां व्याख्यायां पद्यमिदमित्थं व्याख्यत्—

---

१. वे० राघवसम्पादितसंस्करणे Sanskrit society madras प्रकाशिते पृ० २ ।

२. Alaṅkara was also a specility of the family V. Raghnavan ।

३. हन्दीकीमहोदयोऽपि स्वानुवादभूमिकायामित्थमेवाह—His work has all the merits assigned to his well known commentaries on the other kavyas—P. xxxiv ।

४. K. K. Handiqui's Naiṣadhīyacaritam of Śriharsa p p xxvi, 1959 ।

५. नैषधीयचरितम् १।१७ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"अथ विद्वज्जनसम्माननामाह—अजस्रमिति। दिनेश्वरस्येव श्रीर्यस्य, अन्यत्र दिने ईश्वरस्येव श्रीर्यस्य तथाभूतः, पटीयान् समर्थतरः, अयं देवो राजा सूर्यश्च 'देवः सूर्ये यमे राज्ञीति विश्वः'। अजस्रं सततम्। अभ्यासं सान्निध्यम् उपेयुषा प्राप्तवता सहचारिणा इति यावत्, 'उपेयिवाननाश्वाननूचानश्चेति निपातः'। कविना काव्यशास्त्रविदा पण्डितेन शुक्रेण, बुधेन विदुषा धर्मशास्त्रादिदर्शिनेति भावः, सौम्येन च समं सह मुदैव आनन्देनैव, न तु दुःखेनेत्येवकारार्थः, समयं नयन् अतिवाहयन् दिने दिने प्रतिदिनम् उदयम् अभ्युन्नतिम् आविर्भावञ्च दधौ धारयामास। अत्र श्लेषालङ्कारः"[1] इति।

तथा चाभ्यासकविबुधशब्दानां नैकार्थतया श्लेषालङ्कार इति तस्याशयः। अभ्यासशब्दस्य गुणनिका, सामीप्यं चार्थः[2],—कविशब्दस्य दैतेयदेशिकः, भार्गवादिरूपैः प्रथितो ग्रहवरः कविकर्मा च[3], बुधशब्दस्य च सौम्यः पण्डितश्चापि[4]। स्पष्टेति पदानां श्लिष्टता। समयश्च काव्यतत्त्वविदां यथा—'श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते'[5] इति।

क्वचित् सञ्चिकायाम् 'दिनेश्वरश्रीरिव श्रीर्यस्य स इति निदर्शनाऽलङ्कारः। अत्र निदर्शनाश्लेषयोः सङ्करः'. इत्यपि जीवातौ पाठः[6]।

अत्रोपमाश्लेषसहोक्त्योऽलङ्कारा इति साहित्यविद्याधरी[7]। सा च मल्लिनाथसूरिसरणिमेवोररीकरोति, यच्चाधिकं वचनं सहोक्तेस्तत्र चारु। सममिति सहार्थकं यद्यपि, तथा नैतावतैव सहोक्तेः प्रसरः, पुत्रेण सहागतः पितेत्यादावतिव्याप्त्यापत्तेः।

अत एवातिशयोक्तिमूलकत्व एवेमामलङ्कृतिमाचार्या अभ्युपजग्मुः—

सहार्थस्य बलानेकं यत्र स्याद्वाचकं द्वयोः।
सा सहोक्तिर्मूलभूतातिशयोक्तिर्यदा भवेत्॥ १।

प्रकाशकारस्तु नाल्पमप्यलङ्कारविषयेऽत्र प्रकाशं चकार[8]। एवञ्च मल्लिनाथीयं मतमेव समालोचकमौलिमल्लिकायतल्लिकानां पुरस्तात् प्रश्रयाद्विवेचयामः। सत्यमेतत्, यदनेकार्था अभ्यासकविबुधशब्दाः। देवशब्दोऽपि नैकार्थक एव—'दैवं हृषीके देवस्तु नृपतौ तोयदे सुरे' इत्युक्तेः[9]। 'उदयपदे च यद्यपि न नैकार्थता, तथापि परिवृत्तिसहानामेव शब्दानामेकवृन्तगत-

---

१. सजीवातुसंस्करणं चौखम्भीयम्, प्रथमपुटकम् ( १९७० ), पृ० १५।
२. 'अभ्यासो व्यसनेऽन्तिके' इति दन्त्यान्त्येषु विश्वमेदिन्यौ।
३. 'कविर्वाल्मीकिशुक्रयोः। सूरौ काव्यकरे पुंसि खलीने स्यात्तु योषिति' इति मेदिनी।
४. 'बुधवृद्धौ पण्डितेऽपि' इत्यमरे नानार्थवर्गे १००।
५. "श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते" साहित्यदर्पणः १०।१३। पदश्लेषश्चायं स्यात्, तत्रैव ( १०।१३ )—

वर्णप्रत्ययलिङ्गानां प्रकृत्योः पदयोरपि।
श्लेषाद्विभक्तिवचनभाषाणामष्टधा च सः॥ इति।

६. दाधीचश्रीशिवदत्तसम्पादिते निर्णयसागरीये १९०७ संस्करणे, पृ० ८।
७. तदेव। ८. साहित्यदर्पणः १०।७२। ९. हैमकोशः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

फलद्वयन्यायेन यत्रानेकार्थप्रतिपादकता सोऽर्थश्लेषः'[1] इति लक्षणलक्षितोऽर्थश्लेषस्तस्य सूरिधौरेयस्य लक्ष्यते विवक्षितः। तथाहि---

उदयमयते दिङ्मालिन्यं निराकुरुतेतरां
नयति निधनं निद्रामुद्राः प्रवर्तयति क्रियाः।
रचयतितरां स्वैराचारप्रवर्तनकर्तनं
बत बत लसत्तेजःपुञ्जो विभाति विभाकरः॥

इत्युदाहरति स्म वाग्देवतावतारोऽर्थश्लेषतया[2]। अत्र विभाकरनामा राजविशेषो मार्तण्डश्चेत्युपमेयार्थानि 'उदयमयते' वाक्यानि।

संयोगादीनामभावेनाभिधाया अनियन्त्रणाद् द्वयोरपि वाच्यत्वादिति तदाशयं प्रादीपयत् प्रदीपकृत्[3]। द्वयोरपि वाच्यत्वादिति। प्रकृतत्वेनेत्यादिः। उभयोः प्रकृतत्वेऽप्रकृतत्वे वा ध्वनित्वभावादिति च प्रदीपं प्राकाशयन्नागेशः[4]। संयोगादयश्च—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥[5] इति।

तत्र प्रकरणं नाम वक्तृश्रोतृबुद्धिस्थता[6]। तद्बलेन प्रकृते नलरूपार्थादन्यार्थान्तराभिधायकत्वमुक्तानामनेकार्थानामपि शब्दानां नियन्त्रणान्नात्र कविबुधप्रभृतिशब्दानां भार्गवसौम्यादिरर्थः सम्भवति काव्यकर्तृपण्डितादिरेव तु। प्रकरणनियन्त्रणयाऽनेकार्थाभिधानस्यैवाभावात्। न च मुख्यार्थस्य काव्यकर्त्रादेः प्रतीतौ काप्यनुपपत्तिः, येन द्वितीयावृत्तिः प्रवर्तेत। तस्माद् भार्गवसौम्यसुराद्यर्थे व्यञ्जनयैव गम्यते इति कथमत्र श्लेषस्याश्लेषः? यदाहुराचार्याः—

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनमिति॥[7]

यथा खलु—

भद्रात्मनो दुरधिरोहतनोः प्रलम्बवंशोन्नतेः कृतशिलीमुखसङ्ग्रहस्य।
यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत्॥[8]

---

१. प्रदीपः, काव्यप्रकाशस्य १०।१० कारिकास्थः, सप्रभे १९३३, पृ० ३३३।
२. काव्यप्रकाशः, ४३३ तममुदाहरणम्। आनन्दाश्रम(१८३३) संस्करणम्, पृ० ४७६।
३. प्रदीपोद्द्योतयुते तत्रैव। ४. तत्रैव।
५. तत्रैव—२।१९ कारिकायां वृत्तौ। पृ० ६३। ६. तत्रैव प्रदीपे।
७. काव्यप्रकाशः २।१९।
८. आनन्दाश्रमीये सप्रदीपोद्द्योते १८३३ शकाब्दसंस्करणे, पृ० ६८।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यत्र प्रकरणेन भद्रात्मन इत्यादिपदानां राज्ञि तदन्वययोग्ये चार्थेऽभिधानियन्त्रणेऽपि गजस्य तदन्वययोग्यस्य चार्थस्य व्यञ्जनयैव प्रतीतिः[1]। अथ 'प्रकृतार्थे तात्पर्यावगतेस्तदसम्बद्धार्थबोधनायोगादुपमानत्वेन तस्य प्रकृतार्थविशेषणत्वम्—इत्युपमानोपमेयत्वकल्पनम्'[2]। तथैवात्रापि।

कवीत्यादिपदानां समवसिते 'काव्यकर्त्रादिरूपे प्रकृते वाक्यार्थे विरतायामभिधायां भार्गवाद्यर्थान्तरस्य प्रतीतौ द्वयोरर्थयोर्मिथोऽसम्बद्धत्वे वाक्यभेदापत्तेरुपमाकृतास्वादानुभवाच्च भार्गवादिना काव्यकर्त्रादिरुपमालङ्कारध्वनिः शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यः, कविबुधादिशब्दाश्रितत्वात्। 'उदये' चार्थशक्तिमूलः। एवञ्चोभयशक्त्युत्थोऽत्र ध्वनिरेवोपमालङ्कारस्येति निष्कर्षः। यदाहुः—

अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः।
शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः॥[3]

शब्दशक्तिमूलत्वं चैतदेव यत्तेनैव शब्देन तदर्थप्रतीतिः, न तु पर्यायान्तरेणापि। एतद्वैपरीत्यं चार्थशक्तिमूलत्वम्[4], 'शब्दार्थोभयभूरेकः'[5] इति चाचार्यवर्यैः परिभाषितत्वात्। सहृदयानां कर्णपूरस्य शारदावाहनमयूरस्येव कविवरस्य मयूरस्य—

दत्तानन्दाः प्रजानां समुचितसमयाकृष्टसृष्टैः पयोभिः
पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः।
दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो
गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु॥[6]

इत्यस्मिश्चारुणि पद्यरत्ने गावो रश्मयो गावः सुरभय इवेति।[7] सुकृतसुलभावगाहनमाघस्य माघस्य वा—

हिममुक्तचन्द्ररुचिरः सपद्मको मदयन् द्विजाञ्जनितमीनकेतनः।
अभवत् प्रसादितसुरो महोत्सवः प्रमदाजनस्य स चिराय माधवः॥[8]

इत्यस्यां मुक्तातिमूल्यायां सूक्तौ माधवः श्रीकृष्णो माधवो वसन्त इवेत्युपमालङ्कारो व्यङ्ग्यो[9] यथा, तथैवात्र कविना कवयित्रा कविना भार्गवेणैव, बुधेन पण्डितेन बुधेन सौम्येनेवेत्यादिरूपेण वस्तुनाऽलङ्कारात्मको द्व्युत्थः संलक्ष्यक्रमो ध्वनिरित्येव क्षोदक्षमम्।

मल्लिनाथस्य श्लेषालङ्कृतिपरकं व्याख्यानन्तु न केवलं पूर्वाचार्यवर्यवचननिचयम्, स्वकृतानि व्याख्यानान्तराण्यपि तु विरुणद्धि। तथाहि—

नारीभिर्गुरुजघनस्थलाहतानामास्यश्रीविजितविकासिवारिजानाम्।
लोलत्वादपहरतां तदङ्गरागं सञ्जज्ञे सकलुष आशयो जलानाम्॥[10]

---

१. तत्रैव प्रदीपः, पृ० ६९। २. तत्रैवोद्द्योतः। ३. काव्यप्रकाशः ४।३७।
४. तदेव प्रदीपः। उक्तसंस्करणे पृ० १३४। ५. काव्यप्रकाशः ४।४०।
६. सूर्यशतकम्। ७. ध्वन्यालोकलोचनम्, निर्णयसागरसंस्करणे पृ० १२।
८. शिशुपालवधम्—१३।३८।
९. साहित्यदर्पणः—४।१०, चतुर्थसंस्करणे पृ० २३९।
१०. शिशुपालवधम् ८।४७, वेङ्कटेश्वरसंस्करणे पृ० २१२।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यत्र, जलानां तोयानां जडानां च स आशयो ह्रदो हृदयं च कलुषोऽप्रसन्नः क्षुभितश्च सञ्जज्ञे सञ्जातः, अपहर्तुस्ताडनस्वहरणादिभिराशयः कलुषो भवतीति ध्वनिः। अभिधायाः प्रकृतार्थे नियन्त्रणान्न श्लेषः[1]।

निहतोन्मदवुष्टकुञ्जराछधतो भूरियशः क्रमार्जितम्।
न बिभेति रणे हरेरपि क्षितिपः का गणनाऽस्य वृष्णिषु ॥[2]

इत्यत्र।

'अत्र कुञ्जरघातिनः सिंहस्य का कथा मेषेस्वित्यर्थान्तरप्रतीतिर्ध्वनिरेव न श्लेषः' इति[3]।

उपैतुकामैस्तत्पारंनिश्चितैर्योगिभिः परैः।
देहत्यागकृतोद्योगैरदृश्यत परः पुमान् ॥[4]

इत्यत्र 'अर्थान्तरप्रतीतेर्ध्वनिरेव, न श्लेषः, अभिधायाः प्रकृतार्थे नियन्त्रणात्'[5] इति। आदावपि—

उदीर्णरागप्रतिरोधकं जनैरभीक्ष्णमक्षुण्णतयातिदुर्गमम्।
उपेयुषो मोक्षपथं मनस्विनस्तमग्रभूर्मिनिरपायसंश्रया ॥[6]

'यथा कस्यचित् कुतश्चित् सङ्कटान्निर्गतस्य केनचित् कान्तारेणागतस्य किञ्चिन्निर्बाधस्थानप्राप्तिरभयाय कल्पते, तथा त्वमपि मुमुक्षोरिति ध्वनिः'[7] इत्यादिना प्रकरणादिनियन्त्रणादिमति स्थले स श्लेषं प्रत्याचष्ट, ध्वनिञ्च स्पष्टमाचष्ट।

सर्वङ्कषायामिव जीवातावपि स यत्र तत्र सिद्धान्तमिमं साधु न्यवध्नात्। कानिचिदुदाहरणानि, तद्यथा—

अलं नलं रोद्धुममी किलाभवन् गुणा विवेकप्रमुखा न चापलम्।
स्मरः स रत्यामनिरुद्धमेव यत् सृजत्ययं सर्गनिसर्ग ईदृशः ॥[8]

इत्यत्र, 'जनं रत्यां रागेऽनिरुद्धं सृजति, अनीश्वरमवशं करोति। रत्याम् रति देव्यामनिरुद्धाख्यं कुमारं सृजतीति ध्वनिः'[9] इति।

अधिगत्य जगत्यधीश्वरावथ मुक्तिं पुरुषोत्तमाद् द्विजः।
वचसामपि गोचरो न यः स तमानन्दमविन्दत द्विजः ॥[10]

इत्यत्र।

'अत्राभिधायाः प्रकृतार्थमात्रनियन्त्रणादुभयश्लेषानुपपत्तेर्भेदान्तरानवकाशाल्लक्षणायाश्च[11] सुखार्थबाधमन्तरेणासम्भवाद् ध्वनिरेवायं ब्राह्मणस्य विष्णोर्मोक्षानन्दप्राप्तिलक्षणार्थान्तरप्रतीतेर्न श्लेषः, प्रकृताप्रकृतोभयगतः'[12] इति।

१. तदेव।
२. शिशुपालवधम् १६।५९।
३. तदेव वेङ्कटेश्वरसंस्करणे पृ० ४२३।
४. शिशुपालवधम् १९।८७।
५. तत्रैव पृ० ४९७।
६. शिशुपालवधम् १।३२।
७. तदेव, उक्तसंस्करणे पृ० १३।
८. नैषधीयचरितम् १।५४।
९. सजीवातौ चौखम्भा (१९७०) प्रकाशने पूर्वार्धे पृ० ३५।
१०. नैषधीये २।१। ११. मुख्यार्थबाधेति पाठः साधीयान् भाति। १२. तत्रैव पृ० ७८।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दधदम्बुदनीलकण्ठतां वहदत्यच्छसुधोज्ज्वलं वपुः ।
कथमृच्छतु यत्र नाम न क्षितिभृन्मन्दिरमिन्दुमौलिताम् ॥[1]

अत्र विशेषणविशेष्याणां श्लिष्टानामभिधायाः प्रकृतार्थमात्रनियन्त्रणात् प्रकृतेश्वरप्रतीतेर्ध्वनिरेवेति[2] ।

अलं सजन्धर्मविधौ विधाता रुणद्धि मौनस्य मिषेण वाणीम् ।
तत्कण्ठमालिङ्ग्य रसस्य तृप्तां न वेद तां वेदजडः स विद्वान् ॥[3]

'अत्र प्रस्तुतवाग्देवीकथनादप्रस्तुतवर्णात्मकवाणीप्रतीतेः प्रागुक्तरीत्या ध्वनिरेवेत्यनुसन्धेयम्'[4] इति ।

दिङ्मात्रमिदम् । पारेशतं जागर्ति—तादृशानामुदाहरणानाम् । 'हिममुक्तचन्द्ररुचिरः' इत्याद्युदाहृतचरे पद्येऽपि सः, "श्लेषस्तु हरिवसन्तयोरिह नास्त्येव, प्रकृताप्रकृतश्लेषे विशेष्यश्लेषायोगात् । किन्तु शब्दशक्तिमूलो ध्वनिरेवेति"[5] इति हरिदासभट्टाचार्या विशदयाम्बभूवुः[6] ।

एवञ्च नवीने शोधप्रबन्धेऽपि यदत्र श्लेषोऽलङ्कार इति भणनम्[7], तदपि भ्रममूलकमेवेत्यवसेयम् ।

इदमपि चात्रावधातुमर्हन्ति सन्तो यत् "दिनेश्वरस्येव श्रीर्यस्य, अन्यत्र दिने ईश्वरस्येव श्रीर्यस्येति 'दिनेश्वरश्रीः' पदे मल्लिनाथस्य व्याख्यापि शब्दशास्त्रविरुद्धा, अलङ्कारशास्त्रविरुद्धा च । दिनेश्वरस्य श्रीरिवश्रीर्यस्य" इत्यर्थो हि विवक्षितः कवयितुः । 'अनेकमन्यपदार्थे'[8] इति पाणिनिसूत्रस्थेन सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्चेति कात्यायनकृतवार्त्तिकेन 'दिनेश्वरश्रीः' इत्युपमानपूर्वपदकस्य श्रीशब्देन सह बहुव्रीहौ लोकप्रसिद्धोपमानवाचिनि दिनेश्वरश्रीरिति पूर्वपदे उत्तरपदस्य श्रीशब्दस्य लोपेन तन्निष्पत्तेः । अतश्चोक्तभ्रमस्याकस्मिकत्वभ्रमोऽप्यपास्तोऽवसेयः ।

अत्रोपमानभूतश्रीशब्दस्य इवशब्दस्योपमावाचकस्य सामान्यधर्मस्य चानुपादानात् त्रिलुप्तोपमैवेयं यथा मृगनयनेति—'त्रिलोपे च समासगा'[9] इति मम्मटोक्तेः ।

कालापमते दिनेश्वरपदस्य तच्छ्रियां लक्षणामूरीकृत्य तत्समर्थनमपि न चारु, पाणिनीयं मतमेव हि मल्लिनाथः प्रायेणानुयातीति । दिने ईश्वरस्येव श्रीर्यस्येति तु रात्रौ न सा तथेति विरुद्धां बुद्धिं प्रतिबोधयत्, पुनरपि सदोषमेव । किञ्च, दिनेश्वरस्येव श्रीर्यस्येति व्याख्यानात् कं वान्यं बुबोधयिषति विशेषं सः 'दिने ईश्वरस्येव श्रीः' इति व्याख्यानेनेति स एव विदांवरो विदाङ्करोति ।

---

१. नैषधीयचरिते २।८२ । २. उक्तसंस्करणे पृ० ११५ ।
३. नैषधीयचरिते ३।३० । ४. उक्तसंस्करणे पृ० १४४ ।
५. शिशुपालवधस्य वेङ्कटेश्वरीयसंस्करणे पृ० ३३५ ।
६. समाधुरीकमाघकृतेः १८८२ शकाब्दसंस्करणम् ।
७. डा० चण्डिकाप्रसादशुक्लकृतनैषधपरिशीलम्, १९६० संस्करणम्, पृ० ३४८ ।
८. अष्टाध्यायी २।२।२४ । ९. काव्यप्रकाशः, सूत्रम् १३४ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत्र निदर्शनालङ्कारस्तु जीवातोः पाठान्तरे धृतः। सोऽपि न शक्यः समर्थयितुम्। निदर्शना

सम्भवन् वस्तुसम्बन्ध उपमापरिकल्पकः।
स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च साऽपरा ॥[1]

इत्याचार्यैस्तल्लक्षणकक्षीकारात्।

अत्र चोभयविधस्यैव तस्याऽसञ्चारादिति लुप्तोपमापक्ष एवाऽत्र श्रेयान्। महामहोपाध्यायहरिदासभट्टाचार्या अपि च तमेवाद्रियन्ते[2]।

श्रीहर्षकृतेरालङ्कारिकं तत्त्वंरत्नमन्विष्यतां मनसि मा भूद् भ्रम इत्यभिसन्धिनैव 'दोषा वाच्या गुरोरपि' इति न्यायमनुगच्छता जीवातोरालङ्कारिकसमीक्षादिग्दर्शनमत्राकारि। न त्वेतेन जीवातोर्महिमाऽपचीयते। भूयांसो हि जाग्रति तत्रादौ कृतसङ्केताः प्रगुणा गुणाः। तथा च—

नाशङ्कनीयं पूर्वेषां मतमेतेन दूष्यते।
किन्तु चक्षुर्मृगाक्षीणां कज्जलेनेव भूष्यते ॥[3]

इति प्राचामाचार्याणां मोचाफलस्वादुर्वाचा[4] न विस्मरणीयेति शिवम्।

---

१. काव्यप्रकाशः—सूत्रम् १४९–१५०।
२. द्र०—प्रकृतपद्ये जयन्ती व्याख्या।
३. जयदेवकृते चन्द्रालोके उपोद्घातः।
४. भागुरिरीत्याऽऽबन्तः प्रयोगः।

• • •



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# संस्कृतकाव्यानामुद्भवो विकासश्च

श्रीगिरीशचन्द्रपाण्डेयः
अनुसन्धाता
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

'वाग्वै विश्वा भुवनानि जज्ञे' इत्यस्ति वैदिकः समयः। अर्थमात्रस्य विषयरूपत्वाद् विषयाणाञ्चेन्द्रियग्राह्यत्वाद्, इन्द्रियाणां मनोऽधिष्ठितत्वात् तस्य चात्मना संयोगाद् अन्तःकरण-वृत्त्यवच्छिन्नचैतन्यं शब्दरूपेण परिस्फुरति। सर्वाणि भूतानि क्षरः, कूटस्थोऽक्षरः, तयोरपि मूलं परमरहस्यं ब्रह्मैव। निखिलवाङ्मयावितानतात्पर्यविषयीभूतम्। अवान्तरं तु तात्पर्यं विविधाभीष्टसिद्ध्यौपयिकेषु। स एव शब्दब्रह्मसनातनो विष्णुः काव्यालापसत्कथागीतादीना-मपि रसात्मभूतः, तस्यैव कवनयोग्यत्वात्। प्राकृतकवनस्यासत्काव्यविषयत्वेन 'काव्यालापांश्च वर्जयेत्' इति निषिद्धत्वाच्च। यदाहुर्महाकविशिरोभिरुह्यमानमालालालितचरणाः श्रीमत्कृष्ण-द्वैपायनाः—

काव्यालापांश्च ये केचिद् गीतकान्यखिलानि च।
शब्दमूर्तिधरस्यैते विष्णोरंशा महात्मनः॥[1] इति।

शास्त्रचिन्तकाः लौकिकपरीक्षकाश्च पुरुषैरज्ञातमर्थं बुबोधयिषुर्मनसो वाक्यान्युच्चा-रयन्तो दृश्यन्ते बोद्धारश्च प्रतिपित्सितं प्रमेयजातमनुयुञ्जते। एवं लोकयात्रां निष्पादयति कामधुक् शब्दः। तत्रापि प्रत्यक्षादिप्रमाणेभ्योऽतीतानागतवर्तमानविषयप्रकाशकेभ्योऽतिशेतेऽयं शब्दः। सायणाचार्य ऋग्भाष्यभूमिकायां व्रभाषे यत् सम्प्रदायविदो वेदस्याकुण्ठितां शक्ति-मामनन्ति। अत्र 'चोदना भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुं नान्यत् किञ्चनेन्द्रियम्' इत्यन्तं शाबरीं वाचमुद्धरति। अत्रैवंजातीयकमाशय-मभिव्यनक्ति 'वाचैवायं ज्योतिषास्ते' इति शातपथी श्रुतिः। अत एव साहित्यसम्प्रदायाचार्याः शब्दस्य ज्योतिः स्वरूपत्वं प्रतिपादयन्ति। तथा चाह महाकविः काव्यादर्शे—

इदमन्धंतमः कृत्स्नं जायते भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारान्न दीप्यते॥[2]

यतो हि प्राकृता असकृदवगतमर्थं न बुभुत्सन्ते, न वा प्रतिपादयन्ति, तथा सत्यबुभुत्सि-तार्थाभिधानेऽनाप्ततया न ते परीक्ष्यवादिनः, नापि लौकिका इत्युन्मत्तवदुपेक्ष्याः स्युरिति वाचस्पतिमिश्रमतम्। अत एव लोकेऽनधिगतं वाक्यार्थमेवावबुभुत्सन्ते, बोधयन्ति च।

'एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति[3]' इति शेषोपस्थापितया श्रुत्या सम्यग्ज्ञातानामेव शब्दानां प्रयोगः शिष्टैरिष्टः, 'वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे' इति मन्वभिभाषणात् 'य एव वैदिकास्त एव लौकिकास्त एव च तेषामर्थाः' इति पन्नगगवी-

१. विष्णुपुराणम्--( सा० द० १ म० परि० उद्धृतम् )। २. काव्यादर्शः—१।
३. सा० द० १ परि०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रामाण्याच्च वेदशब्देभ्य एव भाषोत्पत्तिः। उच्चारणदोषकरणापाटवादिदोषात् लोके वृषलत्व-विस्तारेणापभाषाणां समुत्पत्तिः। तथापि द्विजातीनां भाषा वेदसब्रह्मचारिण्येव। अतश्च पाणिनिनापि सम्प्रति संस्कृतभाषायाः कृते केवलं 'भाषा' शब्देन व्यवहारः कृतः। तत्पूर्वभाविना भरतेन नाट्यवेदे स्त्रीशूद्रद्विजबन्धूनां कृते प्राकृतादीनामपभाषाणाम् (जनवाणी) प्रयोगो विहितः। 'गावी गोपोतलिका गोता गोणी' इत्यादिवदेकस्य शब्दस्य लोकेऽपभ्रंशबाहुल्यम्, सत्यनारायण-सत्य-सतनादिव्यवहारवत्। धर्माधर्मार्थानर्थौचित्यानौचित्यादिवच्छब्दापशब्दव्यवहारोऽपि भारतीयानां मनुवंशीयानां शाश्वत एव निश्चेयः।

तत्र प्रकृतिप्रत्ययादीनां संस्कारद्वारा शब्दानामनुशासनार्थं प्रवृत्तं शास्त्रं व्याकरण-शास्त्रम्-'अथ शब्दानुशासनम्' इति शेषः। तेषामुपयोगविषयस्तु विपुलतरः। तद्यथा-'सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः साङ्गाः सरहस्याः, एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाऽथर्वणो वेदः'[1] इति।

'न म्लेच्छितवै नापभाषितवै" इत्यादिश्रुतिनिर्देशाद् आर्य्याः संस्कृतं शब्दं प्रयुञ्जन्ते। लोकभाषायामादिकविर्वाल्मीकी रामायणं प्रोक्तवान्। तदनन्तरमद्यत्वेनोपलब्धसुरगवीजालं व्यासप्रसादादस्माभिरवाप्तम्, तच्च लौकिकव्यवहारोपयोगि काव्यादिनिर्माण आदर्शभूतम्। तदनन्तरं भासः। भवभूतिसाक्षितया वाल्मीकिभरतयोस्तुल्यकालत्वम्। भगवान् मनुः स्वकीय-स्मृतौ वैदिकीम् ऋचं लौकिकवत् परिणमय्य श्लोकरूपतां प्रापयत्। ब्राह्मणादर्शेण गद्यानां विकासः। इत्थं वेदच्छन्दोभ्यो लौकिकच्छन्दसाम्, वेदर्चः श्लोकानाम्, गीतादीनामपि समुद्भवः।

**लौकिकपद्यकाव्यानां विकासः**

वेदानुसारेण लोकेऽपि वाग्व्यवहारप्रचार इति विदुषामपश्चिमानां मतम्। काव्या-नामपि सेयमेव स्थितिः। अत्र स्थालीपुलाकन्यायेन कतिचन प्रमाणानि समुपस्थाप्यन्ते—

| श्रुतिः | पद्यकाव्यानि ( लौकिकानि ) |
|---|---|
| १. विद्या ह वै ब्राह्मणमाजगाम गोपाय मां सेवधिस्तेऽहमस्मि। असूयकायानृजवे मा प्रादाः येनाहं वीर्यवती स्याम्। (ऋ०) | विद्या ब्राह्मणमेत्याह सेवधिस्तेऽहमस्मि माम्। असूयकाय मा प्रादाः येन स्यां वीर्यवत्तरा॥ ( मनुः ) |
| २. पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम्। उतामृतत्वस्येशानो यदन्येनातिरोहति। ( य० वे० पुरुषसूक्तम्—२ ) | सर्वं पुरुष एवेदं भूतं भव्यं भवच्च यत्। तेनेदमावृतं विश्वं वितस्तिमधिरोहति॥ ( श्रीमद्भागवते २।६।१५ ) |
| ३. भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥ | भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्म्माणि दृष्ट एवात्मनीश्वरं॥ ( भाग० १।३।२१ ) |
| ४. एतावानस्य महिमातो ज्यायाँश्च पूरुषः। पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि॥ ( यजु० पु० सू०-३ ) | सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात्। महिमैष ततो ब्रह्मन् पुरुषस्य दुरत्ययः॥ पादेषु सर्वाभूतानि""। ( भा० २।६।१७,१ ) |

१. महाभाष्यं पस्पशाह्निकम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| | |
|---|---|
| ५. त्रिपादूर्ध्वमुदैत् पुरुषः पादोऽस्येहाभवत्पुनः। ततो विष्वङ् व्यक्रामत्साशनानशने अभि: ॥ ( पु० सू० ४ ) | अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु पादास्त्रयो बहिश्चासन्नप्रजानां य आश्रमाः। सृती विचक्रमे विश्वङ् साशनानशने उभे॥ ( भा० २।६।१९-२० ) |
| ६. ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत॥ ( यजु० पु० सू० ११ ) | मुखतोऽवर्तत ब्रह्म पुरुषस्य कुरूद्वह। बाहुभ्योऽवर्तत क्षत्रं क्षत्रियस्तदनुव्रतः॥ विशोऽवर्तन्त तस्योर्वोर्लोकवृत्तिकरीर्विभोः। पद्भ्यां भगवतो जज्ञे.............................। ( भा० ३।६।३०-३३ ) |
| ७. सोऽरोदीत्। यदरोदीत् तद्रुद्रस्य रुद्रत्वम्। ( श० ब्रा०... ) | यदरोदीः सुरश्रेष्ठ सोद्वेग इव बालकः। ततस्त्वामभिधास्यन्ति नाम्ना रुद्र इति प्रजाः॥ ( भा० ३।१२।१० ) |
| ८ सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। ( ... ... ... ) | लोकसंस्थां यथापूर्वं निर्ममे संस्थया स्वया। ( भा० ३।२०।१७।२ ) वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे। ( मनु० १ अ० ) |
| ९. चन्द्रमा मनसो जातः। ( यजु० पु० सू० ) | मनसश्चन्द्रमा जातः। ( भा० ३।२६।६१ ) |
| १०. अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानाः स्वरूपाः। अजो-ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः। ( श्वेताश्वतरोपनिषद् १।१ ) | अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां नमामः। अजा ये तां जुषमाणां भजन्ते जहत्येनां भुक्तभोगां नुमस्तान्॥ ( सां० का० १।१ ) |

**लौकिकगद्यकाव्यस्य विकासः**

गद्यानामपि वेदेभ्य एव विकासः। पद्यविकासस्तु संक्षेपेण पूर्वं प्रदर्शितः। पद्यानामिव गद्यानामपि प्रथमावतारो भाषायामेवाभवत्। श्रीमद्वाल्मीकिविरचिते वेदात्मनि रामायणे गद्यादर्शनाद् लोके व्यवहारातिरिक्तलेखनादिरूपेण गद्यप्रचारो न दृष्टः। काव्यायमानगद्यावताराभावे कारणं किमिति काव्यविकासमीमांसायां प्रक्रामति, तदर्थमिह यत्यते यथामति।

गद्यानां प्रथमदर्शनं मन्त्रब्राह्मणात्मकवैदिकसंहितास्वेव दृश्यते। गद्यबाहुल्यादेव कृष्णयजुर्वेदक्रोडीभूतानां काठक-मैत्रायणीप्रभृतिसंहितानां कृष्णत्वमभ्युपगम्यते। कृष्णयजुषस्तैत्तिरीयसंहितायां पद्यबन्धापेक्षया प्राचीनतमगद्योदाहरणानि समुपलभामहे। एवमेवाथर्वाङ्गिरोदृष्टब्रह्मवेदेऽपि षष्ठतमभागस्य गद्यायमानत्वं नाविदितम्। शतपथादिब्राह्मणानां गद्यरूपेणैवावतारः, यज्ञानां वाजपेयाग्निस्तोमराजसूयादीनां वर्णनात्मकत्वात्। वर्णनायाश्च गद्यरूपत्वेनैव सम्भवाद् ब्राह्मणसंहितानां गद्यात्मकत्वमुचितम्। उपनिषत्स्वपि प्राचुर्येण गद्यान्युपलभ्यन्ते। तस्माद् वेदेष्वधिकतरगद्योपलब्धिर्दृष्टिपथमवतरति। तदपेक्षया लोकभाषायां गद्योपलम्भः स्वल्पीयान्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पद्ये यथा रसभावादीनामानयनं सुकरम्, न तथा गद्ये। पद्यायमानगद्येष्वपि रमणीयशब्दानां रमणीयक्रमेणैव स्थापनात् काव्यत्वम्। पद्यमिव गद्येष्वपि छन्दसामनुभूतिस्तिष्ठत्येव। यद्यपि साऽक्षरगता मात्रागता वा न तिष्ठति, तथापि स्वरबन्धानुविधायिनी शब्दानां लघुगुरूच्चारणनियमितावश्यमाकलनीया। तस्मादेतादृशच्छन्दसोऽनुभूतीनां विच्छित्तिवैशिष्ट्याभावे श्रुतिकटुत्वादयो दोषाः प्रसज्ज्येरन्। तस्मात् पद्यानामिव गद्यसङ्घटनाया अपि काचिदस्तिरीतिः। का च सेति स्फुटयितुमसाम्प्रतम्। कठिनश्चास्या नियमः। सूक्ष्मेक्षिकयाऽवगन्तव्यः।

अत एव रसनिर्भरत्वोपपादनं गद्यबन्धमुखेन न सुशकमिति सर्वमभिसन्धायैवायमनुगमः 'गद्यं कवीनां निकषं वदन्ति' निष्पद्यते। येन हि सरसं गद्यं निर्मितम्, स एव वस्तुतः कविव्यपदेशयोग्यो भवति। तथा चोक्तमग्निपुराणप्रमाणमुपस्थापयद्भिश्चतुर्दशशतकसमुद्भूतैर्महाकविचन्द्रशेखरसूनुभिर्विश्वनाथाचार्यैः 'वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्'[1] इति। तेनैव काव्यस्य 'वाक्यं रसात्मकं काव्यम्' इति लक्षणमुक्त्वा 'दृश्यश्रव्यविभेदेन पुनः काव्यं द्विधा मतम्'[2] इत्यभिहितम्।

अग्निपुराणे[3] गद्यस्य पञ्चभेदा वर्णिताः। तद्यथा—

आख्यायिका कथा खण्डकथा परिकथा तथा।
कथानिकेति मन्यन्ते गद्यकाव्यञ्च पञ्चधा॥ इति।

**गद्यशैलीविकासः**

पुष्यमित्रशुङ्गसमानकालभाविमहर्षिपतञ्जलिप्रणीतव्याकरणमहाभाष्येऽवलोकितेभ्यः 'वासवदत्ता-सुमनोत्तरा-भैमरथी' इत्यादिकथाख्यायिकाभ्यश्च बहोः कालात् पूर्वमेव गद्यकाव्यविकासः समजनि। चरकेणाप्यायुर्वेदसंहितायां गद्यस्य यत्र तत्रोपयोगः कृतः। कविवर्यैः व्यासोपाधिविभूषितैर्गाङ्गेयभीष्मसमकालिकैः स्वसम्पादितपुराणसंहितासु ललितपदगुम्फैर्गद्यान्यारचितानि। भगवान् पाणिनिश्चाणक्यपूर्वभावी। कौटल्यार्थशास्त्रे गद्यान्युपलभ्यन्ते।

दर्शनसूत्रभाष्यप्रणेतॄणां समये गद्यलेख एव प्राचुर्य्येणाविन्दत। ततश्चापि गद्यसाहित्यप्राचुर्य्यमाकलनीयम्। कवीनामादर्शभूते महाभारते सुललितगद्यानि विराजन्ते। जय-भारतसंज्ञापि तस्यैवेतिहासोत्तमस्य पुराणादिषु प्रसिद्धा। तथा च—

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा।
कर्मश्रेयसि मूढानां श्रेय एव भवेदिह॥
इति भारतमाख्यानं कृपया मुनिना कृतम्।
भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शितः॥[4]

इति साक्षाद्व्यासशिष्येण रोमहर्षणिना सूतेन स्पष्टमुक्तम्।

ततश्चाधुनिका मैक्समूलरमतदीक्षिता हठादेव संस्कृतसाहित्याक्रमणपराक्रमनक्रतामुद्वहन्तोऽनार्यचेष्टितमेव चेतयन्ति, न तु परीक्ष्य वदन्ति। सम्प्रदायक्रमानधिगमाद् गुरूपासनं

१. सा० द०, १. परि०।
२. सा० द० ६।१।
३. कादम्बरीभूमिका, पृ० ५।
४. श्रीमद्भा० ७।३।१।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विनैव कोषादिबलात् स्वाध्यायदुर्विदग्धास्तु मीमांसायामितिहासमात्रप्रमाणवादिनो विचार-व्यामुग्धा एव।

**इदमत्राकूतम्**

गद्यशैली त्रिधा—१. दार्शनिकी, २. काव्यमयी, ३. साङ्करी च।

१. दार्शनिकी—व्याकरण-निरुक्त-दर्शन-धर्मशास्त्र-गृह्य-कल्प-शुल्बसूत्राणां भाष्य-वृत्ति-वार्त्तिकादिषु गद्यान्युपलभ्यन्ते। वर्षोपवर्षपतञ्जलिप्रभृतयो भाष्यकारा इमामेव शैलीं समाश्रयन्ते स्म। व्याकरणमहाभाष्यं कथोपकथनशैलीप्रायमेव। सा चेयं कथोपकथनशैली शबरस्वामिनाऽपि समाश्रिता। पक्षधर-गधाधर-रघुनाथशिरोमण्यादिभिर्विकासिता शैली गद्यानां तु वादशैलीति मन्यामहे।

२. काव्यशैली व्यासाचार्य्यैः पल्लविता, ओजोगुणविशिष्टा प्रसादसरसा च। पश्चिमभारतप्रसिद्धक्षत्रपस्य रुद्रदाम्नः शिलालेखस्तु महाकविं भट्टबाणं स्मारयति। यः शिलालेखो बाणात् पञ्चशतवर्षात् प्राग् ईशवीयवर्षप्रारम्भे लिखित इत्यैतिहासिकाः प्रवदन्ति। सुबन्धु-बाण-दण्डी-अम्बिकादत्तप्रभृतयो गद्यकवय एनामेव शैलीं समाश्रयन्ते स्म।

३. सङ्करशैली—इयं प्रसन्नगम्भीरशैलीति शाङ्करभाष्यव्याख्यानावसरे श्रीमद्-वाचस्पतिमिश्राः प्रोचुः 'भाष्यं प्रसन्नगम्भीरम्' इति। शङ्कराचार्यकृतोपनिषदादिभाष्येषु सुरभारत्या वीणानिक्वाण इव वर्णानां सुमधुरो झङ्कारः श्रुतिमावर्जयति। शाङ्करं वाक्यं सरलसरलमपि गम्भीरतरं भवति। दार्शनिकैरित्थं काव्यशैली समाश्रिता, यतस्तृतीयेयं मिश्रशैलीति व्यपदिश्यते।

प्रौढदुष्प्रधर्षेऽपि न्यायदर्शने जयन्तभट्टः शैलीमिमां जग्राह। आनन्दवर्धनाभिनवगुप्त-पण्डितराजजगन्नाथादयः काव्यतत्त्वविवेचनानि प्रपञ्चयन्तः सङ्करशैलीमेवाश्रयन्तीति संक्षेपतो गद्यशैल्यास्त्रैविध्यमुक्तम्।

**गद्यकाव्यस्याभ्युदयः**

आचार्यकात्यायनः 'आख्यानाख्यायिकेतिहासपुराणेभ्यश्च'[1] इति वार्त्तिकं प्रणिनाय। ततश्चाख्यानाख्यायिकयोः पृथग्रूपेणोल्लेखः कृतो दृश्यते। पतञ्जलिनाऽपि 'यवातिं यवक्रीतं प्रियङ्गवः' एतान्याख्यानोदाहरणानि, 'वासवदत्ता सुमनोहरे च' इत्याख्यायिकोदाहरणे इति नामनिर्देशः कृतः। आचार्यकात्यायनस्तु पाणिनेः स्वल्पकालोत्तरभावी।

'पाराशर्य्यशिलालिभ्यां भिक्षुनटसूत्रयोः'[2] इति सूत्रे नटसूत्रशब्दो भरतमुनिं स्मारयति। राजशेखरोऽपि 'अभिनयं भरतः' इति वदन् तमेव द्रढयति। वेदेष्वप्याख्यानानि गाथारूपेण सन्ति। महाभारते आख्यानोपाख्यानानामतितरामुपलम्भः। व्यासकृते पुरञ्जनोपाख्यानं विदुलोपाख्यानञ्च कथा एव। तस्मात् 'गाथा' एव गद्यकाव्यानां जीवातुभूता। अथर्वसंहितायां 'इतिहासस्य वै पुराणस्य च गाथानां नाराशंसीनाञ्च प्रियं धाम भवति य एवं वेद' इति स्पष्ट-मुल्लेखः। तस्माद् वेदादेव गद्य-पद्यात्मकसंस्कृतकाव्यस्य विकासः सिध्यति।

१. अष्टाध्यायी—४।२।६०। २. अष्टाध्यायी—४।३।११०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कथोपकथनशैली दृश्यकाव्येषु गद्यायमाना दृश्यते। सैव पद्येष्वपि, ततः भिन्ना कालिदासादिविरचितमहाकाव्येषु दृश्यते। वादशैली शास्त्रार्थोपयोगिनी, बौद्धसङ्घर्षकाले विकासिता। तस्मात् पद्यवद् गद्यसाहित्यमपि प्रचुरमुपलभामहे।

प्रसिद्ध्यनुसारम् ( लक्ष्यादर्शानुरोधात् ) यथा भगवतो वाल्मीकेः रामायणे छन्दोबद्ध-लोककाव्यरीतिः प्रसूता, तथैवास्या माधुर्य्यप्रभावः कविषु बद्धादरो बभूव। ततश्च गद्यकाव्य-निर्माणप्रवृत्तिः शिथिलीबभूव।

वस्तुतस्तु पद्याभास एव गद्यमिति प्रत्यक्षम्। प्राचीनगद्यकाव्यान्यपि पद्यमयीकृतानि, यथा कादम्बर्या अपि पद्यकादम्बरी सञ्जाता। दशकुमारचरिताख्यं गद्यकाव्यमपि जयपुरात् पद्यबद्धं प्रकाशितम्।

एवमतिसंक्षेपात् सम्यग्ज्ञातशब्दानां प्रयोगविज्ञानस्थानभूतकाव्यानां श्रुतिमूलकत्वं प्रतिपादितमिति शिवम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# कविः कविता च

श्रीछोटेलालत्रिपाठी
अनुसन्धाता
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

आ च नवमशताब्द्या आ च द्वादशशताब्द्या मुख्यानां कतिपयकाव्यानां परिशीलनेन तत्रत्यसामाजिकविषयतत्त्वान्वेषणे प्रवृत्तः प्रथमं विषयप्रवेशाय लघ्वीं काञ्चन भूमिकामारचयितुमिच्छामि । 'कविः काव्यम्' इति शब्दद्वयस्य पौर्वापर्यविषये महती विप्रतिपत्तिरनुभूयते । किं कविशब्दः प्रथमं प्रवृत्तः ? उत काव्यशब्दः ? कविशब्दः किं जातिप्रवृत्तिनिमित्तकः ? आहोस्विद्यौगिकः ? तत्र द्वेधा प्रयोगमुपलभामहे—काव्यस्य कर्ता कविरिति, कवेः कर्म काव्यमिति। प्रथमेन प्रयोगेण क्रियाप्रवृत्तिनिमित्तकत्वं कविशब्दस्य, द्वितीयेन च तस्य जातिप्रवृत्तिनिमित्तकत्वमवगम्यते ।

शब्दप्रवृत्तिनिमित्तनिर्धारणे मन्ये वृद्धव्यवहारावलम्बिनः प्रयोगादृते नान्यत् किञ्चन प्रमाणं बलीय इति । एवं वदतो मे चायमाशयो यदन्यानि प्रमाणानि दवीयांसीति। भवेयुरन्यान्यपि प्रमाणानि, किन्तु यादृशं प्रयोजनं शब्दद्वारा प्रतिपादयिषितं तद् व्यवहारैकसाध्यमित्यत्र न कश्चन संशयः ।

हृद्गतानां नैकविधानां भावानामभिव्यक्तये शब्द एव परमं साधनम् । शब्दैश्च व्यवहारोऽनिदम्प्रथमतात्कालाल्लौकिकेषु प्रावर्तत । तत्र कवेः कार्यं काव्यमिति व्यवहारे जातिप्रवृत्तिनिमित्तकः कविशब्दः; काव्यस्य कर्ता कविरिति व्यवहारे क्रियाप्रवृत्तिनिमित्तकस्सः । यथा हि राजशब्दः, राज्ञस्सतः पुरुषस्य कार्यं राज्यम्, राज्यस्य कर्ता राजेति विप्रतिपत्तौ[1] जैमिनिर्महर्षिस्तेष्टयधिकरणे न्यायमाह—राज्ञस्सतस्तत्कर्म राज्यमिति । तेन न्यायेन कवेस्सतस्तस्य कार्यं काव्यमित्युत्पश्यामः । आलङ्कारिकाणामपि सम्मतमिदं प्रतिभाति ।

काव्यस्य कारणानि परिगणयन् मम्मटाचार्यः शक्तिः, निपुणता, अभ्यासश्चेति त्रीणि निश्चिनोति । त्रयाणामपि दण्डचक्रचीवरन्यायेन कारणत्वमित्यपि तस्य[2] सिद्धान्तः । तत्र शक्तिर्नाम 'कवित्वबीजरूपसंस्कारः' इत्यपि स वृत्तिग्रन्थे निर्वक्ति । बीजेषु तत्तदङ्कुरजननसामर्थ्यं पूर्वमेव विद्यमानं सदङ्कुरादीन् जनयतीति प्रसिद्धम् । बीजेषु सत्यप्यङ्कुरजननसामर्थ्ये क्षेत्रस्य कर्षणम्, समीकरणम्, दौहृदादीनां प्रयोगः, समर्थबीजानामैकीकरणम्, देशः, काल इत्यादिषु सत्सु कार्यजनकत्वं तेषां प्रसिध्यति । तत्रैतेषु कतिपयानां समानयोगक्षेमावहत्वम्, केषाञ्चन न्यूनाधिकभाववत्त्वञ्च लोकैस्स्वीक्रियते । तथैव कवितालताया जनने संस्कारविशेषोऽयं कवित्वबीजरूपः । संस्कारश्चानुभवजन्य आत्मनिष्ठो गुणः । इह जन्मन्यनुभवाभावेऽपि जन्मान्तरीयशरीरावच्छिन्न आत्मनि कवितालताजननानुभवः, तज्जनितश्च संस्कार आत्मनि समवैति इतीह जन्मनि तादृशविलक्षणकार्यं विलोक्यानुमातव्यं भवति । एतादृश-

---

१. जै० सू० २।३।२. ।   २. का० प्र०, पृ० १३० पू० सं० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संस्कारविशेषे सत्यपि निपुणताभ्यासयोरभावे स संस्कारः फलदायी न भवतीति हेतोर्मम्मटाचार्यः 'इति हेतुस्तदुद्भवे, न तु हेतवः' इत्यभिदधे। एतेन कविशब्दो जातिप्रवृत्तिनिमित्तक इत्येष्टव्यम्।

जगन्नाथः पण्डितराजस्तु प्रतिभामेव तादृशशक्तिरूपां कवितालतायाः कारणमङ्गीकुर्वाणो निपुणताभ्यासयोः सहकारिकारणतां व्यवस्थापयाम्बभूव। सर्वथा निरपेक्षकारणता तु शक्तेर्न प्रसिध्यति मतद्वयेऽपि। अस्तु प्रकृतमनुसरामः।

कविशब्दस्य जातिप्रवृत्तिनिमित्तकत्वे सिद्धे स कविर्लोकोत्तरया कवितया काव्यानि रचयन् सहृदयानां मनांस्यावर्जयतीति कालिदासीयकृतिषु वयमनुभवामः। कवयितॄणां मध्ये केचन यशोऽधिगमाय, अपरेऽर्थप्राप्तये, अन्ये च शिवेतरक्षतये प्रवर्तन्ते। तत्र यशोऽधिगमाय येषां काव्यनिर्माणे प्रवृत्तिः, ते यावत् लोकान् व्यवहारज्ञानसमुत्पादनपूर्वकं न शिक्षयेयुः, सहृदयान् परां निर्वृतिं वा न प्रापयेयुः, कुपथे प्रवृत्तांस्ततो निवर्तयितुं सतः पदार्थान् अनितरसाधारणैर्वचोनिचयैर्न ग्राहयेयुः, तावद् यशोऽधिगमे न योग्या भवेयुः। अर्थप्राप्तये यैः काव्यानि निर्मीयन्ते ते कथमपि दानशौण्डान् वशीकर्तुं चित्रकाव्यान्येव निर्मिमते। शिवेतरक्षतये येषां कवीनां प्रवृत्तिस्ते न केवलं स्वयममङ्गलं दूरीकृत्य मङ्गलान्यवाप्नुवन्ति, किन्तु परानपि दैवविमुखान् कुमार्गे प्रवृत्तान् उपदिश्य दैवचिन्तनव्यग्रान् विधाय काव्यानि प्रापयन्तीति। कवीनां विविधाः प्रवृत्तयः। यशो वार्थं वा शिवेतरक्षतिं प्राप्तुं प्रवृत्ता अपि कवयो न स्वार्थमात्रपराः। यथारुचि परानपि तर्पयितुं काव्यानि रचयाम्बभूवुः।

भिन्नरुचिः खलु लोकः। चित्रकाव्यान्येवाधीत्यानन्दमनुभवन्ति केचन, रसवन्ति ध्वनिकाव्येष्वेव केचन प्रवर्तन्तेऽध्येतुम्, अपरे च गुणीभूतकाव्येभ्यो रोचन्ते इति विभिन्ना सामाजिकानां गतिः। तत्तस्य प्रीतिं जनयितुं कवीनां प्रवृत्तिरपि विभिन्ना। कवयश्च ऋषयश्चेत्युभये समानयोगक्षेमावहाः। सामाजिकानां दुष्प्रवृत्तिं दुराचारञ्चानुभूय ऋषयस्स्मृतिनिबन्धारः प्रभुसम्मितशब्दानुशिष्टान् सामाजिकाचारान् सुहृत्संमितैश्शब्दैस्स्मारयन्तः सतीं प्रवृत्तिमुपदिशन्ति दुराचारेभ्यश्च निवर्तयन्ति। इमान्यपि स्मार्तानि वचनानि विस्मरतोऽपरिगणयतश्च लोकान् परिवर्तयितुं कवयस्तानेव सामाजिकान् विषयान् कान्तासम्मिताभिर्वाग्भिर्ग्राहयन्ति।

तत्तत्प्रान्तेषु प्रतिशतकं प्रवृत्ताः कवयः प्रान्तगतां भावनामुत्सृज्य लोकेषु प्रसृतां तां भावनामुत्पादयितुं देशस्याखण्डतां व्यवस्थापयितुं विविधानि काव्यानि ससृजुः। स्मृतिग्रन्थनिर्मातॄणां पन्था एवैभिरत्यनुसृतः। यदेव निमित्तं स्मृतिग्रन्थानां प्रणयने ऋषीणां दर्शनम्, तदेव दर्शनं निमित्तं कवीनामपीति कथनं नातिशयोक्तिमावहति। अत एव भट्टतौतेनाह—'नानृषिः कविरित्युक्तम् ऋषिश्च किल दर्शनात्' इति।

किञ्च, भूयसां कवीनामिमां प्रवृत्तिमेकरूपामनुभूय ममेदं प्रतिभाति यत्तदानीन्तनानां भारतीयानां विविधानि काव्यानि प्रपठ्य तत्तद्रसास्वादने शब्दार्थोऽवगतसौन्दर्यानुभवे नारिकेलपाकमनुसृत्य काव्यानि प्रवर्तितवतां कवीनां हृद्गतभावानामाविष्करणे भूयसी प्रवृत्तिरुदजायतेति। कथमन्यथा इयतः प्रभूतस्य संस्कृतसाहित्यस्योद्गमोऽभविष्यत्, यदि सामाजिकाना-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मत्र रुचिर्नाभविष्यत् । न खलु विना परस्परापेक्षां कार्यद्वयस्य समुद्भवो भवितुमर्हति । भारतीयानामियं सरणिस्साधारणी चिरन्तनादेव कालात् सम्प्रवृत्तेति काव्यमीमांसाकारस्य[1] राजशेखरस्य वचनेभ्योऽवगच्छामः ।

यथा जगन्नियन्ता परमेष्ठी पितामहो यथापूर्वं जगत्सृजन् जगतोऽनादित्वमभिव्यनक्ति, तथैव काव्यपुरुषोऽपि पुरेव काव्यानि सृजन् कवितालताया अनादित्वमवद्योतयतीति कथनं न युक्तिभिर्विहीनम् । तांस्तान् कविवरान् नूनं वयं केनचन कालेन परिच्छिन्द्मः, किन्तु वस्तुतः पर्यालोच्यमाने तस्य तस्य कवेः काल आनुमानिक एव साधनीयो भवति । अनुमानानि च न व्यवस्थितानि । कविवरं कालिदासं खैस्ताब्दात् पूर्वं केचन मेनिरे, तदनन्तरञ्चापरे सञ्जगदिरे, तत्रापि मतैक्यमधुनापि न विलोक्यते ।

न खल्वेतादृशकालविनिर्णय आयूंषि व्यतियन्तो लोकास्तिष्ठन्त्विति हेतोः काव्यानि विरचितवन्तः स्युः कवयः । महाफलानि खलु काव्यानि । तदिदं प्रागवोचाम—यदुदिश्य काव्यानि कवयः प्रवर्तितानीति । भासकालिदासाश्वघोषादीनां काव्यानि विमृशन्तस्तदुत्तरवर्तिनस्तयैव शैल्या स्वप्रतिभोत्थापितया भिन्नया वा शैल्या, तात्कालिकसामाजिकावश्यकतानुसारेण काव्यानि निबबन्धुः ।

इदन्तु निश्चितमेष्टव्यं भवति यद् महाकवयः पूर्वेषां कवीनां समयम्, औचित्यानौचित्यधाराम्, अलङ्कारशास्त्रप्रवर्तितसरणेरनुसरणञ्च साधु पर्यवेक्ष्य काव्यानि रचयाम्बभूवुः । यद्यपि काव्यनिर्माणप्रक्रियायां भवन्ति कवयः स्वतन्त्राः, तथापि तेषां स्वातन्त्र्यं नोच्छृङ्खलतारूपम् । उच्छृङ्खलत्वञ्च पूर्वजानुशासनाननुवर्तित्वम् । न तथावर्तन्त कवयः । 'लोकशास्त्रकाव्याद्यवेक्षणात्' इति खलु मम्मटाचार्योऽनुशास्ति । आ च कुमारिकाया आ च हिमवतो यत्र क्वचन कोणे वर्तमानोऽपि कविर्विलक्षणां शक्तिं प्रतिभां बिभ्राणो विभिन्नप्रान्तीयसामाजिकसम्प्रदायागतव्यवहारान् अलौकिक्यानितरसाधारण्या दृशा समनुभूय क्वचिदतिदेशेन क्वचिच्चोपदेशेन च वर्णयन् सामाजिकान् वशीकरोति । तत्र नवमीं शताब्दीमारभ्य द्वादशशताब्दीं यावद् ये महाकवयस्समजनिषत तेषु कतिपयानां प्रसिद्धानां कवीनां काव्यानि विलोक्य तत्रत्यसामाजिकतत्त्वरत्नानि सङ्गृह्य तानि मालारूपेण सङ्ग्रथ्य विदुषां कण्ठेषु परिधातुमिच्छामि । इमाश्च रत्नमालाः प्रतिगृह्य मामनुगृह्णन्तु विद्वन्मणय इति प्रथमं सम्प्रार्थ्य निबन्धगहनं प्रविविक्षामि ।

१. काव्यमी० १–१ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# प्राचीनभारते शब्दसंक्षेपविद्या[1]

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
निदेशकः, अनुसन्धानसंस्थानस्य,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणस्याम् ।

साम्प्रतं वयं सर्वे शब्दसंक्षेपजगति विचरामः । अतोऽयं समुदेति प्रश्नो यत् प्राचीने काले भारते वर्षे शब्दसंक्षेपा अभूवन् न वा ? संस्कृतस्य प्राचीने वाङ्मये विलसति प्रणववाचक ओम्-शब्दः । सन्ध्यक्षररूपोऽयम् अकारोकारमकाराणाम् । विष्णोर्नाम्नः संक्षेपः—अकारः, उकारः शिवस्य, ब्रह्मणश्च मकारो वर्ण इति । इमे संक्षेपास्तथा रूढिं प्रपन्ना यत् समतीते काले विस्मृतानि खल्विदमीयानि पूर्णनामानि । परतश्चैत एव संक्षेपास्तत्तन्नाम्नां वाचकत्व-मुपगताः । बृहदारण्यकोपनिषदि 'द'-वर्णो दमदानदयाशब्दानां संक्षेपरूपो दर्शितः ।

संगीतशास्त्रस्य 'स रि ग म प ध नि' इत्येते सप्त स्वराः क्रमशः षड्ज-ऋषभ-गन्धार-मध्यम-पञ्चम-धैवत-निषादानां संक्षेपरूपाः सन्ति । एतेषाम् इयं संक्षेपपरम्परा प्राचीनात् कालादेव प्रवर्तते । संगीतपारिजातस्य श्लोका इमे द्रष्टव्याः—

सरी गमौ पधौ निश्च स्वरा इत्यपि संज्ञिताः ।
चतुःश्रुतिसमायुक्ताः स्वराः स्युः समपाभिधाः ॥ ६६ ।
रीणां गानां तथा मानां धानां नीनां च मेलने ॥ १४५ ।

स=षड्जः, रि=ऋषभः, ग=गन्धारः, प=पञ्चमः, ध=धैवतः, नि=निषादः, तथा म=मध्यमः—इति । सौविध्याय षड्जस्य संक्षेपो मूर्धन्यस्थाने दन्त्यसकारत्वेन, ऋषभस्य च स्वरस्थाने 'रि' इति व्यञ्जनरूपतयाऽङ्गीकृतो मुखसुखार्थम् ।

कामसूत्रस्य जयमङ्गलाख्यव्याख्यानुसारेण शब्दसंक्षेपस्येयं प्रक्रिया प्राचीने भारते **'अक्षरमुष्टिका'** इति **'अक्षरमुद्रा'** इति वा नाम्ना प्रसिद्धिमुपेता । अक्षरमुष्टिकायाः प्रयोजन-द्वयमाख्यातम्—१. गूढवस्तुमन्त्रणा (यतो राष्ट्रविरोधी जनस्तामवगन्तुं न पारयेत्), २. ग्रन्थ-संक्षेपश्चेति ।

आचार्यरविगुप्तेन चन्द्रप्रभाविजयाख्ये काव्ये 'अक्षरमुष्टिका'-सम्बद्धमेकं पूर्णं प्रकरणमेव संदृब्धम् आसीत् । किन्तु दौर्भाग्याद् नोपलभ्यते साम्प्रतमुक्तो ग्रन्थः । अक्षरैर्या शब्दान् आभासयति सा 'अक्षरमुष्टिका' 'अक्षरमुद्रा' इत्यभिधीयते । ग्रन्थस्य नाम्नां वा संक्षेपीकरण-मात्रम् एतस्याः प्रयोजनम् आसीत् । यस्याम् अक्षरमुष्टिकायामक्षरैः शब्दाभासो न भवति, सा निराभासा 'अक्षरमुष्टिका' 'भूतमुद्रा' इति संकीर्त्यते । गुप्तमन्त्रणा प्रयोजनमासीद् एतदीयम् । राजनीतिविषये चौर्यशास्त्रे च समाश्रीयते स्म 'भूतमुद्रा' । चौर्यशास्त्रस्य 'षण्मुख-कल्पः' इत्याख्ये ग्रन्थे समुपलब्धे सति भूतमुद्राया अस्या विषये प्रभूतं ज्ञातुं प्रभविष्यामः ।

---

१. निबन्धोऽयं १९७७ खैस्ताब्दस्य जूनमासे पेरिसनगरे समायोजिते तृतीयविश्वसंस्कृत-सम्मेलनावसरे निबन्द्धाऽऽङ्ग्लभाषामाध्यमेन पठित आसीत् । तस्यायं संस्कृतानुवादः सर्वतः प्रथममिह सुषमायां प्रकाश्यते—सं० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आचार्यरविगुप्तेन 'अक्षरमुद्रा'त्वेन शब्दसंक्षेपविद्याया उदाहरणम् आर्याछन्दोबद्धं ज्योतिषशास्त्रविषयकम् इत्थम् उपस्थापितम्—

मेवृमिकसिकतुवृधमकुंमी मूधसबांसुशकनिधक आव्याः।
फा चैं वै ज्ये आ श्रा भा आ का मा पौ मा चैव ॥

अस्या आर्यायाः प्रथमे चरणे द्वादशराशीनां संक्षेपो विहितो यथा—मे = मेषः, वृ= वृषः, मि = मिथुनम्, क = कर्कः, सिं = सिंहः, क = कन्या, तु=तुला, वृ=वृश्चिकः, ध = धनुः, म = मकरः, कुं = कुम्भः, मी=मीनः—इति।

द्वितीयचरणे 'मूधसबांसुशकनिधक आव्याः' इत्यत्र राशीनां लग्नस्यानन्तरं विशिष्टाः संज्ञाः संक्षेपीकृताः। यथा—मू = मूर्तिः, ध = धनम्, स = सहजः, बां = बान्धवः, सु=सुतः, श = शत्रुः, क = कलत्रम्, नि = निधनम्, ध=धर्मः, क = कर्म, आ=आयः, व्य=व्ययश्चेति।

तृतीये चतुर्थे च चरणे द्वादशमासनामानि संक्षिप्तानि। यथा—फा = फाल्गुनः, चै= चैत्रः, वै = वैशाखः, ज्ये = ज्येष्ठः, आ = आषाढः, श्रा = श्रावणः, भा = भाद्रपदः, आ= आश्विनः, का=कार्तिकः, मा=मार्गशीर्षः, पौ=पौषः, मा = माघश्चेति। लगधप्रणीते वेदाङ्ग-ज्योतिषे शब्दसंक्षेपस्य प्रभूतान्युदाहरणानि लभ्यन्ते। आपस्तम्बगृह्यसूत्रे (६, १५, २) ज्योतिषशास्त्रविषयमधिकृत्य शब्दसंक्षेपस्य निदर्शनम् इत्थं लभ्यते—

रोरेममृज्येचिषु वृद्धिरादौ ह्रात्ये च वान्त्यश्रवशाश्वयुक्षु।
शेषेषु नाम्वोः कपरस्स्वरोऽन्त्यः स्वाप्वोरदीर्घस्सविसर्ग इष्टः॥

रो = रोहिणी, रे = रेवती, म=मघा, मृ = मृगशिरा, ज्ये = ज्येष्ठा, चि = चित्रा, श्रव = श्रवणः, श=शतभिषक्, आ = आर्द्रा, मू=मूलं चेत्यादयः संक्षेपाः।

कथासाहित्ये सम्पूर्णस्य श्लोकचरणस्य संक्षेपनिदर्शनम् इत्थम् आसाद्यते—'अ. प्र. शि. ख.' इति। एकैको वर्ण एकैकं चरणं संक्षिपति। यथा—

अ. = 'अनेन तव पुत्रस्य', प्र. = 'प्रसुप्तस्य वनान्तरे'।
शि. = 'शिखामादाय हस्तेन', ख = 'खड्गेन निहतं शिरः'॥ इति।

पञ्चाङ्गेषु ज्योतिषविषयकग्रन्थेषु च प्रसिद्धस्य शुदि (सुदि) इत्यस्य शुक्लपक्षार्थे, बदि (वदि) इत्यस्य च कृष्णपक्षार्थे प्रयोगश्चिराद् दृश्यते। पाणिनेर्गणपाठे शब्दद्वयमिदम् आकृतिगणतया (१, १, ३७) पठितम्। तत्र 'शुदि' इति तालव्यादिः पाठः। परन्तु वैयाकरण-सिद्धान्तकौमुद्यास्तत्त्वबोधिन्यां व्याख्यायां दन्त्यादिः 'सुदि'-शब्दो लिखितः। लोके प्रयोगाधिक्यात् शुदि-शब्दोऽपभ्रष्टः सन् दन्त्यादिरूपतया प्रयोक्तुमारब्धः। परतश्च कालान्तरेऽस्याप्रामाणिकं दन्त्यादिरूपमेव प्रामाणिकतया स्वीकृतम्। अस्याव्ययान्तर्गतत्वाद् न कश्चिद् दोषतोऽस्याप्रामाणिकरूपं प्रति ध्यानम् आकष्टुं प्राभवत्। तालव्यादिरूपाद् दन्त्यादिरूपस्योच्चारणं सरलतरं सुखकरं च जायते। अतो लोकप्रभावात् सम्पूर्णे संस्कृतवाङ्मये दन्त्यादिः सुदिशब्दोऽपि प्रयोक्तुमारब्धः। केचिद् वैयाकरणा एनं साधुशब्दं मत्वा व्युत्पत्तिं प्रदर्शयामासुः। यथा—सुष्ठु दीव्यति; सु + दिव् + डि = सुदि—इति। परन्तु त एव बदि-शब्द-व्युत्पत्तिप्रदर्शनावसरे मौनमाकलयामासुः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वस्तुतस्तु शुदि-शब्दः शुक्लदिवसशब्दस्य संक्षेपरूपः ( शुक्ल = शु, दिवस = दि )। मॉनियरविलियममहोदयः स्वकीये प्रसिद्धे शब्दकोशे वदिशब्दव्युत्पत्तिप्रसङ्गे 'वद्य'-शब्दमुपस्थापितवान्। अक्षरमुद्राया ज्ञानाभावात् तदीया सा केवलकल्पना। बदि-शब्दो बहुलदिवस-शब्दस्य संक्षेपरूपः ( बहुल = ब, दिवस = दि )। रघुवंशमहाकाव्ये ( ११, १५ ) कुमारसम्भवे ( ४, १३; ७, ८ ) चायं बहुलशब्दो दृश्यते कृष्णपक्षार्थकः। प्राकृतभाषाया घनान्धकारार्थको विद्यते बहलशब्दः। संक्षिप्तीकृते वर्णे कस्यचिच्चिह्नस्य योजनाय नियमो नासीत् प्राचीने भारते। अतः किमपि चिह्नं विना संक्षिप्तीकृतौ 'शु' तथा 'दि' शब्दौ, 'ब' तथा 'दि' शब्दौ च समासीभूततया परिणतौ—'शुदि' इति 'बदि' इति च जातौ।

शब्दसंक्षेपस्येयं प्रवृत्तिस्तन्त्रयुगे द्रष्टुं शक्यते। मेरुतन्त्रप्रकाशानुसारेण हिन्दू-शब्दः केषाञ्चन शब्दानां संक्षेपरूपो यथा—

'हीनं च दूषयत्येव स हिन्दूरुच्यते प्रिये' इति।

बार्हस्पत्यशास्त्रानुसारेण तु—

हिमालयं समारभ्य यावदिन्दुसरोवरम्।
तं देवनिर्मितं देशं हिन्दुस्थानं प्रचक्षते॥ इति।

हिमालयाद् 'हि' इत्यस्य इन्दुसरोवराच्च 'न्दु' इत्यस्य संक्षेपं कृत्वा हिन्दु-शब्दः कल्पितः। केचन विद्वांसः शब्दसंक्षेपस्येमां प्रवृत्तिम् अथर्ववेदे ( ९, १०, ५ ) विलोकितवन्तः। यथा—'हिंकृण्वती""""दुहामश्विभ्याम्' इति मन्त्रस्य 'हिंकृण्वती' इति शब्दाद् 'हिं'-शब्दम्, 'दुहाम्' इत्यतश्च 'दु'-शब्दम् आकृष्य 'हिन्दु' इति शब्दः कल्प्यते। ऐतिहासिकं तथ्यं नास्त्यस्य निबन्धस्य विषयः। वयमिह केवलं शब्दसंक्षेपप्रवृत्तिमेव परीक्षितुं प्रवृत्ताः स्मः।

'नामग्रहणे नामैकदेशग्रहणम्' इति न्यायानुसारेण कस्यचन शब्दस्यैकतरो भागो गृह्यते। संगीतशास्त्रे शङ्कराभरणनामा रागः 'शङ्करा' इति रूपेण स्मर्यते। 'विहङ्गडा' इति शब्दो 'विहङ्गमराग'-शब्दात् संक्षेपीकृतः। 'विहागड़ा' इति 'विहाग' इति च शब्दौ विहङ्गडा-शब्दापभ्रंशौ।

शब्दसंक्षेपस्येयं सरणिः पाणिनीये व्याकरणे वर्तते। अज्द्वयादूर्ध्वं वर्णलोपो भविष्यति संज्ञाशब्दानाम्। पाणिन्यनुसारेण ( पा० ५, ३, ८३ ) 'देवदत्तः' इति संज्ञा वर्णलोपानन्तरं 'देविल' 'देविक' 'देविय' इति रूपाणि लप्स्यते। कात्यायनानुसारेण तु दीर्घाणां शब्दानाम् अन्यतरो भागः प्रयोक्तव्यः। यथा 'देवदत्त' इति शब्दो 'देव' इति 'दत्त' इति वा रूपेण संक्षेपीकर्तुं शक्यते।

संवत्-शब्दो हायनार्थको भृशं प्रयुक्तो ज्योतिषे। पाणिनीये गणपाठेऽव्ययत्वेन पठितोऽयं शब्दः संवत्सरशब्दात् संक्षेपीकृतः। परन्तु तथ्यस्यास्यानवगतत्वाद् विद्वांस एनम् इत्थं व्युत्पादयन्ति—'संवसन्ति ऋतवोऽत्र', इति 'संवयते—√वय् गतौ' इति च।

एवं तावद् शब्दसंक्षेपस्य प्रकारत्रयं दर्शितम्—

१. कस्यचन पदस्य प्रथमवर्णरूपतया;

२. पदद्वयस्य प्रथमवर्णयोः समासरूपतया;

३. दीर्घपदस्यान्यतरभागप्रयोगरूपतया चेति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

साम्प्रतं वयं शब्दसंक्षेपस्य चतुर्थं प्रकारं दर्शयामः। तस्यायं प्रकारः प्रत्याहार इति कथ्यते। शब्दसंक्षेपस्य नेमं शब्दं निर्दिष्टवान् पाणिनिः। सर्वतः प्रथमं कात्यायनः प्रयुक्तवान् शब्दसंक्षेपस्यास्य प्रकारविषये प्रत्याहारशब्दम्। पाणिनिना दर्शितः शब्दसंक्षेपस्यायं प्रकारो न केवलं भारते वर्षे प्रत्युत सम्पूर्णे संसारे विराजते चरमोपलब्धिः।

यद्यपि पाणिनेरियं प्रत्याहारप्रक्रिया व्याकरणशास्त्राभिसम्बन्धाद् विद्यते पारिभाषिकी, तथापि पाणिनिकाले ततोऽपि पूर्वं चेयं स्वसत्तां साधयति। किन्तु तदानीं नेत्थं विकसितम् अभूद् विज्ञानमिदम्। पाणिनेः पूर्वं शब्दस्य प्रथमवर्णरूपतया, लम्बायमानस्य शब्दस्य च प्रथमभागरूपत्वेन द्वितीयभागरूपत्वेन वा शब्दसंक्षेपप्रक्रिया विराजते स्म। द्वयोः शब्दयोः प्रथमाक्षरे समासरूपतया प्रयुज्येते स्म पाणिनीये काले। परन्तु पद्धत्याऽनया संक्षिप्तीकृतौ शुदि-बदि-शब्दौ सन्निवेशितावव्ययगणे। शुदि-बदि-शब्दौ शब्दसंक्षेपविद्यानिदर्शनाविति कोऽपि वैयाकरणतल्लजो नाभिहितवान्। इह कारणद्वयमनुमीयते तदनभिहितौ—१. पाणिनेः काले तदिदं शब्दद्वयं रूढिं प्रपन्नं भवेदिति पाणिनिरदृष्ट्वा निर्विभक्तिकं विनिवेशितवान् अव्ययगणे। २. द्वितीयं कारणम् इदं कल्पयितुं शक्यते यत् पाणिनेरनन्तरं केचन वैयाकरणा उक्तं शब्दद्वयम् अव्ययगणे सन्निवेशितवन्तो भवेयुरिति।

यद्यपि शब्दसंक्षेपविद्याया व्यवस्थितं स्वरूपं पाणिनिना निर्धारितमिति कथने नास्ति कश्चन संशीतिलेशः, तथापि प्रत्याहारशब्दः पाणिनिना नैव प्रयुक्तः, न च तत्परवर्तिना वार्त्तिककारेण कात्यायनेनैव। पातञ्जलमहाभाष्ये संक्षेपाभिधायकः प्रत्याहारशब्दो दर्शितो योगरूढः। पातञ्जले योगसूत्रे प्रत्याहारशब्द इन्द्रियार्थेभ्य इन्द्रियाणां संहरणे प्रयुक्तः। विस्तारात् संक्षेपं प्रति गमनस्य यौगिकीयं प्रक्रियाऽभ्युपेतव्या।

शब्दसंक्षेपीकरणरूपमिदं विज्ञानं चतुष्षष्टिकलान्तर्गतमपि परिगण्यते स्म। भारतवर्षे ख्रीस्तात् पूर्वं तृतीयशताब्दं यावच्चतुःषष्टिकलाः पूर्णतो विकासमुपेता अभूवन्। तदानीं सामाजिकस्य जीवनस्यानिवार्ये शिक्षणक्रमे तासां शिक्षणमपरिहार्यं मतम्। तत्र समधिगते नैपुण्ये जीविकाप्रश्नः स्वत एव समाधीयते स्म। 'अक्षरमुष्टिका' इत्यभिधा सप्तचत्वारिंशा कला चतुःषष्टिकलास्वन्यतमा मता। प्राकृतभाषायाम् 'अक्खरमुट्ठिया' इत्युल्लिखितो लिपिविशेषस्तुलामर्हति। भारते वर्षे पदानां वाक्यानां श्लोकानां चाद्याक्षरैर्मुष्टिका-योजनं नाम कलाविशेषो मन्यते स्म। एतद्विषयकाः स्वतन्त्रा ग्रन्थाः साम्प्रतं नोपलभ्यन्ते। समधिगमिष्यति वाङ्मय इतोऽप्यधिकं विवरणोपस्थापनं सम्भाव्यते।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# ज्ञानस्य स्वयंप्रकाशत्वम्


डॉ० स्वामी आत्मानन्दपरमहंसः

अनुसन्धाता—काशीहिन्दूविश्वविद्यालये


यस्यापरोक्षतया व्यवहारार्थं तद्विषयकं ज्ञानं नापेक्ष्यते तत्स्वप्रकाशम् । अयमाशयः—यथा घटदर्शनार्थमालोकापेक्षा विद्यते, किन्त्वालोकदर्शनार्थं नालोकान्तरापेक्षा, तथैव घटाद्यस्वप्रकाशवस्तुविषयकव्यवहारार्थं घटादिज्ञानापेक्षा, किन्तु ज्ञानादिस्वप्रकाशवस्तुनो व्यवहारार्थं न पुनस्तज्ज्ञानस्यापेक्षा भवतीति । तथा चान्यप्रकाशाधीनप्रकाशत्वं स्वप्रकाशत्वमिति पर्यवस्यति ।

नैयायिकवैशेषिकौ विहाय प्रायशः सर्वेषामास्तिकानां मते ज्ञानस्य स्वयंप्रकाशत्वमभ्युपगम्यते । तत्स्वरूपं तु तत्तन्मतेषु भिन्नं भिन्नमित्यन्यदेतत् ।

अत्रौपनिषदानामयमाशयः—ज्ञानं नित्यम् । तच्च स्वस्य प्रकाशं प्रत्यपरं ज्ञानं नापेक्षत आत्मरूपत्वात्[1] । एवञ्च तत्र ज्ञानकर्म, स्ववेदकस्य ज्ञानान्तरस्य ज्ञानान्तरेण, तस्यापि च ज्ञानान्तरेण वेद्यत्वेऽनवस्थापातात् । प्रदीपः प्रकाशत इत्यत्रेव स्वयमेव स्वस्य प्रकाशं प्रति कर्तृता । अन्यकर्तृकत्वे तस्यापि प्रकाशार्थं कर्त्रन्तरापेक्षेत्यनवस्थापत्तेरिति कर्त्रन्तरज्ञानान्तरानपेक्षं स्वस्वरूपं प्रति स्वप्रकाशत्वमित्यात्मसंविद्रूपत्ववादिनां सिद्धान्तः ।

तदुक्तं ब्रह्मसिद्धौ[2]—'संविदोऽसंवेदने सत्त्वप्यसत्कल्प इति व्यर्थं सत्सङ्कीर्तनम् । पुरुषार्थत्वाय हि तत्सङ्कीर्तनम् । अवेद्यश्च कथं पुरुषार्थः ? उच्यते-फलवत् कर्तृवच्चेदं द्रष्टव्यम् । तथाहि—प्रमाणस्य फलमर्थान्तरमनर्थान्तरं वा सर्वपरीक्षकैः प्रतिज्ञायते प्रज्ञायते च । न च तदसंवेद्यम्, तदसंवेद्यत्वे सर्वाविद्यत्वप्रसङ्गात्, तत्कृतत्वात्संवेद्यभावस्य भावानाम् । न च संवेद्यं फलान्तरानुपलब्धेः, अनवस्थाप्रसङ्गाच्च । तस्मात् संवेद्यम् आत्मप्रकाशत्वाद्, असंवेद्यं च विषयवत्कर्मभावाभावात्' इति ।

इष्टसिद्धावपि—'अनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गात्'[3] इति ।

तत्त्वप्रदीपिकायामपि—'अनुभूतिः स्वयंप्रकाशा अनुभूतित्वाद् यन्नैवं तन्नैवम्, यथा घटः'[4] इति । लक्षणमपि तत्रोक्तम्—'अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वस्य तल्लक्षणत्वात्'[5] इत्यादिग्रन्थेन ।

विज्ञानमप्रतिभासमानमेवान्यत्रार्थे व्यवहारं जनयतीत्यभ्युपगमे घटोऽयं मया ज्ञातो न वेत्यनन्तरक्षणे सन्देहापत्तेः । न हि कश्चिद् अपश्यदमुं नो वा भवानिति पृष्टोऽनन्तरं सन्दिग्धे

---

१. द्र०—सारस्वत्याः सुषमायाः २६ व० २ अ० 'वैदिकदर्शनाभिमतपदार्थेषु ज्ञानस्यान्तर्भावविमर्शः' इति लेख औपनिषदमतम् ।

२. ब्रह्मसिद्धिः, पृ० ४ ।

३. इष्टसिद्धौ प्रथमे दृग्दृश्ययोर्भेदनिरासाख्ये परिच्छेदे ।

४. चित्सुखी, पृ० २१ । ५. चित्सुखी पृ० १६ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किमहमपश्यम्, नो वेति, किन्तु निश्चिनोत्येवाहमपश्यमिति। न च सुखादिवदन्याधीनप्रकाशत्वेऽपि संशयाद्यविषयत्वमुपपद्यतामिति वाच्यम्, तथा सति यदधीनप्रकाशत्वमभिप्रेतं तस्यापि वेद्यत्वेऽनवस्थाप्रसङ्गः पूर्ववदेव तदवस्थः स्यात्, स्वप्रकाशत्ववादिमते तत्साक्षिणः स्वप्रकाशत्वेनानवस्थानवतारात्। तस्मात् प्रयोगः—घटज्ञानं घटव्यवहारसमये व्यवह्रियमाणं ज्ञातो घट इति व्यवहारविषयत्वाद् घटवदिति। कथञ्चिदप्यनन्तरं सन्देहानवतारो विपक्षे बाधकस्तर्कः।

अथानुभूतिरनुभाव्यैवेति न नियमो येनानवस्थाऽऽपद्येत। अज्ञातं सदेव स्वरूपसत्तामात्रेण व्यवहारप्रयोजकत्वोपगमादिति चेत्, न, परप्रकाशत्ववादिमते तज्ज्ञानमन्तरेण तत्सत्ताया अप्यनिश्चयात् सत्ताविषयकप्रमाणाभावे दुखधारणसत्ताकत्वादन्यथा तुल्यतयाऽसत्त्वाध्यवसायापत्तेः। तस्मात् सत्त्वमपि तस्य प्रमाणादेवावगन्तव्यम्।

ननु सत्तायां प्रमाणमेव नास्तीति नोच्यते, किन्तु जिज्ञासोदये सत्येव तद्विषये प्रमाणोपन्यासः क्रियते, न पुनः स्वोदयसमकालमेव। अत एव नानवस्था न वा व्यवहारानुपपत्तिरिति चेत्, न-एतादृशवित्तिपरम्पराया अनुपलब्धिपराहतत्वात्।

तथाहि—न केनापि प्रेक्षावत्पुरुषेण व्यवसायानुव्यवसायातिरिक्ता तत्तद्वित्तिपरम्पराग्राहिका काचिदपि वित्तिरनुभूयते। तद्विषयकप्रमाणं विनैव तत्सत्ताभ्युपगमे प्रमेयसत्ताया अपि तथैव स्वीकारे प्रमाणान्तरगवेषणस्य वैयर्थ्यापत्तेः। अथ स्वज्ञापकप्रमाणमन्तरेणैव स्वरूपविशेषाद् द्वितीयज्ञानं स्वविषये व्यवहारं प्रवर्तयति, न ह्येकस्य यादृशः स्वभावस्तादृश एव सर्वस्येति वक्तुं युज्यत इति चेत्, न-अन्तिमज्ञाने प्रयुज्यमानस्य न्यायस्य प्रथमज्ञान एव प्रयोगे बाधकाभावात्।

किञ्च, ज्ञानग्राहकविज्ञानस्य सामग्र्यनिरूपणादपि ज्ञानस्य वेद्यत्वं न सम्भवति। तथाहि—विज्ञानविषयकं विज्ञानान्तरं परप्रकाशत्ववादिभिर्मानसमिष्यते। तत्र येन मनःसंयोगेन विषयविज्ञानमुत्पन्नम्, तेनैव विज्ञानविषयकमपि विज्ञानमुत संयोगान्तरेण? आद्येऽपि एकेन मनःसंयोगेनैकदैव ज्ञानद्वयं जन्यत उत वा क्रमेण? न तावत् प्रथमः, ज्ञानस्य यौगपद्यास्वीकारात्, जन्यजनकयोः समकालमेव जन्माभावाच्च। नापि प्रथमे द्वितीयः, असमवायिकारणभेदस्यैव ज्ञानभेदहेतुत्वात् प्रथमज्ञानजनकमनःसंयोगेन द्वितीयज्ञानजन्मासम्भवात्।

अन्यथा मनःसंयोगभेदस्यानङ्गीकारे विषयस्य चैकत्वादेव सम्पन्नत्वेन संस्कारत्वेन संस्कारस्येन्द्रियसंयोगस्य च विद्यमानत्वेनापेक्षणीयान्तरासम्भवेन च यत्र संस्कारसहितमिन्द्रियं प्रत्यभिज्ञां जनयति, तत्र घटविषयके अनुभवस्मरणे तद्घटविषयकानुभवान्तरञ्चेति ज्ञानत्रयस्य युगपदुत्पत्तिप्रसङ्गात्।

तथा च कार्यभेददर्शनात् तदुपपादकोऽसमवायिकारणभेदोऽवश्यमङ्गीकरणीयः। एवञ्चैकेनैव कारणेन कार्यद्वयमित्युक्तम्। तस्मात् क्रमवत्कारणमन्तरेण कार्यक्रमस्यानुपपद्यमानत्वादसमवायिकारणक्रमोऽवश्यं कल्पनीयः।

अथासमवायिकारणक्रमानभ्युपगमेऽपि विषयेन्द्रियसंयोगादिबाह्यसामग्रीभेदादेव कार्यक्रमोपपत्तिरिति चेत्तदप्ययुक्तम्, तथा सति यत्र युगपदेव विषयेन्द्रियसम्प्रयोगास्तत्र युगपदे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चानेकज्ञानोत्पत्तिप्रसङ्गस्यानिष्टस्यापत्तेः । तस्मात् तत्रापि कार्यक्रमप्रयोजको बाह्यसामग्र्यतिरिक्तस्य कारणस्य क्रमो वक्तव्यः, तत्र चात्ममनसोरेकत्वेन क्रमायोगात् परिशेषात् तयोः संयोगरूपासमवायिकारणक्रम एव प्रयोजकः । तथा च प्रथमज्ञानजनकसंयोगाद् द्वितीयज्ञानजन्मेति पक्षो न विचारसहः । नापि द्वितीयः, घटज्ञानोत्पत्तिसमकालं मनसि क्रिया, ततो विभागः, ततः पूर्वसंयोगविनाशः, तत उत्तरसंयोगोत्पत्तिः, ततो ज्ञानान्तरमिति बहुतरकालविलम्बितेन ज्ञानेन प्राचीनज्ञानस्य तावत्पर्यन्तमविद्यमानस्य विषयीकरणासम्भवात् ।

ननु स्वप्रकाशं ज्ञानमिति वदता एकस्यैव प्रकाश्यप्रकाशकभावोऽभ्युपगतः । स न सङ्गच्छते, स्वात्मनिवृत्तिविरोधात् । तथा च न स्वसंवेदनं ज्ञानमिति चेन्न, वृत्त्यनभ्युपगमादालोकवत् । तथाहि—यथाऽऽलोकस्तमःपटलनाशेन चक्षुराप्यायकत्वेन वा घटादिभिः स्वप्रकाशनायापेक्ष्यते । न चालोकेन स्वप्रकाशनायालोकान्तरम् । नैव चास्य वृत्तिविरोधः स्वात्मनि । न खल्वस्य स्वभावभेदादालोकान्तराधीनप्रकाशादन्या वृत्तिर्या स्वात्मनि विरुद्ध्येत, तथैव ज्ञानेऽपीति न दोषः ।

अथ घटज्ञानवाहनमस्मि, ज्ञातो घट इत्याद्यनुभवेन ज्ञानविषयकवेदनस्य सिद्धिरिति चेत्, न; ज्ञानस्य वेद्यत्वं विनैव स्वतःस्फुरणरूपत्वेन स्वरूपस्फुरणेन, घटस्य तु तेनैव ज्ञानेन स्फुरणेन तादृशव्यवहारोपपत्तिरिति स्वीकारे ज्ञानविषयकवेदनासिद्धेः ।

अपि च ज्ञानस्य विदितत्वं तदा सिद्ध्येद् यदि 'विदितः' इति पदं ज्ञानेन समन्वियात् । किन्त्वेतन्नास्त्येव घटेनैव तस्यान्वयदर्शनात् । किञ्चैतज्ज्ञाननिष्ठवेद्यत्वं किमनेनैव ज्ञानेन गृह्यतेऽन्येन वा ? न तावत् प्रथमः, अपसिद्धान्तापातात्, नापि द्वितीयः, तदानीं प्रथमस्यातीततया तन्निष्ठवेद्यताया अप्रत्यक्षत्वात् ।

ननु ज्ञानं वेद्यं वस्तुत्वादित्यनुमानबलेन ज्ञाने वेद्यत्वसिद्धिरिति चेन्न; व्याप्तिग्रहणासम्भवात् । तथाहि—यद्यद् वस्तु तत्तद्वेद्यमिति हि तत्र व्याप्तिस्वरूपं पर्यवस्यति । अस्या व्याप्तेर्ग्राहकं ज्ञानं व्याप्तिग्रहणसमये स्फुरति न वा ? आद्ये स्वेनैव स्वस्य ग्रहणे स्वस्यैव क्रियाकर्मभावस्वीकाररूपवौद्धाभिमतस्वप्रकाशताभ्युपगमे पर्यवसानं स्यात् । अन्येन ग्रहणे त्वनवस्थादोषग्रस्तता उक्तैव । तत्स्फुरणस्य स्वहेतुताया अप्यनङ्गीकारे तु वेदान्त्यभिप्रेतस्वयंप्रकाशताऽभ्युपगमे पर्यवसानं स्यात् । द्वितीये ज्ञानरूपवस्तुविशेषस्यास्फुरणादेव सर्वव्यक्तिनिष्ठा व्याप्तिर्नैव सिद्ध्येदिति नैवैतादृशानुमानस्य प्रसरः ।

नैयायिकास्तु स्वप्रकाशं न किञ्चिद् वस्त्वित्यभ्युपगच्छन्ति । अत एव सर्वं वस्तु वेद्यमेव तन्मते, किन्तु वेद्यत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगिधर्मत्वाद् नीलत्ववदित्याद्यनुमानेन वेद्यत्वस्याभावो यत्र कुत्रापि सेत्स्यत्येव । अतो वस्तुत्वहेतोः केवलान्वयित्वेन तादृशाभावाधिकरणेऽपि विद्यमानतया सम्भावितविपक्षता । तथा च बाधकतर्कमन्तरेणानुमानेऽप्रयोजकत्वदोषोऽपि विद्यते । अथ वेद्यत्वानुपगमे तु वस्तुसिद्धिरेव न स्यादित्येव बाधकस्तर्क इति चेत्, न, वस्त्वसिद्धेः सर्वतः स्फुरणाभाव एवापत्तेः । स्फुरणस्य तु स्वत एव सिद्धावपि तादृशापत्तेरभावात् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयमत्र निष्कर्षः—ज्ञानस्य स्वप्रकाशत्वं च ज्ञानविषयत्वं विनैव संशयादिविषयत्वायोग्यविद्यमानस्वरूपकत्वम्। स्वीकुर्वन्ति सर्वेऽपि प्रेक्षावन्तः **'न हि जानन्नेव जानामि न वेत्याद्यनुभवति'** इति। एतावांस्त्वत्र विशेषो यत् **तार्किकादिमते** ज्ञानस्य स्वाभाववत्त्वज्ञाने प्रतिबन्धकत्वात् संशयाद्यविषयत्वम्, **औपनिषन्मते** त्वनावृतत्वादिति। अत एव तन्मते तादृशप्रतिबन्धकत्वकल्पनागौरवम्।

न च संशयादिकं प्रति औपनिषन्मतेऽप्यावरणस्य हेतुत्वस्वीकारे गौरवमिति वाच्यम्, तार्किकमते विशेषादर्शनस्यापि हेतुतायाः स्वीकरणीयत्वेन तत्स्थान एवावरणहेतुतायाः स्वीकारे एतद्गौरवस्य तुल्यत्वेन पूर्वोक्तप्रतिबन्धकतागौरवस्य तन्मत एवाधिकत्वात्। किञ्च विशेषादर्शनं व्याप्यतया ज्ञातस्य निश्चयाभावः। तत्त्वं चाज्ञानत्वजातिरूपादावरणत्वाद् गुरुतरम्। गृहीताप्रामाण्यकस्याहार्यस्याव्याप्यवृत्तिविषयकत्वेन गृहीतस्य च निश्चयस्याप्रतिबन्धकत्वात् तदन्यत्वेन निश्चयस्य विशेषणीयत्वेन पुनर्गौरवान्तरग्रस्ततेति।

**प्राभाकरमतम्**

प्राभाकरास्तु यथा न्यायमते सत्तासम्बन्धात् सत्तातिरिक्तेषु सद्व्यवहारव्यवस्था। सत्ता तु स्वयमेव सद्रूपा, तस्यां सत्तान्तराभावेऽपि सद्व्यवहारस्याक्षतत्वात्। एवञ्च सद्व्यवहारविषयत्वेऽपि यथा न सत्ताश्रयता सत्तायास्तथैव ज्ञानविषयत्व एव घटादीनां सिद्धयभ्युपगमेऽपि ज्ञानस्य च ज्ञानान्तराविषयत्वेऽपि तस्य स्वत एव सिद्धस्वरूपत्वमित्यभ्युपगमे न किञ्चिद् बाधकम्।

ननु सत्ता न सद्व्यवहारहेतुः, किन्तु सत्तासमवाय एव तथा। स च यथा घटादौ तथा सत्तायामप्यस्त्येव सम्बन्धरूपत्वेन द्विष्ठत्वात् सामान्यविशेषेषु सत्तैकार्थसमवायस्य सत्त्वात्। न चैवमेकार्थसमवायस्य विशेषेषु सद्व्यवहारोपपादकत्वमन्यत्र द्रव्यगुणादौ शुद्धसमवायस्येत्यननुगतत्वमिति वाच्यम्, तदेकार्थसमवायस्यापि तत्समवायरूपत्वादिति चेत्, न; सत्तासमवाये सत्तासमवायान्तरानभ्युपगमेऽपि तस्य सद्व्यवहारविषयत्वाभ्युपगमात्।

तथा च यथा सत्तायां तत्समवाये वा सत्तान्तरस्य तत्समवायस्य वाऽनभ्युपगमेऽपि तस्य स्वरूपतः सद्रूपत्वमभ्युपगम्यते, तथैव घटादीनां सिद्धिर्ज्ञानाद् भवति, ज्ञानसिद्धिस्तु स्वत एव भवतीति स्वीकार्यमिति।

**विशिष्टाद्वैतिमतम्**

विशिष्टाद्वैतिनस्तु विषयसम्बन्धदशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वम्, स्वाश्रयं प्रति विषयप्रकाशत्वं वा, स्वसत्तायामनन्याधीनप्रकाशत्वं वा स्वप्रकाशत्वमिति स्वीकुर्वन्ति। आहुश्च—[1]**'सा च विषयप्रकाशवेलायां स्वाश्रयस्यैवात्मनः स्वयंप्रभा'** इति।

उपर्युक्तेषु मध्ये प्रथमद्वितीयस्वरूपे धर्मभूतज्ञानाभिप्राये, अन्तिमं तु धर्मिभूतज्ञानाभिप्रायम्। तत्र धर्मिज्ञानस्य बाह्यविषयप्रकाशार्थमेव धर्मभूतज्ञानापेक्षा, न तु स्वरूपा-

---

१. न्यायसिद्धाञ्जने बुद्धिपरिच्छेदे ४९५ पृष्ठे, वा० सं० वि० वि० वाराणसीतः १८८८तमे शकाब्दे प्रकाशिते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वगमार्थमपि । आश्रयभूतमात्मस्वरूपं नित्यं ज्ञानं स्वात्ममात्रावसितावभासम् । आश्रितञ्च नित्यं ज्ञानं न स्वरूपेण स्वस्मा अवभासते, फलवद् वा, विषयविकासपरिणामेन स्वस्वविषयप्रकाशत्वोपगमादिति स्वीकुर्वन्ति ।

तन्मते वेद्यत्वं स्वरूपज्ञानस्य स्वत एव नान्यतः । किन्तु विषयावगमार्थं धर्मज्ञानापेक्षा । एवञ्च धर्मभूतज्ञानवेद्यत्वं स्वरूपतो धर्मिज्ञानस्येत्यायातम् ।

स्वयंप्रकाशत्वमभ्युपगच्छन्तोऽप्येतेऽनुभूतावद्वैतिभिरभ्युपगतस्यावेद्यत्वस्य स्वीकारे खपुष्पादिवदसत्कल्पत्वमसंवित्त्वमस्वप्रकाशत्वमज्ञानाविरोधित्वं प्रश्नप्रतिवचनाद्यनुपपत्तिश्चेत्यादिदूषणान्युद्भावयन्ति[1] । स्वीकुर्वन्ति च धर्मभूतज्ञाने सङ्कोचविकासशालित्वम्[2] ।

अत्रेदं चिन्त्यते—धर्मिज्ञानस्य स्वप्रकाशमानत्वेनैव सत्त्वसिद्धेर्नासत्कल्पत्वशंकाऽवेद्यत्वेऽपि प्रसरति स्वयंप्रकाशस्याप्यवेद्यत्वमात्रेणासत्त्वापादने धर्मज्ञानस्यापि स्वयंप्रकाशस्यासत्त्वापत्तिः स्यात् । पूर्वोक्तोपनिषन्मते 'आत्मा संविद्रूपः संवित्कर्मतामन्तरेणापरोक्षत्वात् संवेदनवत्'[3] इत्यनेनात्मनः संविद्रूपत्वं लभ्यते । तथा च संवेदनवदिति दृष्टान्तेन विषयधर्मिज्ञानोभयोपरागार्थमपेक्षितं धर्मभूतज्ञानमेव मतद्वयेऽपि विवक्षितम् । एकत्र नित्यं धर्मभूतज्ञानमपरत्र वृत्तिरूपज्ञानं तदिति विशेषः ।

एवञ्च ज्ञानान्तरावेद्यत्वेऽपि नासत्त्वम्, न वाऽसंवित्त्वम्, नाप्यस्वप्रकाशत्वं स्वयंसिद्धसत्ताकस्य ज्ञानस्य स्वप्रकाशस्य समापतति स्ववेद्यत्वेनैवासत्कल्पत्वशंकायाः, स्वप्रकाशत्वेनासत्त्वास्वयंप्रकाशत्वयोश्च ब्रह्मसिद्ध्युक्तरीत्या सुतरां निरासात् । अज्ञानाविरोधित्वं तु धर्मिरूपज्ञानस्येष्टमेवेतीष्टसिद्धावुक्तम् ।

इदमत्रावधेयम्—स्ववेद्यमनुभवान्तरवेद्यं च किमपि न प्रसिद्धम् । धर्मभूतज्ञानं स्ववेद्यं नानुभवान्तरवेद्यम्, घटादिकमनुभवान्तरवेद्यम्, न स्ववेद्यम् । अतो धर्मिज्ञाने तयोरेकस्वभावत्वमेव स्वीकर्त्तव्यम् । तत्र यदि स्ववेद्यत्वं स्वीक्रियते, तर्हि ज्ञानान्तरवेद्यत्वं हातव्यमेव । यदि संविदन्तरवेद्यत्वमङ्गीक्रियते धर्मिज्ञाने, तर्हि स्ववेद्यत्वं त्यक्तव्यम् । तथा च यदि स्ववेद्यत्वं विहाय धर्मिभूतज्ञानस्य संविदन्तरमात्रवेद्यत्वं स्वीक्रियते, तर्हि दुरपह्नवमेव घटादिवदननुभूतित्वम् । गगनकुसुमादिकं तु न स्ववेद्यम्, न वा पर-(अनुभवान्तर)वेद्यम् । ज्ञानमात्रं तु स्ववेद्यम्, अनुभवान्तरावेद्यं च गगनकुसुमादिविलक्षणम् । अनुभूतित्वप्रयुक्तं ह्यनुभवान्तरावेद्यत्वं धर्मभूतज्ञाने दृष्टम् । तत्तु धर्मिभूतज्ञानेऽपि स्वीकर्त्तुमुचितम् ।

इदं पुनरिहावधेयम्—संवेद्यत्वं पञ्चविधम्—

१. स्ववेद्यत्वम् ।
२. स्वाकारवृत्तिप्रतिफलितचैतन्यवेद्यत्वम् ।
३. साक्षिवेद्यत्वम् ।

---

१. तत्त्वमुक्ताकलापे बुद्धिसरे द्वितीयकारिकाया व्याख्यानावसरे ।
२. न्यायसिद्धाञ्जने बुद्धिपरिच्छेदे, पृ० ५१३, वा० सं० वि० प्रकाशनम् । १९६६ खि० ।
३. प्रत्यक्तत्त्वप्रदीपिकायाम्, पृ० ३९, षड्दर्शनप्रकाशनप्रतिष्ठानतः १९७४ खि० प्रकाशिता ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

४. प्रमाणजनितवृत्तिविषयत्वम् ।

५. विकल्पाख्यवृत्तिविषयत्वञ्चेति[1] ।

तत्र प्रथमं संविन्मात्रस्य, द्वितीयं घटादेः, तृतीयमज्ञानप्रातिभासिकादीनां सुखादेश्च, चतुर्थं संविन्मात्रस्य तत्त्वम्, पदशोधकवाक्यजन्यज्ञानविषयस्य तत्त्वमस्यादिमहावाक्यजन्यज्ञान-विषयस्य च । पञ्चमं शशविषाणादेरसतः ।

औपनिषदसिद्धान्ते संविदः स्वप्रकाशत्वं स्वत एव प्रत्यक्षत्वेन स्वीक्रियत इति न तत्र घटादिस्थल इव स्वव्यतिरिक्तस्वाकारवृत्तिप्रतिफलितस्वावच्छिन्नचैतन्यविषयत्वं प्रमातृचैतन्या-ध्यस्तत्वपर्यवसितम्, प्रमातृचैतन्याभिन्नस्वावच्छिन्नचैतन्यविषयत्वं वा स्वीक्रियते, येन घटादे-रिवाननुभूतित्वस्य, असंवित्त्वस्य वा प्रसङ्गः स्यात् ।

विशिष्टाद्वैतिनः पुनरनुभवान्तरानुभाव्येऽपि परानुभवादौ स्वसत्तयैव स्वविषयभासकत्व-रूपस्य, स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वरूपस्य वाऽनुभूतिलक्षणस्य स्वभावसिद्धस्य नानुपपत्तिः, तथा च स्वयंप्रकाशत्वरक्षणार्थमवेद्यत्वाभ्युपगमोऽसंगत इत्यादिनाप्यौपनिषदमतं प्रतिक्षिपन्ति ।

उक्तञ्च[2] श्रीवेंकटनाथेन—'अत्र स्वप्रकाशेति सम्मतांशानुवादो वेद्यत्वविरोधाभावज्ञाप-नार्थः' इति । 'न तावच्छिष्याचार्यौ परस्परबुद्ध्यनभिज्ञौ, प्रश्नप्रतिवचनाद्यसम्भवात् । एवं वादिप्रतिवादिप्रभृतयोऽपि मिथो बुद्धिमबुद्ध्यमाना न विवादादिकं कुर्युः । तथा पामराणामपि संलापो न स्यादिति भावः' इति च ।

तत्रेदं विचार्यते—ज्ञानान्तरवेद्यं स्वप्रकाशं चेति व्याहतमेव । अननुभूतित्वप्रयोजक-मनुभाव्यत्वं हि प्रत्यक्षविषयत्वम्, प्रमातृचैतन्याभिन्नस्वावच्छिन्नचैतन्याध्यस्तत्वमेव, न तु ज्ञानविषयत्वमात्रम् । परानुभवानां परेण ज्ञानं तु परोक्षानुभव एव । अतः परदृष्ट्या परानुभवस्य स्वप्रकाशत्वेऽपि, स्वदृष्ट्या तस्या स्वप्रकाशत्वात् परानुभवस्य स्वप्रकाशत्वं स्वदृष्ट्याऽ-वेद्यत्वेनेति स्वीकर्त्तव्यम् । एवञ्च स्वप्रकाशत्वं प्रत्यक्षज्ञानान्तरविषयत्वं च परानुभवस्थलेऽपि व्याहतमेव । तथा चानुभूतेर्धर्मिसंविद्रूपाया धर्मभूताया वा ज्ञानान्तरावेद्यत्वेन स्ववेद्यत्वमात्रेण च स्वप्रकाशत्वं व्यवस्थापनीयम् ।

एवञ्च ज्ञानान्तरसंवेद्यत्वे घटादिवदननुभूतित्वापत्तिर्दुष्परिहरा । तस्मात् परानुभववद् अनुभाव्यत्वेऽपि स्वप्रकाशत्वमविरुद्धमित्युपर्युक्तोपन्यासो विषमः । अनुभूतिर्यदि अननुभाव्या स्यात् तर्ह्यसती स्यादित्याकारकस्तु तर्को विशिष्टाद्वैत्यभिमतो विवेचितप्रायः । तथाहि—अत्र अनुभूतिरसती, अननुभाव्यत्वाद्, गगनकुसुमवदित्यनुमाने तात्पर्यं पर्यवस्यति । एवञ्च विशिष्टा-द्वैत्यभिमतधर्मभूतज्ञाने भवत्यनैकान्तिकता, तस्य संविदन्तराननुभाव्यत्वोपगमादसत्त्वेना-स्वीकाराच्च ।

---

१. 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' ॥ इति योगसूत्रे ॥ १ । प्रोक्ता विकल्पाख्या वृत्तिस्तद्विषयत्वमिति यावत् ।

२. तत्त्वमुक्ताकलापस्थबुद्धिसरे २कारिकायां सर्वार्थसिद्धिः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथैवमपि यथौपनिषदमते अनुभूतिः स्वयंप्रकाशा अनुभूतित्वादित्यादावनुभूतित्वमनुभूतिस्वप्रकाशत्वस्य प्रयोजकम्, तथैव घटत्वादिकमपि घटादेः स्वप्रकाशत्वप्रयोजकं स्यादिति चेत्, न; एतद्दूषणस्य यत्रानुभाव्यस्यापि स्वप्रकाशत्वमभ्युपेयते तादृशे विशिष्टाद्वैतमत एव प्रसरात्। तथा च प्रयोगः—घटः स्वप्रकाशः अनुभाव्यत्वात् स्वरूपज्ञानवदिति। पूर्वोक्तौपनिषदमते तु नेदृगापादनं प्रसज्यते, प्रमातृचैतन्याभिन्नविषयत्वस्य तदध्यस्तत्वपर्यवसितस्य प्रमातृसत्ताधीनसत्ताकस्य प्रमातृचैतन्याभेदाभावेऽप्रकाशमानस्य स्वप्रकाशत्वाप्रसरात्।

अत्रेदमवधेयम्—औपनिषदसिद्धान्ते ह्यनुभूतिस्वप्रकाशत्वमन्यानधीनापरोक्षस्वभावरूपम्—'यत्साक्षादपरोक्षाद् ब्रह्म'[1] इत्यादिवचनसिद्धमज्ञानाश्रयत्वविषयत्वाविरोधीति। तत्र प्रमाणजन्यमपरोक्षसाक्षात्कारं विना नाज्ञाननिवृत्तिरित्यभ्युपगम्यते। प्रमाणजन्यापरोक्षसाक्षात्कारपर्यन्तं तु ज्ञानं न शब्देन, अनुमानादिना प्रमाणान्तरेण वा, किन्तु तेभ्योऽसत्त्वापादकाज्ञानमात्रनिवृत्तिप्रयोजकं वृत्तिज्ञानमेवोदेति। ब्रह्मणो वृत्तिविषयत्वमात्रं न घटादिवदनुभाव्यत्वरूपम्। ज्ञानान्तरविषयत्वं ब्रह्मणो नास्तीत्यौपनिषदानां वचनं घटादिवत्प्रमाणजन्यवृत्तिप्रतिफलितचैतन्यभास्यत्वं तस्य नास्तीत्यभिप्रायेणैव, न तु वृत्तिव्याप्यत्वमपि तस्य नास्तीत्यभिप्रायेण[2]।

अनुभूतिपदेन, स्वप्रकाशपदेन, अनुमानादिनाऽन्यैः प्रकारैश्च स्वयंप्रकाशायाः संविदः परोक्षवृत्तिविषयत्वं प्रत्यक्षवृत्तिविषयत्वं वा भवतु नाम, किन्तु न नित्यसंविदन्तरविषयत्वम्। तावन्मात्राङ्गीकारेऽपि फलव्याप्यत्वाभावाद् घटादेरिव नाननुभूतित्वापत्तिरनुभूतेः। संवित् स्ववेद्या स्वाश्रितावरणनिवृत्त्यर्थं प्रमाणजन्यवृत्तिमात्रवेद्या च, साक्षिचैतन्यं तत्तदाकारवृत्तिमात्रविषयः, घटादिकं तु तत्तदाकारवृत्तिप्रतिफलिततदवच्छिन्नानुभूतिवेद्यम्, असत्तु विकल्पाख्यवृत्तिविषय इति व्यवस्थामादायैवानुभूतिस्वप्रकाशवाद औपनिषदानामनुमतः। अतो न ज्ञानतः, स्वरूपतः, विषयतो वा संवित् साक्षिघटादिजडविषयशशविषाणादितुच्छानां परस्परं साङ्कर्यम्, न वाऽन्यस्यान्यभावापत्तिरिति।

ये तु—'अनुभूतिपदार्थावगमो वर्तते न वा' इत्यादिना बहुविकल्पनिरासाडम्बरा तत्त्व[3]मुक्ताकलापादौ वेदान्तदेशिकेन प्रदर्शितास्ते सर्वेऽपि वृत्तिव्याप्यत्वफलव्याप्यत्वकृतविषयविवेकमसिद्धवत्कृत्यैवेत्युक्तविवेकेनौपनिषदास्तान् सर्वान् सुष्ठु प्रतिक्षिपन्तीति।

इदं पुनरिहावधेयम्—औपनिषदमते स्वप्रकाशस्याप्यज्ञानेनावरणादन्तःकरणधर्मभूतवृत्तिज्ञानस्य तदावरणनिवृत्त्यर्थमस्त्युपयोगः। विशिष्टाद्वैतमते तु स्वयमनावृतस्य स्वप्रकाशस्य च धर्मिज्ञानस्य परमात्मरूपस्य स्वप्रकाशार्थम् इतरप्रकाशार्थं वा न कोऽप्युपकारो धर्मभूतज्ञानेन। जीवस्य त्वणुपरिमाणस्य विषयप्रकाशार्थमस्तु नाम धर्मभूतज्ञानापेक्षा। परमात्मस्वरूपावगमार्थं तु न धर्मभूतज्ञानापेक्षा। स्वगतकर्मादिरूपाविद्यानिवृत्तिस्तु ईश्वरसङ्कल्पविशेषेणैव भविष्यति।

अत्र कर्मादिरूपाविद्यानिवृत्तेस्त्वीश्वरसङ्कल्पाविशेषेण स्वीकारेऽप्येतन्मतेऽनुपपत्तिरेव, तादृशसङ्कल्पस्य नित्यत्वे बन्धानुपपत्तेः, जन्यत्वपक्षे तस्य परमात्मनि जन्मलाभाद् मुमोचयिषित-

---

१. बृहदारण्यकोपनिषद्—३।४।१। २. पञ्चदशी—७।९०,९२।

३. तत्त्वमुक्ताकलापस्थबुद्धिसरे द्वितीयकारिकाव्याख्याने।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पर्यन्तं गमनानुपपत्तिप्रसङ्गात्, व्यापकरूपेण विकसनशीलत्वस्वीकारे पुरुषान्तरेऽपि तत्प्रसक्तेः, पुरुषविशेषमेव गच्छतीति स्वीकार ईश्वरस्य सर्वभूतहितेरतत्वव्याघातात् ।

किञ्च, स्वाश्रयतया प्रकाशमानत्वं स्वप्रकाशत्वमिति धर्मभूतज्ञानस्वप्रकाशवादो य उपर्युक्तस्तदनुसारेणाद्वैतमते साक्ष्याश्रिततया प्रकाशमानशुक्तिरूप्यसुखान्तःकरणज्ञानादेरिव धर्मभूतज्ञानस्य जडत्वापत्तिः । धर्मभूतज्ञाननित्यत्वमपि पराहतं स्यात् । सङ्कोचविकासशालित्व आर्हतमत आत्मन इवानित्यत्वापत्तेः समानन्यायात् ( सांशत्वस्यानित्यत्वनियतत्वमिति न्यायात् ) । सङ्कोचविकासशालित्वानुपपत्तेरन्यत्र व्यवस्थापितत्वाच्च[1] ।

अथ प्रदीपप्रभायाः सङ्कोचविकासशालिन्याऽपि यावत्प्रदीपमवस्थानाद् यावदात्मभाविनो धर्मभूतज्ञानस्यापि नित्यत्वं निष्प्रत्यूहमिति चेत्, तदप्ययुक्तम् । तथा हि—प्रदीपप्रभायाः सङ्कोचविकाशयोर्निमित्तं किं प्रदीपसङ्कोचविकासौ, उत वाऽन्यत् किञ्चित् ? आद्य आत्मनोऽपि सङ्कोचविकासशालित्वापत्त्या धर्मभूतज्ञानवैयर्थ्यापत्तिः । द्वितीये तु धर्मभूतज्ञानसङ्कोचविकासयोरन्यत्कर्मैव निमित्तं नात्मसङ्कोचविकासाविति वक्तव्यं स्यात् । तथा च सर्वलोकानुभवविरोधः, प्रदीपसङ्कोचविकासौ विना प्रभासङ्कोचविकासयोरदर्शनात् ।

प्रदीपसामर्थ्यावगमार्थं प्रभाप्रकृष्टत्वगणनस्य भौतिकविज्ञाने दर्शनात् प्रदीपसङ्कोचविकासयोः प्रभासङ्कोचविकासकारणत्वावगतेः । अन्यथा तत्सम्बन्धसम्पादकानां बहूनां नियमानां सूत्राणाञ्च वैयर्थ्यप्रसङ्गात् ( यथा द्वयोर्दीपयोः सामर्थ्यंतुलनायां प्रयुज्यमानस्य प्रकाशसघनतासूत्रस्य[2]—

$$‘\frac{P_1}{d_1^2}=\frac{P_2}{d_2^2}’ \text{ इत्यस्य } )$$

अर्थात् — $\frac{\text{प्रथमस्य प्रकाशनसामर्थ्यम्}}{(\text{उदासीनपटतः दूरत्वम्})^2}=\frac{\text{द्वितीयस्य प्रकाशनसामर्थ्यम्}}{(\text{उदासीनपटतः दूरत्वम्})^2}$

इत्येवमादिसूत्राणां वैयर्थ्यापत्तिः स्यात् ।

एवञ्च धर्मभूतज्ञानसङ्कोचविकासवाद आत्मसङ्कोचविकासौ विनाऽनुपपन्न एवेत्यार्हतमतप्रवेशो वज्रलेपायते ।

इत्थञ्चौपनिषदराद्धान्तो विचारकाणां बुद्ध्यारूढो भवितुमर्हति । प्राभाकरमतस्यापि यथाकथञ्चिद्विचारसहत्वम् । विशिष्टाद्वैतिमतं तु वेदान्तदेशिकपरिष्कृतमपि न प्रेक्षावतां विचारपदवीमारोहतीति केवलं श्रद्दधानानेव प्रत्याययितुमलमिति विद्वांसो विभावयन्तु ।

---

१. द्र० सारस्वत्याः सुषमायाः २६ व० २ अ०, पृ० १७० ‘तन्मतपर्यालोचनम्’ इत्यत उपरिष्टाद् ।

२. ‘माध्यमिकभौतिकी’ग्रन्थस्य प्रथमभागे पृ० ५७१ । राजहंसप्रकाशनमन्दिरमेरठतः १९७० तमे खिस्ताब्दे प्रकाशिते सप्तमसंस्करणे ।

●●●

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# आर्याणामादिनिवाससमीक्षा

डॉ० श्रीकृष्णमणित्रिपाठी
पुराणेतिहासविभागाध्यक्षचरः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

पृथिव्यामादिजातिनिवासजिज्ञासासमाधानाय मानवानां मूलनिवासस्य निश्चयात्मकं ज्ञानमस्ति नितान्तमावश्यकम् । आर्याणामादिनिवासस्थानसम्बन्धे पौरस्त्यानां पाश्चात्यानाञ्च विचारकाणां महानस्ति मतभेदः । विभिन्नैर्विद्वद्भिर्विभिन्नान्यनुमानानि कृतानि । इतिहासकाराणाम्, पुरातत्त्वज्ञानाम्, भाषावैज्ञानिकानाम्, जनविज्ञानविदाम्, प्रागैतिहासिकानां च विपश्चितां स्वस्वदृष्टिभिर्भिन्ना भिन्ना मान्यताः सन्ति । तदनुसारं तैः योरोप–मध्येशिया–उत्तरीध्रुव–काश्मीर–भारत–सप्तसिन्धुप्रदेशार्यावर्तादिभूभागा मानवानामादिनिवासस्थानानि स्वीकृतानि सन्ति ।

एकः सम्प्रदाय आदिमं मानवं लोमरहितं साधयितुं प्रयतते, द्वितीयो विकासवादसिद्धान्तमाश्रित्य लोमलाङ्गूलयुक्तं वानरं मनुष्यजातेराविर्भावकं मनुते । तृतीयस्तदर्थमस्थिपञ्जरमाधारीकरोति । चतुर्थश्च कृषिसभ्यतादीनां विकासस्याधारं मत्वा मानवानां मूलस्थानं गवेषयितुं प्रयतते । एवं विश्वस्येतिहासकाराणां धारणा नैकरूपा दृश्यते, यदार्यशब्देन व्यवह्रियमाणस्य मानवसमाजस्य मूलनिवासः पृथिव्याः कतमो भाग आसीदिति । अत्र विषये नाद्यावधि किमप्येकं मतं सर्वमान्यं सर्वग्राह्यं च जातम् । सर्वे स्वस्मै स्वस्मै देशाय गौरवं प्रदातुं प्रयतन्ते ।

**मध्येशियावादः**

पाश्चात्या भाषावैज्ञानिका विद्वांसस्तदनुयायिनः कियन्तः पौरस्त्या वापि मध्येशियामेवार्याणामादिदेशं मन्यन्ते । एतन्मते तदेव स्थलं सभ्यजीवनस्य प्राचीनतमं केन्द्रमासीत् । इत एवार्याणां शाखाद्वयं प्रचलितम् । तत्रैका शाखा पश्चिमे गता, द्वितीया च पूर्वस्यामुपगता, यत्राग्रे ईरानीशाखा, भारतीयशाखारूपेण द्वे उपशाखे अभूताम् । मतस्यास्य प्रतिपादनं सर्वप्रथमम् १८२० ईशवीये वर्षे जे० जी० रहोडमहोदयेन कृतम् । मतमेतद् ईरानस्य प्राचीनजनश्रुतावेवाधारितमासीत् । तदनु पाटश्लीगांटद्वाराऽप्यस्य मतस्य समर्थनं प्राप्तम् । अनन्तरं भाषाविज्ञानस्याधारेण वेदस्य, आवेस्तायाश्च भाषां प्राचीनतमामार्यभाषां मत्वा मैक्समूलरमहोदयेन १८५९ वर्षे मतायास्मै अधिकं बलं प्रदत्तं तथा महताऽऽटोपेन मान्यता प्रदत्ता । भाषाविज्ञानस्यान्यैरपि तदनुयायिभिर्विद्वद्भिरस्यानुमोदनं विहितम् ।

मध्येशियावादस्य मतस्य परिपुष्ट्य एभिः ऋग्वेदस्यान्वेषणं कृत्वा कियतां मन्त्राणामाधारेण निश्चितं यद् आर्या गाः पालयन्ति स्म, पशून् चारयन्ति स्म, कृषिञ्च कुर्वन्ति स्म । अत एषामादिस्थानं कश्चन लम्बायमानो विस्तृतो भूभागो भवितुमर्हति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऋग्वेदस्य 'यस्य तरेम तरसा शतं हिमाः'[१] इति मन्त्रे हिमशब्दस्य प्रयोगतः प्रतीयते यत् तत्राधिकः शीतपातो भवति स्म। अनेकेषु मन्त्रेषु नौकायाश्चर्चा विद्यते। अतस्तत्र जलाधिक्यमप्यनुमीयते, येन नौकासञ्चालनस्य सौविध्यं स्यात्। बहुषु स्थलेषु अश्वानां भूयो भूयो नाम विद्यते। अत आर्या अश्वारोहिण आसन्। घोटकैस्ते रथमपि चालयन्ति स्म। वृक्षेषु भूर्जपत्रस्य देवदारोः पिप्पलस्य चाधिकं नामायाति, न तु वटस्य आम्रस्य वा। ओषधिषु केवलं यवस्य चर्चा विद्यते। सोमलताप्रशस्तिषु चानेके मन्त्राः सन्ति। एतानि वस्तूनि मध्येशियायामेवोपलभ्यन्ते।

अत एतद्वर्णनस्याधारेण योरोपनिवासिनो विपश्चितो नूनं न्यश्चिन्वन् यदेवंभूतः प्रदेशो हिन्दूकुशपर्वतस्यापरभागे कस्पियनसमुद्रस्याधस्तात् पामीरपर्वतस्यापत्यकैवास्ते, यत्र शैत्यमपि पतति, पशवोऽप्युपलभ्यन्ते, पाल्यन्ते च। प्रागैतिहासकाले इत एव निर्गत्य शकादिभिरन्यदेशेष्वाक्रमणं कृतम्। अस्मात् प्रदेशात् भारते, ईराने योरोपे च गन्तुं सौविध्यमपि वर्तते। अतोऽयमेव प्रदेश आर्याणामादिनिवासो भवितुमर्हतीति मध्येशियावादसमर्थकानां योरोपनिवासिनां विदुषामस्ति सिद्धान्तः।

अपि च भारतस्य विपक्षे आपत्तिमुपस्थापयद्भिर्विदेशीयैरिदमप्युक्तं यद् ऋग्वेदे सिंहस्योल्लेखोऽस्ति, न तु व्याघ्रस्य। एवं तत्र मृगहस्तिनो वर्णनं विद्यते, न हस्तिनः। व्याघ्रहस्तिनौ च भारतस्य विशिष्टौ जन्तू स्तः, यौ मध्येशियायां न भवतः। अतो निश्चितरूपेणार्याणां मूलभूमिर्भारतं नास्ति, किंतु ते सन्त्यागन्तुकाः।

किञ्च, ते कल्पयन्ति यदार्याणां कर्मकाण्डे सोमस्य महद् महत्त्वं दत्तमस्ति। सोमस्योत्पत्तिस्थानमस्ति मुञ्जवान् पर्वतः। अत आर्याणां निवासोऽस्यैव पर्वतस्य समीप एव सम्भवति। तेषां जीवने सोमस्यैतावद् महत्त्वमासीत्। मुञ्जवान् पर्वतो हि अफगानिस्तानस्य हिन्दूकुशपर्वत एव विद्यते। अतः सम्भवति यदार्या आरम्भे हिन्दूकुशपर्वतस्य दक्षिणभागे नदीमध्यवर्तिनि प्रदेशे निवसन्ति स्म। केनचित् कारणेन ततः प्रचल्य सिन्धुपूर्वप्रदेशे न्यवसन्।

**मध्येशियासमर्थकमतम्**

डब्ल्यूब्रान्देस्ताइनमहोदयेनापि स्वकीये गवेषणापूर्णे लेखे स्पष्टीकृतं यद् भारतीयानामार्याणां मूलनिवासो मध्येशियैवासीत्। तन्मतानुसारं यूरालपर्वतमालाया दक्षिणभागो भारतीयानामार्याणां मातृभूमिरासीत्[२]। कियतां मतेन सर्वमान्यो निश्चयः सर्वथासम्भवः, किन्तु तद्दृष्टौ सम्भावितरूपेणार्या मूलतो मध्येशियाया एवाभुन्[३]। मैक्समूलरेण 'साइन्स आफ लैंग्वेज' समयपर्यन्तं तु मध्येशियामार्याणामादिभूमिं मन्यते स्म, किन्त्वकस्मादेव तेन संशोधनेन सह स्वमन्तव्यं प्रस्तुतं यद् यथा मया चत्वारिंशद्वर्षपूर्वं प्रोक्तमासीत्, तथैवाद्यापि ब्रवीमि यदार्याणां जन्मभूमिः क्वचनैशियायामासीत्[४]।

---

१. ऋ० सं० ५।५५।१५।
२. इन्डियन हिस्टोरिकल क्वार्टर्ली, कलकत्ता, मार्च १९३७।
३. आई० बी० आई० डी०, पृ० ३२१।
४. गुड्वड्‌स, अगस्त—१८८७।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वी० के० घोषेण तर्कः प्रस्तुतोऽस्ति यद् यदि भारतमार्याणामादिदेशः स्यात्, तर्हि तैरन्यदेशगमनात् पूर्वं समस्तस्य भारतस्यार्यीकरणं कृतं भवेत्[1]।

वैण्डेस्टीनमतेन मूलार्यभाषायामेकस्याप्येवंविधस्य वृक्षस्य नाम नोपलभ्यते, यो योरोपीयः कथयितुं शक्येत, अपि चारण्यसूकर-ऋक्षादीनां जन्तूनां नामाप्यार्यभाषायां विद्यते, न योरोपीयभाषायाम्। एवमार्यभाषाशब्दैर्जन्तूनां नाम्ना च सूच्यते यदार्याः कस्याश्चित् पर्वतश्रेण्या अधस्ताद् वनरहितायां समतलभूमौ निवसन्ति स्म। तदनुसारं यूरालपर्वतस्य दक्षिणादिग्भागे किर्गिजाविस्तृतभूमिरेवंविधं स्थानं विद्यते, यतः सर्वप्रथमं भारते ईरानीशाखापूर्वस्यां गता, पश्चाच्चान्या द्वितीया पश्चिमस्यां प्रस्थिता[2]। एवमत्यधिकवादविवादानन्तरं यूरोपीयानामितिहासकाराणामियमेव धारणा जाता यदार्याणां मूलनिवासस्थलं मध्येशियैवासीत्, ततश्चतुर्दिक्षु ते प्रस्थिताः। तेष्वेकं दलं भारताभिमुखं प्रासरत्, तथा तस्यैव दलस्य जना वर्तमानाया आर्यजातेर्मूलपुरुषा अभूवन्।

**समीक्षा**

अधिकतरं सम्भवति, यत् शतपथब्राह्मण आर्याणां प्रथमस्य राज्ञो मनोर्जलप्लावनेन पीडनात् स्वकं मूलं निवासस्थानं परित्यज्यान्यत्र गमनस्य यत्कथानकमुपलभ्यते, तदार्याणां स्वमूलस्थानं विहाय भारतस्य सप्तसिन्धुप्रदेशे प्रवेशस्य संस्मरणे समाश्रितं स्यात्, किन्तु भाषाविज्ञानस्यानुमानं कल्पनायामवलम्बितमास्ते। तस्यानेके निष्कर्षा विवादग्रस्ता वर्तन्ते। अतः स्पष्टतया निश्चितानुश्रुतिपरम्पराविरोधे भाषाविज्ञानस्यानुमानं मान्यं भवितुं नार्हति। भाषासमता हि जातेरैक्यं साधयितुं न क्षमा। योरोपीयगौराङ्गैः साकं भारतीयानामार्याणां सम्बन्धोऽनावश्यकः। शब्दानामादानप्रदाने सम्पर्कादेव सम्भवतः। अपि च भारतीयानुश्रुत्यनुसारेणार्याणां कियत्यः शाखा मध्यपश्चिमेशियायां गताः, याः संस्कृतभाषां सहैव नीतवत्यः। यस्यास्तरङ्गास्तत्रत्यभाषासु मिलिताः। अतो भारतमेवार्याणामादिभूमिरस्ति। विधातुः सृष्टेः श्रीगणेशो भारतवर्ष एव जातः, तथा सभ्यतायाश्चरमोत्कर्षमुपगता आर्यजातिः इत एव समस्तसंसारस्य अन्येषु भागेषु प्रसृता।

**योरोपवादः**

प्रथमं योरोपीयानां विदुषां मध्यैशियैवार्याणाम् आदिदेशोऽभिमत आसीत्, परन्तु १८८० ईशवीयवर्षानन्तरं शनैः शनैः पक्षमिममुपेक्ष्य यूरोप एवार्याणामादिनिवास इति मतस्य प्राबल्यमजायत। एतस्मै मताय समर्थनमनेकैर्भाषाविद्भिर्विद्वद्भिरपि प्राप्तम्[3]। यूरोपसमर्थकानां सामान्यस्तर्कोऽस्ति यत् प्रायः समस्ते यूरोपे भारोपीया भाषा व्यवह्रियन्ते। तेषां कथनानुसारं योरोपवर्तिनो यूरालपर्वतादारभ्यातलान्तिकमहासागरपर्यन्तं महति विस्तृते विशाले भूभाग आर्यजातेः तद्भाषायाश्च विकासो जातः। तत्र नाधिकमौष्ण्यम् न वा शैत्यं वर्तते, न चोच्चावचाः पर्वता विद्यन्ते, नापि तत्र मरुस्थलमस्ति, न वा घोरं जङ्गलं वर्तते।

---

१. वैदिक एज्—१०।१७। २. आई० वी० आई० डी०, पृ० ७९।
३. जी० चाइल्ड—दि आर्यन्स, पृ० २३१, पी० गाइल्स-कैम्ब्रिज हिस्ट्री आफ इण्डिया।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सैव मानवानां निवासयोग्या समतलभूमिरासीत् । तत्रैव निवसतामार्याणां दलानि निर्गत्य चतुर्षु दिक्षु व्याप्तानि ।

मतस्यास्य समर्थका आसन् भाषाविदो योरोपीया लायमबिफी–उलम्बुक–गाइगर–क्यूनोजेन–स्मिथ–प्रभृतयो विद्वांसः । यद्यपि योरोपे आर्याणाम् आदिस्थानं योरोपीयानां कृते गौरवस्य विषय आसीत्, तथापि मतमिदमधिककालं न प्रचलितम् । यतो ह्येते आर्याणामादिनिवासभूमिनिर्धारणे भिन्नमतयो अभूवन्[1] ।

**योरोपवादस्य विभिन्ना विचाराः**

( क ) पेंकामहोदयस्तथा तत्समर्थका जर्मनदेशं विशेषतः स्कैण्डिनेवियामेवार्याणामादिदेशं मन्तुं तर्कं प्रस्तुतवन्तः । तदनुसारं तस्मिन् भूभागे आर्यभाषाभाषिभ्योऽन्या कापि जातिः कदापि न न्यवसत् ।

( ख ) गाइगरस्य कथनमस्ति यद् मध्यपश्चिमजर्मनीत आर्याः समस्ते भूभागे प्रसृताः ।

( ग ) वेन्फेमहोदयस्य धारणाऽस्ति यदार्याः कृष्णसागरस्योत्तरीयविस्तृतभूमितो विभिन्नेषु समूहेषु विभक्ताः पृथिव्यां प्रसृताः ।

( घ ) हेलरिंगमहोदयो हि ई० पू० तृतीयसहस्रेभ्यः पूर्वं त्रिपोल्जेनिर्मितानां मृत्पात्राणामाधारेण त्रिपोल्जेसभ्यतामेवार्यसभ्यतां गत्वा दक्षिणरूसप्रदेशमार्याणामादिदेशमुद्घोषितवान्।

( ङ ) गाइल्समहोदयो हि स्वपूर्वतनानि मतानि आलोचयन् प्रोक्तवान् अस्ति यद् उत्तरयोरोपः पूर्वमरण्यैराच्छन्न आसीत् । पामीरपठार एको रुक्षप्रदेशोऽस्ति । मध्येशियायां जलस्याभावो विद्यते । अतस्तस्य कियन्तो भागा उषराः सन्ति । रूसस्य दक्षिणो भाग उर्वरः सन्नपि ताभिर्विशेषताभी रहितोऽस्ति, या विभिन्नानामार्याणां शब्दावल्यः सूचयन्ति । अत आर्याणां देश एभ्यः सर्वेभ्यो भिन्नो वर्तते । भारोपीयभाषासु प्राप्तसामग्रीणामाधारेण तस्य देशस्य अनुमानं कर्तुं शक्यम् ।

मूल आर्यनिवास एवंविधो भवितुमर्हति यत्र अधस्तात् कृषियोग्या समतला भूमिः स्यात् । उपरि च गोचरभूमिर्भवेत्, यत्र च पूर्वाङ्किताः पशुपक्षिपादपाः प्राप्येरन् । तदनुसारं योरोपस्य आष्ट्रिया-हङ्गरी-बोहेमियाभूभाग एवंविधं स्थानमस्ति, यत्र सर्वा विशेषताः प्राप्यन्ते । एतन्मतेनार्याणामयमेव भाग आदिनिवासो विद्यते[2] ।

**समीक्षा**

एतन्मतविपरीतं कियद्भिर्विद्वद्भिः सहानुभूतिपूर्वकमौदार्यं प्रदर्शयद्भिः प्रोक्तं यद् यदा भारतीयानामार्याणां कस्मिन्नपि संस्कृतग्रन्थे, प्राचीनलेखे, प्रामाणिक निबन्धे, इतिवृत्ते च कुत्राप्येवंविधा चर्चा नास्ति, यत् कस्माद् भूभागाद् आर्या भारते समागताः, तर्हि तत्सम्बन्धे निश्चिता काचिद् धारणा युक्तिसङ्गता न प्रतीयते । एवं संस्कृतसाहित्ये एकोऽप्येवंविधः शब्दो

---

१. राजबली पाण्डेय—प्राचीनभारत, पृ० ४६ ।

२. कैम्ब्रिज हिस्ट्री आफ इण्डिया, पृ० २२५–२२७ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नोपलभ्यते य आर्यान् वैदेशिकान् प्रमाणयितुं समर्थः स्यात् । अत एव लार्डएलफिन्स्टनेन लिखितमस्ति यद् मध्येशियासिद्धान्तस्य समर्थको क्यूरमहोदयोऽपि स्पष्टं स्वीकृतवान्–यावदहं जानामि, भारतीयानां वैदेशिकोत्पत्तिसम्बन्धे कस्मिन्नपि संस्कृतपुस्तके उल्लेखः सङ्केतो वा न विद्यते ।

एतद्विपरीतमन्यदेशानामितिहासस्यावलोकनेन तथा भूगर्भसम्बन्धिभिरन्वेषणैः प्रतीयते यत् सुदूरे प्राचीनकाल आर्या भारतवर्षतः तेषु देशेषु गताः, तथा स्वकीयां सभ्यतां संस्कृतिं कलाकौशलं पौराणिकीं गाथां च सहैव नीतवन्तः ।

टाडसाहबकृते राजस्थानस्येतिहासेऽप्येकत्र लिखितमस्ति यद् आर्यावर्तातिरिक्ते कस्मिन्नन्यदेशे सृष्टेरारम्भस्य विवरणं नोपलभ्यते ।

**उत्तरीध्रुववादः**

भारतीयानां विदुषामभिमतमस्ति यदार्यजातेर्मूलभूमिर्भारतमेवासीत् तथा तत एव तेषां विश्वस्मिन् विस्तारो जातः । मतस्यास्य प्रथमः प्रतिष्ठापकः स्व०बालगङ्गाधरतिलक आसीत् । तदनुसारमार्यजातेर्मूलनिवास उत्तरीध्रुवमासीत् । वेदवाङ्मये एवंविधं कियत् प्रामाणिकं तथ्यं विद्यते, येन प्रतीयते यदारम्भे आर्यजातिः विभिन्नसम्प्रदायेषु विभक्ता सती भारताद् बहिः प्रसृता ।

तिलकमहोदयेन स्वकीये 'ओरायन' नामके ग्रन्थ आर्यजातेरभ्युदयार्थं वैदिकसाहित्यस्य च निर्माणार्थं येषां गवेषणापूर्णानां तथ्यानां दिग्दर्शनं कृतमस्ति, तदधिकश्रमसाध्यं विचारपूर्णं तर्कसङ्गतमनुशीलनीयमवलोकनीयञ्चास्ति ।

लोकमान्यबालगंगाधरतिलकेनार्याणां प्राचीनतमे ग्रन्थ ऋग्वेदे वर्णितस्य प्राकृतिकदृश्यस्य दीर्घकालीनाया उषायाः, षाण्मासिकदिवारात्रेश्च समर्थकान् कांश्चन वेदमन्त्रान् सङ्गृह्य साधयितुं प्रयासः कृतोऽस्ति, यदार्याणां मूलनिवासस्थानमादौ उत्तरीध्रुवस्य कटिबन्धप्रदेश एवासीद्, यत्र रमणीयको विशालो भूपरिसरः चिरवसन्तश्चासीत् । बहुवर्षानन्तरमधिकेन हिमेनाच्छन्नत्वादयं प्रदेशः स्थातुमयोग्यो जातः । अतस्तं प्रदेशं परित्यज्य आर्या इतस्ततो भ्रमन्तो भारते समागताः ।

एवमार्यजातेरभ्युदयार्थं वैदिकसाहित्यस्य च निर्माणार्थं गवेषणापूर्णानां तथ्यानां दिग्दर्शनं कुर्वता तेन ज्योतिषशास्त्रगणनाधारेण आर्यजातेरुत्कर्षस्य त्रिषु युगेषु विभागः कृतः ।

( १ ) आदियुगः ६०००–४००० ई० पू० ।

( २ ) मृगशीर्षयुगः ४०००–२५०० ई० पू० ।

( ३ ) वसन्तसम्पातयुगः—युगेऽस्मिन् तैत्तिरीयसंहिताया ब्राह्मणग्रन्थानां च निर्माणमजायत[1] ।

आर्यजातेरभ्युदयसम्बन्धे तिलकस्योक्तसिद्धान्तः कियत्कालं निष्कर्षरूपेण मान्यताप्राप्त आसीत्, परन्तु अविनाशचन्द्रदास-रघुनन्दनशर्मप्रभृतीनां विदुषामभिनवेनानुसन्धानेन स प्रभावहीनो जातः । तत्प्रामाणिकतायां तैर्विभिन्ना आपत्तय उपस्थापिताः[2] ।

---

१. दि ओरायन, पृ० २०६–२०७ ।

२. ऋग्वैदिक इण्डिया, पृ० ७; वैदिक सम्पत्ति, पृ० ९१–१११ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यद्यपि लोकमान्यतिलकस्योत्तरीध्रुवसिद्धान्ते तैः आपत्तय उपस्थापिताः, तथापि तस्य समर्थनमपि न्यूनं नहि जातम्। उत्तरीध्रुवस्य मनुष्यजातेर्जन्मभूमिं साधयितुं प्रवृत्तेषु तिलकमतसमर्थकेषु प्रमुख आसीत्—एम्० डी० सपोर्टमहोदयः। एतस्य मतं खण्डयितुं रेमहोदयेन[1] महान् प्रयासः कृतः। तथापि सुप्रसिद्धैर्भूगर्भविद्याविद्भिर्मेडलीकट-ब्लेनफर्ड-डा० डान–डा० इसाकलेटरप्रभृतिभिस्तिलकमतं समर्थयद्भिरुत्तरीध्रुवः सप्तसिन्धुर्वाऽऽर्याणामादिदेशः स्वीकृतः[2]।

**भारतसमर्थकमतविमर्शनम्**

प्राचीनभारतमतावलम्बिनो विचारका विपश्चितस्त्वनादिकालादेव मन्यन्ते यद् आर्याणामादिनिवासस्थानं भारतवर्षस्यैव विन्ध्यहिमालययोः पूर्वपश्चिमसमुद्रयोश्च मध्यवर्ति-सप्तसिन्धोः पवित्रतमो भूभागोऽस्ति, यत्रार्यावर्त्त-ब्रह्मावर्तप्रदेशौ समाविष्टौ स्तः। अनादिवेद-वाङ्मयस्मृतिपुराणेतिहासादिपरवर्तिषु संस्कृतसाहित्येषु सुरक्षितपरम्परानुसारमार्या भारतस्यैव मूलनिवासिन आसन्। समस्ते भारतीयसाहित्ये नैकोऽपि कोऽपि सङ्केत उपलभ्यते, येनार्याणां कुतश्चिद् बहिःप्रदेशादागत्यात्र स्थितिं साधयितुं शक्येत। भारतीयानुश्रुतौ जनश्रुतौ च कुत्रापि नास्य ईषदपि गन्धलेशोऽत्राप्यते यद् भारतीयानामार्याणां पितृभूमिर्धर्मभूमिर्वा भारताद् बहिः कुत्राप्यासीत्।

(अ) वेदो हि भारतीयसंस्कृतेः दिव्यो ज्ञानग्रन्थोऽस्ति। तत्र विश्वसभ्यताया आदिसूत्रं निहितं विद्यते। तत्र मानवजातेरतिप्राचीना समन्वयवादिनी विचारधारा समाविष्टाऽऽसीत्। तथा समस्तस्य विश्वस्य जनजीवनमेकस्मादेव परिवारात् प्रसृतं प्रसरितं च प्रतीयते। ऋग्वेदो हि न केवलं भारतीये वाङ्मये, अपि तु विश्वसाहित्येऽपि प्राचीनतमोऽस्ति। भारतस्य सभ्यतासंस्कृत्योः आरम्भो वेदवाङ्मयादेव उद्भवति।

ऋग्वेदस्यानुशीलनेन स्पष्टं प्रतीयते यदार्याः प्राक् पञ्चनदप्रदेशे सिन्धुतट एव निवसन्ति स्म। अनन्तरं गङ्गा-यमुनापर्यन्तं ते न्यवसन्। ऋग्वेदे किलास्यैव प्रदेशस्य नदीनां पर्वतानाञ्च उल्लेखोऽस्ति। प्रदेशस्यास्य प्रमुखा नदी सिन्धुरेवास्ति। यस्या उल्लेखस्तत्र भूयो भूयो दरीदृश्यते। एवं ऋग्वेदे सिन्धुसरस्वत्योः मध्यवर्तिनं देशं प्रति महती निष्ठा वर्तते। यदि आर्याः कुतश्चिद् बहिःप्रदेशादागत्य भारतस्य सप्तसिन्धुप्रदेशे न्यवसन्, तर्हि तत्प्राचीनसाहित्ये तस्य देशस्याप्युल्लेखोऽवश्यं स्यात्। अपि च यदार्या योरोपमध्यएशिया-ध्रुवप्रदेशादिनिवासिनः स्युः, तर्हि किमस्ति कारणं यदेतस्य गौरवान्वितस्य देशस्य ऋग्वेदे किमपि स्मारकं न स्यात्?

आधुनिका इतिहासलेखका वेदेषु विरलमानुषङ्गिकं च विषयमाधारीकृत्य आर्याणामितिहासस्य लेखने निर्माणे च प्रयतन्ते, परन्तु केवलमानुषङ्गिकवंशानुक्रमस्य प्रादेशिकस्थितेश्च ज्ञानं सम्यग् न सम्भवति। अतस्तदाधारेणोल्लेखनं नूनं सन्दिग्धं भवितुमर्हति।

---

१. ह्विटर्न लिट्रेचर, पृ० ६३१–६३३।
२. मैनुऊल आफ जियोलाजी आफ इण्डिया पृ० २२, मेनुऊल आफ जियोलाजी पृ० ३८५, दि ओरिजन आफ दि आर्यन्स् पृ० २०१।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुराणानां वंशावल्यां पूर्वतनः प्रामाणिक इतिहासः सुरक्षितो वर्तते। सावधानतया तस्योपकरेऽसन्दिग्धं साफल्यं भवितुमर्हतीति पार्जीटरमहोदयः[1]।

वस्तुतो वेदो भारतीयसंस्कृतेर्दिव्यो ज्ञानग्रन्थोऽस्ति। अद्यत्वे विश्वस्य विद्वांसो निःसङ्कोचं मन्यन्ते यदेतेषु प्राचीनग्रन्थेषु विश्वसभ्यताया आदिसूत्रं निहितमस्ति। भारतस्य सर्वकल्याणकारिण्या विश्वजनीनायाः संस्कृतेर्विषये विचारायास्माकं दृष्टिः सहसा वेदेष्वेवाग्रसरति, यतो हि तत्र मानवजातेः समन्वयवादिनी विचारधारा समाविष्टाऽस्ति। यतः प्रतीयते यद् वसुधायाः समग्रं जनजीवनमेकस्मादेव परिवारात् प्रसूतं सत् प्रसृतं विद्यते।

(आ) क्रूजरसाह्वस्य मतेन यदि पृथिव्यामेवंविधो देशो विद्यते, यो मानवजातेर्मूलस्थानं स्यात् सभ्यतायाश्च लीलाक्षेत्रं सम्भवेत्, तदा तद् भारतवर्षमेवास्ति। यस्योल्लेखो नारायणभवनरायपावगीमहोदयेन स्वकीये ग्रन्थे कृतोऽस्ति[2]।

(इ) डा० कीथेनानेकैः प्रामाणिकैराधारैः साधितं यद् मानवजातेर्जन्मभूमिरुत्तरपश्चिमसीमाप्रान्त आसीत्[3]।

(ई) चिन्तामणिविनायकवैद्य-विधानचन्द्रराय-मैकडानल-सरविलियमजोन्सप्रभृतिभिर्विद्वद्भिरप्यार्यावर्त्तमेवार्याणामादिदेशोऽमन्यत[4]।

(उ) एवमेव जे० बी० हालडेनमहोदयेनापि मानवजातेरुत्पत्तये पृथिव्याश्चत्वारि केन्द्रस्थलानि प्रोक्तानि। यत्र पञ्चनदमध्ये अफगानिस्तानमपि तेन मानवजातेरुत्पत्तिकेन्द्रं स्वीकृतम्। तन्मतानुसारं तेषु विभिन्नेषु केन्द्रेषु मनुष्यजातेर्विभिन्नाः प्रकाराः पृथक्-पृथग् रूपेण विकसिताः[5]।

(ऊ) अल्बेरुनिमतानुसारं प्राचीनकाले आर्याणां निवासो हिमालये आसीत्। तत्रत्यविपरीतजलवायुपरवशास्ते पश्चाद् आर्यावर्ते आगत्य न्यवसन्, यतोऽनेकजातिसम्प्रदायेषु च विभक्ता विभिन्नेषु भूभागेषु प्रसरणमकार्षुः[6]।

(ए) कन्हैयालालमाणिकलालमुन्शीमहोदयेन भारतीपत्रिकायाम् 'भगवान् परशुरामः' इति लेखे सप्तसिन्धवम् आर्यावर्तस्यैव नामान्तरमिति मन्वानेन तदेवार्याणां निवासभूमिरिति स्वीकृतम्।[7]

(ऐ) भारतीयानां जनजीवनस्य प्राचीनतां पर्यालोचयता मेगस्थनीजेनोल्लिखितमस्ति यद् भारतेऽगणिता जातयो निवसन्ति। एते मूलरूपेण न विदेशीयाः, अपि तु भारतीया एव आसन्। भारतस्य बहिःप्रदेशादागत्य न कापि जातिरत्रावसत्। यद्यपि मेगस्थनीजेन लिखितो ग्रन्थः साम्प्रतं नोपलभ्यते, किन्तु तस्यावतरणानि विभिन्नेषु ग्रन्थेषूपलभ्यन्ते, तान्येकत्रीकृत्य

---

१. एन्सिएन्ट इण्डियन हिस्टोरिकल ट्रैडिशन १९२२।
२. दि आर्यावर्त्तक होम एण्ड दि आर्यन् क्रेडल इन दि सप्तसिन्धुज् पृ० ७३।
३. ऋग्वेदिक कल्चर पृ० ११६।
४. प्राचीन भारत का इतिहास पृ० ४४।
५. दि स्टेट्समैन कलकत्ता २२-३-३१।
६. अल्बेरुनी का भारत अ० ७३।
७. भारती पत्रिका, बम्बई, सितम्बर ९, १९५६।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रागुजर्मनभाषायां प्रकाशितानि, अनन्तरम् आङ्ग्लभाषायामपि तदनुवादो जातः। तत्र तस्याभिमतमस्ति यदार्यजातेर्मूलभूमिर्भारतमेवासीत्। इत एव तस्या आर्यजातेर्विस्तारोऽन्यत्र जातः[1]।

(ओ) भारतस्य प्राचीनतमजनजीवनतदावासविकासादानां सम्बन्धे पुरातत्त्ववेत्तृभिः भूगर्भविद्याविशारदैः पौराणिकमाधारमन्वेषयद्भिरुपलब्धानामस्थिपञ्जराणामाधारेण संसाधितं यद् अतिप्राचीनकालतो भारते शवदाहस्य प्रथा प्रचलिताऽऽसीत्। अतो मोहनजोदडोस्थानात् प्राप्तान्यस्थिपञ्जराणि प्रायः पञ्चसहस्रवर्षपूर्वतनानि सन्ति[2]। सहैव प्रमाणितं यद् वयानातः स्यालकोटतश्च यानि अस्थिपञ्जराणि प्राप्तानि तानि आर्याणामेव सन्ति। अतस्तत्प्राचीनता असन्दिग्धाऽस्ति[3]।

(औ) अपि च मध्यएशियावादसमर्थकेन मैक्समूलरेणापि पश्चात् स्वीकृतं यद् भारतवर्षमेवैको महान् देशोऽस्ति यस्य संस्काराणां दायमादाय मानवजात्या स्वसभ्यता-संस्कृति-साहित्यानां निर्माणं कृतम्। अस्माभिः प्राचीनदेशसम्बन्धे यद् जगत उत्पत्तेर्मूलं विद्यते तत एव तस्यान्वेषणं कर्तुमारब्धम्। वस्तुतो भारतवसुन्धरा मानवजातेर्जननी, अस्माकं समस्तायाः परम्परायाश्चोद्गमभूमिरस्ति।[4]

(अं) एतदेव समर्थयता जौकीलियटमहोदयेन व्याख्यानात्मकसरण्या कथितं यद् भारतं विश्वस्य मूलस्थानमस्ति। अनया सार्वजनिकया जनन्या स्वसन्ततिं नितान्ते पश्चिमे सम्प्रेष्यास्माकमुत्पत्तिसम्बन्धिनी जिज्ञासा स्वयमेव प्रमाणिता। तथैव चास्मभ्यं स्वकीया भाषा, समाजव्यवस्थाविधिः, उज्वलं चरित्रम्, समृद्धं साहित्यम्, सार्वजनीनो धर्मश्च प्रदत्तः[5]। प्राचीनकाले प्राच्यदेशत एव सर्वं ज्ञानं जातम्।

(अः) प्रसिद्धो भूगर्भवेत्ता विद्वान् डानमहोदयः प्राच्यमुन्नतेर्महादेशं स्वीकरोति। तदनुसारमिदं भूतकालिकैः प्रमाणैः सिध्यति, सम्भवति च यद् मनुष्यः सर्वप्रथमं विशालस्य प्राच्यस्य कस्मिंश्चिद् भाग उत्पन्नोऽभवत्। तथा तस्य स्वत इतस्ततः प्रसरणाय आत्मोन्नतये च दक्षिणपश्चिमेशियापेक्षया किञ्चिदन्यदुपयुक्तं द्वितीयं स्थानं न स्यात्। यतो हि भौगोलिकदृष्ट्या तदेवैकं केन्द्रं वर्तते यतो योरोप–एशिया–अफ्रीकाणां त्रयो विशाला भुवो विभागा निश्चीयन्ते[6]।

**मध्य-एशियावादमान्यतापरिणामः**

सत्स्वपि एतेषु विभिन्नेषु मतेषु मध्येशियावादस्यैव पाश्चात्त्यजगति मान्यता जाता। भारतेऽपि तात्कालिकेन शासनेन एतदेव मतं स्वीकृतम्। परिणामतो लघुविद्यालयादारभ्य विश्वविद्यालयपर्यन्तमेवंविधा शिक्षा समारब्धा यद् आर्या भारतस्यादिनिवासिनो न सन्ति।

---

१. ऐन्सिन्ट इण्डिया मेगस्तनीज ऐण्ड आर्यन्स, पृ० ५४।
२. मोहनजोदरो ऐण्ड दि इण्डस् सिविलाइजेशन, पृ० ७९–८७।
३. हिस्टारिकल इण्डिया, पृ० ३७८–३८२।
४. ह्वाट कैन इट टीच अस इण्डिया, पृ० १७८, १७,
५. दि जर्नल आफ दि रायल एशियाटिक सोसाइटी, वा० १६, पृ० ७।
६. आई० वी० आई० डी०—पृ० ५८५–५८६।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एते मध्येशियात एवागत्य भारतमाक्रम्य शनैः शनैः अत्रत्यान् द्रविडान् स्वाधीनीकृत्य तेषां धनं स्थानं च स्वायत्तीकृतवन्तः। अतो भारतस्यादिनिवासिनो द्रविडा दक्षिणे पलायिताः। तस्मादार्या हिन्दवः सन्ति, दस्यव आगन्तुकाश्च। सर्वथापसिद्धान्तस्य दूषितस्यास्य मतस्य कुपरिणामो जातो यत् शिक्षिता भारतीया अपीदमेव ज्ञातवन्तो यद् हिन्दूनां पूर्वजा अपि बाह्यतोऽत्रागताः। अतो हिन्दूजातिरपि तथैव विदेशीयाऽस्ति, यथा यवना आँग्लाश्च सन्ति।

अपसिद्धान्तममुमाकर्ण्य भारतीयविचारकाणां मनसि महानुद्वेगोऽजायत। अतस्तत्र वास्तविकतां ज्ञातुं प्रवृत्तास्ते। न कश्चन स्वयं स्वकीयं कथनमसङ्गतं कथयति, किन्तु तथ्यातथ्यपरीक्षा तदैव जायते, यदाऽन्येऽपि तत् स्वीकुर्युः। अनेके विवादास्पदाः प्रश्ना एवंविधा विदुषां समक्षं समुपतिष्ठन्ते, येषां विषये सर्वसम्मतं समाधानं सर्वथा न सम्भवति। मानवानां मूलनिवाससमस्यायाः प्रश्नोऽपि ईदृश एवातिजटिलो वर्तते। प्रश्नेऽमुस्मिन् विचारं कुर्वन्तो बहवो विद्वांसस्तु स्वार्थवशेन स्वकीये आग्रह एव दृढा अतिष्ठन्, केचन च वास्तविकतायां प्रकटितायां स्वीयं दुराग्रहं विहाय वास्तविकं तथ्यं स्वीकर्तुमुद्यता अभूवन्।

वस्तुतो भारतीयसाहित्यवद् भारतीयानामितिवृत्तस्यापि वैज्ञानिकमध्ययनं पूर्वं विदेशीयैरेव विद्वद्भिः समारब्धम्, अनन्तरं भारतीयानां ध्यानं तत्राकृष्टम्। तत्राकृष्टेषु भारतीयेषु विचारकेषु प्राग्भारतस्य सम्बन्धे तन्निवासिनां च विषये वा यत् किमपि तथ्यातथ्यं विदेशीयैरन्विष्टमासीत्, तत्र भारतीयैर्विपश्चिद्भिः स्वदेशस्य स्वसाहित्यस्य च सम्बन्धे प्रारम्भतो विचारं कुर्वद्भिर्यो निष्कर्षः प्रस्तुतस्तेन न केवलं भारतस्य, अपि तु समस्तस्य विश्वस्येतिहासेऽभिनव आलोको विजृम्भितः।

**भारतीयगभीरविवेचकाः**

भारतीयानामादिनिवासविषये गम्भीरतापूर्वकं विचारकर्तृषु भारतीयेषु विद्वत्सु चतुर्णां विचारकाणां नामान्युल्लेख्यानि सन्ति, तद्यथा—

१. नारायणभवनरावपावगी,
२. डॉ० अविनाशचन्द्रदासः,
३. पं० रघुनन्दनशर्मा,
४. डॉ० सम्पूर्णानन्दमहोदयश्च।

एभिश्चतुर्भिर्भारतीयसाहित्य-परिस्थिति-प्राकृतिकदृश्यादीन्याधारीकृत्य मौलिकतया वास्तविको विचारः प्रकटितः, येन विदेशीयैरुद्भाविता दोषपूर्णा असङ्गतयो निराकृताः।

(१) आर्याणां मूलनिवासस्थानसम्बन्धे व्यापकं मौलिकं महत्त्वपूर्णं गवेषणं प्रस्तोतृषु तेषु श्रीनारायणभवनरावपावगीमहोदयस्य नाम प्रथममुपतिष्ठते। प्रसङ्गेऽस्मिन् तेन किञ्चित् तिलकमतम्, विशेषतो योरोपीयानां विदुषां मतं खण्डितम्।

पावगीमहोदयस्य कथनमस्ति यद् महाहिमयुगसमये यदा जलप्लावनेन उत्तरीयध्रुवप्रदेशा आप्लाविताः, तदा तत्रत्या भूमिः हिमतुषारपातेन समाच्छन्ना। ततः तात्कालिकाः कियन्तोऽस्माकं पूर्वजा हिमालयमार्गेण आर्यावर्ते परावर्तितुं विवशीभूताः। तदनु ते स्वमूलस्थाने सप्तसिन्धौ परावर्तिताः, यतस्ते तत्र गता आसन्। इदमेवास्ति कारणं यद् विलक्षणाया

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हिमालयपर्वतमालाया महता जलप्लावनेन साकं सप्तसिन्धवप्रदेशस्य उत्तरसीमारूपेण वैदिकवाङ्मये बाहुल्येनोल्लेखः प्राप्यते[1]।

(२) डॉ० अविनाशचन्द्रदासेन आर्यभूमेर्भौगोलिकस्थितेर्विश्लेषणं कुर्वता स्पष्टीकृतमस्ति यद् ऋग्वेदसंहितानिर्माणकाल आर्याः पञ्चनद-काश्मीर-बाह्लीक-गान्धार-पश्चिमहिमालय-प्रभृतिषु प्रदेशेषु पूर्णतया न्यवसन्, तथाऽयमेव प्रदेश आर्याणामादिनिवास आसीत्। इत एषामेवार्याणां एका शाखा धार्मिकमतभेदकारणाद् ईराने गत्वा न्यवसत्। तन्मते सप्तसिन्धुः स एव भाग आसीत् य आवेस्तायां सप्तहिन्द इत्युक्तोऽस्ति। तदानीमार्यभूमेश्चतुर्दिक्षु चत्वारः समुद्रा आसन् ये साम्प्रतं प्राकृतिकैः कैश्चित् कारणैर्विलुप्ता जाताः। एवमार्याणामुत्पत्तिसम्बन्धे तेन प्रोक्तं यद् मम विचारे पञ्चनदगान्धारयोर्मध्ये आर्याणामुत्पत्तिरभूत्, तथा एष एव प्रदेश आर्याणामादिनिवासस्थलमस्ति। सृष्टिकाल आर्याजातिरत्रैव निवसन्ती पश्चाद् विभिन्नेषु प्रदेशेषु प्रसृता[2]।

एवं चिन्तामणिविनायकवैद्य-मैकडानल-सरविलियमजोन्सप्रभृतिभिर्विद्वद्भिरपि आर्यावर्तमेवार्याणामादिदेशो मन्यते।

(३) पं० रघुनन्दनशर्मणा हि वैदिकानामार्याणां मूलनिवासभूमिविषये वैदिकैः प्रमाणैः संसाधितं यदार्याणां हिन्दूनां मूलनिवासस्थानं परमपवित्रनदनदीवनपर्वतसरोवरादिसम्पन्नं सर्वोपकारकमृषिमहर्षिराजर्षिगणसनाथमेवास्ति, नान्यत् किमपि इतः परं स्थानमार्याणां मूलभूमिगौरवमधिगन्तुमर्हतीति वेदस्यास्ति डिण्डिमो घोषः[3]।

(४) डॉ० सम्पूर्णानन्दमहोदयेन 'आर्यों का आदिदेश' इति नामके स्वकीये पुस्तके वैदिकप्रमाणैः[4] तर्कपूर्णयुक्तिभिश्च सिद्धान्तितं यदार्या न कुतोऽपि बाह्यतो भारते समागताः, किन्तु भारतवर्षमेवैषामादिस्थानमस्ति। अत्रैवार्यसंस्कृतेर्विकासो जातस्तथा सर्वप्रथममार्यजातेरुदयोऽभ्युदयश्चात्रैवाभवत्। ऋग्वेदे सप्तसिन्धूनां नाम्नां महिम्नां च विशेषरूपेण उल्लेखो विद्यते। अतः सप्तसिन्धवप्रदेश एव आर्याणां प्रियतमः पूततमश्च प्रदेशोऽस्ति। सप्तसिन्धुतटेष्वेवार्याणां नगरग्रामादि, पूतात्मनाम् ऋषीणां महर्षिणाञ्च पावनानि तपोवनानि आसन्। इत एवाध्यात्म-दर्शन-ज्ञानविज्ञानादीनां सूर्यस्योदयो भूत्वा समस्ते भूमण्डले प्रकाशो जातः। ऋग्वेदानुसारम् आर्या आदिकालत एवात्रैव निवसन्ति स्म। अत्रैव मानवजन्मनः परमलक्ष्यस्य नैःश्रेयसस्य शिक्षा-दीक्षा चाभवत्।

वेदवाङ्मये नास्य कुत्रापि कश्चन सङ्केतगन्धो मिलति, यदत्र निवासिनामार्याणां हिन्दूनां पूर्वजाः पूर्वं कुत्राप्यन्यत्र निवसन्ति स्म, यस्मात् स्थानाद् यवनाङ्गलवदत्र समागताः। यद्यस्मिन् विषये किमपि तथ्यं स्यात्, तर्हि तस्य सङ्केतः क्वचनावश्यं स्यात्। एतादृशे वेदब्राह्मणारण्यकोपनिषत्स्मृतिपुराणोपपुराणमहाभारतगद्यपद्यकाव्यनाटकचम्पूप्रभृतिसाहित्यसमृद्धे

---

१. दि वैदिक फादर्स आफ जियोलाजी, पृ० ७२; एवं दि आर्यावर्तिक होम एण्ड दि आर्यन क्रेडल इन दि सप्तसिन्धुज़्, पृ० २४-२५।
२. ऋग्वेदोक्त आर्यनिवास का भौगोलिक विवरण, गङ्गापुरातत्त्वाङ्क, जनवरी १९३३।
३. वैदिक सम्पत्ति -- पृ० ७५।
४. आर्यों का आदिदेश, पृ० ४७-५३।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वतो विशाले संस्कृतवाङ्मय एवमत्यावश्यकविषयस्योपेक्षा न कदापि सम्भवति । अत आर्या हिन्दवोऽनादिकालपरम्परया अद्यत्वेऽपि स्वकीयमादिनिवासस्थानमत्रैव मन्यन्ते समाद्रियन्ते च ।

डॉ० सम्पूर्णानन्देन तत्रेदमपि संसाधितं यद्धर्याणाम् आदिदेशः सप्तसिन्धवप्रदेश एवं आसीत् । रङ्ग-रूप-वाणी-विद्या-विचार-आकारप्रकारैर्भिन्नाः सन्तोऽपि आर्याः प्रकृत्या अभिन्ना एव सन्ति, यतो हि तेषां स्थायिनी वंशपरम्परा समानप्रकृतिका प्रचलिता । आर्याणामितस्ततः प्रसरणे बहुतिथः कालो व्यतीतः । भूमण्डले बहुवारं भौगोलिका उपद्रवा अभूवन् । ऋतुविपर्ययाद् यत्र अद्यत्वे औष्णं वर्तते, तत्र तदानीं हिमानी आसीत्, यत्र चाद्य समुद्रो वर्तते, तत्र तदानीं स्थलभाग एवासीत् । अनया दृष्ट्या विभिन्नेषु भूभागेषु मनुष्यजातेरिदं विकेन्द्रीकरणं बहुपूर्वं जातम् ।

आदावार्याणामेक एव समूह आसीत् । यदा मूलजातेः केचन मानवा विभिन्नेषु भूभागेषु प्रसृताः, तदा तेऽनेकासूपजातिषु विभक्ताः । तत्रापि जातिः सैवास्ति, या वेदकालीनाऽऽसीत् । भारतनिवासिनी आर्यजातिः पूर्वं द्वयोः शाखयोर्विभक्ता । तत्र एकस्याः सम्बन्ध भारतेन द्वितीयायाश्च सम्बन्ध ईरानेन सह जातः । मूलत इमे द्वे अपि जाती अभिन्ने स्तः । एष एव सप्तसिन्धुभाग आर्याणां च वर्तते[1] ।

**स्मृत्यादिसमुद्घोषः**

संस्कृतवाङ्मयस्य प्राचीनतमेषु ग्रन्थेषु श्रुति-स्मृतिपुराणेतिहासेष्वेवंविधानि प्रामाणिकानि तथ्यानि विद्यन्ते, येभ्यो ज्ञायते यद् भारतस्य आदिनिवासिन्यार्यजातिर्विभिन्नेषु सम्प्रदायेषु विभक्ता सती शनैः शनैः कम्बोज-जावा-सुमित्रादिदेशेषु विकीर्णा । तत्रत्याऽपि सर्वे भारतीया एव सन्ति, तेषु विदेशीयरुधिरस्य लेशमात्रमपि मिश्रणं नास्ति । भारतस्य धार्मिक-सामाजिक-राजनीतिकजीवनस्य विधिव्यवस्थापको महापुरुषो मनुर्भारतसीमान्तर्गतानां पौण्ड्रक-चोल-द्रविण-कम्बोज-शक-पारद-पल्लव-चीन-किरातखशप्रभृतीनां जातीनां निवासस्य सङ्केतः कृतोऽस्ति । तदनुसारं विश्वामित्रवत् तपःप्रभावेण ऋषिशृङ्गादिवद् बीजप्रभावेण च मानवा जात्युत्कर्षमपकर्षं वा यान्ति ।

मनुमतानुसारं भारतीयाः क्षत्रियाः पौण्ड्रादिदेशमुपगता याजनाध्ययनप्रायश्चित्ताद्यर्थं ब्राह्मणानां दर्शनाभावेन, उपनयनादिसंस्कारलोपेन च शनैः शनैः वृषलत्वमापन्नाः । एवं द्विजातिसंस्कारक्रियालोपादिना दूरदेशं गतास्ते आर्या म्लेच्छादीनां सम्पर्काद् म्लेच्छादिविभिन्नजातीया जाताः[2] । मनुस्मृतौ प्राचीनं भारतं ब्रह्मावर्त-ब्रह्मर्षिदेश-मध्यदेश-आर्यावर्तादिभिर्नामभिरभिहितमस्ति । ब्राह्मणग्रन्था अपि तथ्यस्यास्यैव सङ्केतं कुर्वन्ति । सृष्ट्यारम्भकाले ब्रह्मदेवेन समारब्धः सृष्टियज्ञः कस्यां वेद्यां सम्पन्न इति जिज्ञासायां शतपथब्राह्मणं स्पष्टं निर्दिशति यद्

१. आर्यों का आदिदेश, पृ० ३०–३९ ।

२. शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥
पौण्ड्रकाश्चोलद्रविडाः कम्बोजा यवनाः शकाः ।
पारदा पह्लवाश्चीनाः किराता दरदाः खशाः ॥ (मनुस्मृतौ—४३, ४४)



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आदिसृष्टिः कुरुक्षेत्र एवाजायत। अतः कुरुक्षेत्रं देवानां देवयजनम् ( सृष्टिरूपयज्ञस्य सम्पादन-स्थानम् ) प्रोच्यते 'तस्मादाहुः कुरुक्षेत्रं देवानां देवयजनम्' ( श० ब्रा० १४।१।१।२ )। मनुनापि मनुस्मृतौ कुरुक्षेत्रं मानवसभ्यताया आदिस्रोतः स्वीकुर्वतान्यदेशनिवासिनां कृतेऽत्रोत्पन्नेभ्यो ब्राह्मणेभ्यः स्वस्वचरित्रस्य शिक्षां ग्रहीतुमादेशो दत्तोऽस्ति।

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥ ( मनु० २।२० )

ऐतिहासिक-पौराणिकमतविवेचनम्

आदिकविना महर्षिणा वाल्मीकिना तु स्वकीये रामायणे सुप्रसिद्धाया लोकविश्रुताया अयोध्यापुर्या निर्मातारं भगवन्तमादिपुरुषं मनुमेव मनुते[1]।

पुराणेतिहासयोः यावतां वंशानां वर्णनमुपलभ्यन्ते, तेषां समेषामारम्भो मनुत एव भवति। एवं मनुसन्ततित्वान्मनुष्या मानवा उच्यन्ते। पुराणानुसारमेकस्मिन् कल्पे चतुर्दश-मनवो भवन्ति। तत्र प्रतिमन्वन्तरमेकैकस्य मनोः शासनं भवति। एषु वंशप्रतिष्ठापकदृष्ट्या द्वौ मनू महत्त्वशालिनौ स्तः। एकः स्वायम्भुवमनुः, द्वितीयश्च वैवस्वतमनुः। तत्र स्वायम्भुवमनुः ब्रह्मणो मानसपुत्रः पृथिव्याः प्रथमः सम्राट् आसीत्, तत्पत्नी च शतरूपादेवी बभूव।

अस्मिन् कल्पे आदिपुरुषस्य स्वायम्भुवमनोः निवासस्थानं ब्रह्मावर्ते सुपुनीते सरस्वती-नदीतटसमीप एवोक्तमस्ति। स हि ब्रह्मावर्ते निवसन् सप्तसागरद्वीपायाः समस्तायाः वसुधायाः शासनं करोति स्म[2]। स्वायम्भुवमनोः शतरूपायां द्वौ तनयौ समुत्पन्नौ–प्रियव्रत उत्तानपादश्च। तौ द्वावपि यथाधर्मं प्रजाः पालयन्तौ सप्तद्वीपवतीं महीं शशासतुः[3]।

आदिराज्ञो मनोरावासस्थाने ब्रह्मावर्ते यत्र प्राची-सरस्वती नदी प्रवहति, तत्र राज्ञा पृथुना दीक्षापूर्वकं शतमश्वमेधयज्ञाः समनुष्ठिताः। राज्ञः पृथोः पूर्वं पृथिव्यामस्यां पुरनगर-ग्रामादिव्यवस्था नासीत्। तेन स्वधनुषः कोट्या पर्वतशिखराणि विदार्य सञ्चूर्ण्य च पृथिवीं मानवनिवासयोग्या कृष्युपयोगिनी च कृता[4]।

अपि च ब्रह्मणा प्रजोत्पत्त्यर्थमादिष्टः कर्दमो मुनिः ब्रह्मावर्ते सुपुनीते सरस्वतीतटे सहस्रवर्षपर्यन्तं तपश्चचार[5]। महाभारते भारतस्य महिम्नो वर्णनप्रसङ्गे महद्गुणगानं

१. अयोध्या नाम तत्रासीन्नगरी लोकविश्रुता।
मनुना मानवेन्द्रेण यत्नेन परिकल्पिता॥ ( वा० रा० १।५।२ )

२. प्रजापतिसुतः सम्राड् मनुर्विख्यातविक्रमः।
ब्रह्मावर्ते योऽधिवसन् शास्ति सप्तार्णवां महीम्॥ ( श्रीमद्भा० ३।११।३५ )

३. प्रियव्रतोत्तानपादौ सुतौ स्वायम्भुवस्य वै।
यथाधर्मं जुगुपतुः सप्तद्वीपवतीं महीम्॥ ( श्रीमद्भा० ३।२१।२ )

४. प्राक्पृथोरिह नैवेषा पुरग्रामादिकल्पना।
अथादीक्षितराजा तु हयमेधशतेन सः।
ब्रह्मावर्ते मनोः क्षेत्रे यत्र प्राची सरस्वती। ( श्रीमद्भा० ४।८।३२ )

५. प्रजाः सृजेति भगवान् कर्दमो ब्रह्मणोदितः।
सरस्वत्यास्तपस्तेपे सहस्राणां शतं समाः॥ ( श्रीमद्भा० ३।२१।६ )

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृतमस्ति। तत्र लिखितमस्ति यद् ये नराः सरस्वतीदृषद्वत्योः मध्यवर्तिनि प्रदेशे कुरुक्षेत्रे निवसन्ति ते स्वर्गे एव निवसन्ति[1]। एतेन कुरुक्षेत्रस्य कृते स्वर्गस्य मान्यता प्रदत्ताऽस्ति महाभारते। एवं महाभारते भारतस्य गौरवगानविस्तारो दृश्यतेतराम्।

अपि च पुराणानुसारं समस्तस्य विश्वस्य आदिकारणमस्ति भगवान् नारायणो यस्य नाभिकमलतः प्रथमश्चतुराननो ब्रह्मा प्रादुर्भवति। तस्य मानसिकसङ्कल्पाद् अत्रि-मरीचि-दक्षप्रजापतिप्रभृतयो दिव्यतमाः पुत्रा समुत्पन्नाः। अनन्तरं दक्षस्य पत्न्यां प्रसूतौ अदिति-रुत्पन्ना या मरीचिपुत्रेण कश्यपेन सह विवाहिता। महर्षेः कश्यपाददित्यां विवस्वान् भगवान् भास्करः (सूर्यः) अजायत। तस्य विश्वकर्मसुतायां संज्ञायां भार्यायां वैवस्वतो नाम मनुर्जातः। वैवस्वतमनुवंशजानां विवरणं पौराणिकस्यैतिहासिकस्य मेरुदण्डोऽस्ति। अद्यत्वे प्रचलितस्य मन्वन्तरस्याधिपतिर्वैवस्वतमनुरेवास्ति। अयं सूर्यवंशस्य प्रतिष्ठापकः प्रथमो राजा बभूव। अस्य दशपुत्रा अभूवन्। एषु ज्येष्ठो हि इक्ष्वाकुर्मनोरुत्तराधिकारी भूत्वा मध्यदेशं प्रशशास। अपरे च भारतवर्षाभ्यन्तरे चतुर्षु दिक्षु प्रसृताः स्वं स्वमुपनिवेशं स्थापितवन्तो धर्मतश्च प्रजाः पालितवन्तः। अनन्तरमिक्ष्वाकोर्विकुक्षिप्रभृतयो बभूवुः शतपुत्राः। तेषु बहवो भारतवर्षे कियन्तश्च बहिर्गत्वा नैजं नैजं नवीनं राज्यं संस्थाप्य धर्मतः प्रजासु प्रशासनमकार्षुः, आर्यसंस्कृतेश्च प्रचारप्रसारौ चक्रुः[2]।

एवं ब्रह्मणो मानसपुत्रस्यात्रेस्तनयस्य चन्द्रमसः पुत्राद् बुधाद् वैवस्वतमनोः पुत्र्यामिलायां पुरुरवाः सञ्जातो यश्चन्द्रवंशस्य प्रतिष्ठापको धर्मिष्ठः सकललोकवन्दितः परममान्यश्च राजा बभूव। सोऽपि प्रतिष्ठानपुरे धर्मेण प्रजाः पालयन् सप्तद्वीपवतीं महीं पालितवान्[3]। पुरुरवा हि भारतवर्षे महायशस्वी लोकप्रियश्च प्रजापालको नृपतिरभवत्। यस्य विविधा गाथाः कीर्तयश्च ऋग्वेदकालत आरभ्य कालीदासपर्यन्तं विविधेषु मन्त्रेषु भूयो भूयो महागौरवेण गीताः सन्ति।

पुरुरवसः प्रपौत्रो नहुषात्मजो महाप्रतापी नृपतिर्ययातिर्यमुनापर्यन्तं निजविजयवैजयन्तीं प्रसारितवान्। सरस्वतीनदी तटे तेन अनेकेऽश्वमेधयज्ञा अनुष्ठिताः। राजा ययातिरपि सप्तद्वीपां महीं प्रशासद्, आयुषोऽन्ते आज्ञाकारिणं स्नेहभाजनं स्वकनिष्ठं पुत्रं पुरुं प्रजावर्ग-सम्मत्या प्रतिष्ठानपुरस्य राज्यसिंहासनेऽभिषिच्य सरस्वतीतटवर्तिस्वकीयं राज्यं तस्मै

---

१. दक्षिणेन सरस्वत्या दृषद्वदुत्तरेण च।
ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिविष्टपे॥
(महाभारतस्य वनपर्वणि—८३।४)

२. तेषां पुरस्तादभवन्नार्यावर्ते नृपा नृप।
पञ्चविंशतिः पश्चाच्च त्रयो मध्ये परेऽन्यतः॥ (म० भा०—९।६।५)

३. इलोदरे तु धर्मिष्ठं बुधः पुत्रमजीजनत्।
पुरुरवा इति ख्यातः सर्वलोकनमस्कृतः॥
सप्तद्वीपा वसुमती सशैलवनकानना।
धर्मेण पालिता तेन सर्वलोकहितैषिणा॥ (मत्स्यपुराणे—२४।९,१३)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रदत्तवान् । किञ्च, यदवे दक्षिणं भागम्, तुर्वसवे पश्चिमं भागम्, अनवे उत्तरं भागम्, द्रुह्यवे च पूर्वं भागं प्रदत्तवान् । तैः पञ्चभिरपि ययातिपुत्रैः पित्रा पञ्चधा विभज्य प्राप्तं तद्राज्यं धर्मपूर्वकं पालयामासुः[1] ।

ऋग्वेदे वर्णितेषु प्रसिद्धेषु नृपतिषु इक्ष्वाकुवंशीयस्य राज्ञो मान्धातुरुच्चतमं स्थानमस्ति । प्रागैक्ष्वाकवो राजानः सिन्धोः निकटतमं प्रदेशमेव प्रशासन्ति स्म, परन्तु मान्धाता यादवनृपतेः शशबिन्दोः कन्यायाः पाणिग्रहणं कृत्वा स्वां शक्तिं विवर्ध्य पूर्ववर्तिनां नृपतीनां कीर्तिं शिथिलीचकार, तथा समस्तं सिन्धुप्रदेशं पराजित्य यमुनां यावद् दिग्विजयं कृतवान् । स तत्कालिको न केवलं सर्वतो महान् चक्रवर्ती सम्राडेवासीत्, अपि तु यतः सूर्य उदेति यत्र चास्तं गच्छति स्म, स सर्वः प्रदेशो मान्धातुरेव राज्यमासीत् । एवं युवनाश्वपुत्रो राजा मान्धाताऽपि शशिभास्करप्रभाप्रदीप्तं स्वकीयं राज्यं निखिलं भूमण्डलं च प्रशशास[2] ।

एवं राज्ञो नाभागस्य तनयो भगवत्परमभक्तो राजा अम्बरीषोऽपि सप्तद्वीपवतीं पृथ्वीं प्रशासत् सर्वस्वं तृणाय मत्वा निरन्तरं भगवन्तं विष्णुं श्रद्धया समाराधयन् पुत्रवत् प्रजाः पालयति स्म[3] ।

अतो हि पुराणानुसारमादिकालतोऽत्रैव पुनीते भारतवर्षे लब्धजन्मानोऽस्माकं भारतीयानां पूर्वजा आर्या इत एव समस्तायाः सप्तद्वीपसागरसहिताया वसुन्धरायाः शासनमकार्षुः, धर्मतश्च प्रजाः पालयामासुः, न तेषां कुतोऽप्यागन्तुकत्वे ईषदपि कश्चन सङ्केत उपलभ्यते । तस्मादेभिः प्रबलतरैः पौराणिकैः प्रमाणैः स्पष्टं प्रतीयते यद् मानवसृष्टेरादिपुरुषो राजा मनुः, तथा तत्सन्ततयः तात्कालिका राजानः, ऋषयः, महर्षयस्तत्पुत्रपौत्रप्रभृतयश्चास्माकं पूर्वजा भारतवर्षस्य पवित्रतमेषु नदीप्रदेशेषु सानन्दं निवसन्तस्तपस्यन्तश्च मानवसृष्टेः प्रादुर्भावस्य मुख्यं लक्ष्यमध्यात्मज्ञानमर्जयन्तो वर्णाश्रमधर्मं पालयन्तश्च शाश्वतीं शान्तिमधिजग्मुरधिगच्छन्ति च साम्प्रतमपि ।

---

१. सप्तद्वीपां ययातिस्तु जित्वा पृथ्वीं ससागराम् ।
व्यभजत् पञ्चधा राजा पुत्रेभ्यो नाहुषस्तदा ॥
तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना ।
यथाप्रदेशं धर्मज्ञैर्धर्मेण प्रतिपालिता ॥ ( वायुपुराणे—९३।९०-९१ )

२. यौवनाश्वोऽथ मान्धाता चक्रवर्त्यवनीं प्रभुः ।
सप्तद्वीपवतीमेकः शशासाच्युततेजसा ॥
यत्र सूर्य उदेति स्म यत्र च प्रतितिष्ठति ।
सर्वं तद् यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥ ( श्रीमद्भागवते—९।६।३४,३७ )

३. अम्बरीषो महाभागः सप्तद्वीपवतीं महीम् ।
अव्ययां च श्रियं लब्ध्वा विभवं चातुलं भुवि ॥
मेनेऽतिदुर्लभं पुंसां सर्वं तत्स्वप्नमच्युतम् । ( श्रीमद्भागवते—९।४।१५ )

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**तर्कोपस्थापनमुपसंहारश्च**

ऋतुपरिवर्तनं हि प्रकृतेः नियन्त्रणेन जायते । यत्रान्येषु देशेषु वर्षपर्यन्तमेक एव ऋतुः तिष्ठति, तत्र भारतवर्षे यथासमयं क्रमशः षण्णामृतूनां विकासो बोभवीति । अतो निश्चीयते यद् भारतवर्षे प्रकृतेः पूर्णो विकासो जायते ।

अपि च खगोलविषयकगतिविधिं विज्ञातुं यस्या भूमध्यरेखाया उपयोगः क्रियते, सा रेखा लङ्कां कन्याकुमारीं काञ्चीवरं च स्पृशती कुरुक्षेत्रोपरितः प्रयाति । अतोऽन्यदेशापेक्षया भारतीये कुरुक्षेत्रे समये समये सर्वेषामृतूनां पूर्णो विकासो जायत एव । अत आदिसृष्टिर्भारतवर्षस्य कुरुक्षेत्रे जातेत्यत्र नास्ति काचिदपि विप्रतिपत्तिः ।

तस्माद् भारतवर्षमेवास्ति आर्याणामादिनिवासस्थानम् । अत्रैव च समेषां वेदानां विकासो जातः, तथा इदमेवास्ति हिन्दुसभ्यताया भारतीयसंस्कृतेश्चादिस्रोतः । इत एव ज्ञानसूर्य उदयमवाप्य अन्यानपि देशान् प्रकाशयति, विकाशयति चाध्यात्मचिन्तनविचारधाराप्रवाहं निरन्तरम् । अस्यैव 'वसुधैव कुटुम्बकम्' इत्युद्घोषो विश्वस्मिन् परस्परं सौहार्दभावं जनयति विचारकाणां चेतःसु । एतेनैव चात्मपरात्मभावनिरपेक्षं सर्वसाधारणं विविधमभ्युदयादिकं काम्यते विस्तार्यते च स्वकीयं यशःसौरभं सर्वत्र ।

सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत् ॥

इति शिवम् ।

● ● ●

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# व्याकरणपदार्थविमर्शः

श्रीरामयत्नशुक्लः
व्याख्याता वेदान्तविभागे,
प्राच्यविद्याधर्मविज्ञानसङ्कायस्य,
का० हि० वि० वि०, वाराणसी

इह किलानेकविधकल्मषोपनीतचतुरशीतिलक्षयोनिराक्षसीप्रसूताचिन्त्याप्रमेयदुःखजालकुले निमज्जतां जीवानां समुद्धाराय तत्रभवन्तो वेदा एव शरणमित्यस्माकं भारतीयानां विश्वासः। शाखाभेदभिन्नानां तेषां भगवतां वेदानां पारलौकिकैहलौकिकाभ्युदयसमवाप्तये षडङ्गानि विनिर्दिष्टानि। तथा ह्युक्तम्—

छन्दःपादौ तु वेदस्य हस्तौ कल्पोऽथ उच्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम्॥ इति।

षडङ्गवेदाध्ययनं नित्यमिति साक्षाद् भगवान् वेद एव यथा ब्रवीति, ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति।

तेषु अङ्गेषु मुखस्थानापन्नतया व्याकरणं प्रधानभूतमङ्गम्। तस्मात्तदध्ययनं परमावश्यकम्। मुखं विना सर्वविधव्यवहारविलोपापत्तिरिति तद्व्याकरणविषये किमपि यथामानमुच्यते—

व्याक्रियन्तेऽसाधुशब्देभ्यः साधुशब्दाः पृथक्क्रियन्ते येन तद् व्याकरणमिति व्युत्पत्तौ, वि+आङ्पूर्वककृधातोः करणेऽर्थे ल्युटि सति व्याकरणशब्दः साधुः।

प्रत्यासत्त्या असाधुशब्दावधिकसाधुशब्दकर्मकपृथक्कृतिप्रयोजकनियमविशेष एव व्याकरणपदार्थः।

## शक्तित्रैविध्यनिरूपणम्

व्याकरणस्य चेदमन्वर्थन्नामेति वदता प्रदीपकारेणात्र योगरूढिः[1] स्वीकृता। केवलयोगशक्तिस्वीकारे त्वतिव्याप्तिः स्यात्। तद्यथा गोभ्यो महिष्यो विविच्यन्ते, योग्येभ्योऽयोग्या विविच्यन्ते, तत्करणेऽतिव्याप्तेः। तस्मात् पङ्कजादिशब्दे यथा योगरूढिशक्तिस्वीकारस्तथैवात्रापि।

घटादिपदात् पटादिबोधवारणाय घटादिशब्दे घटाद्यर्थबोधौपयिकोऽनादिः कश्चन सम्बन्धः स्वीक्रियते। स च सम्बन्धः शक्तिरूपः। सा च[2] शक्तिस्त्रिधा—(१) योगशक्तिः, (२) रूढिशक्तिः, (३) योगरूढिश्च। शास्त्रकल्पितावयवार्थमात्रबोधे योगशक्तिः[3], यथा

१. प्रदीपः, महाभाष्यम्, पृ० सं० ७–८।
२. वैयाकरणलघुमञ्जूषा, उपाध्यायकृतटीकोपेता—पृ० ८८।
३. वैयाकरणलघुमञ्जूषा, उपाध्यायकृतटीकोपेता—पृ० ८८।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पाचकादिपदे । यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण बोधः, तत्र रूढिः । यथा मणिनूपुरादौ ।

यद्यपि शब्दार्थकमणधातोरौणादिके इन्प्रत्यये मणिः, एवं नूस्तुतौ इत्यस्मात्, नुवनं नूः' सम्पदादित्वात्क्विपि नूः, इति । पुर् अग्रगमने, अस्माद् धातोः 'इगुपधज्ञाप्रीकिरः कः[1]' इति सूत्रेण कप्रत्यये पुरः इति । नुवः पुरः, नूपुर इति योगशक्तिः प्रतीयते, तथाप्यत्र न तथा स्वीकारः, शब्दकर्तृरूपार्थस्य, स्तुतिसम्बन्ध्यग्रगमनकर्तृत्वरूपार्थस्य च लोकेऽनवबोधनात् ।

यत्र शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपितसमुदाये बोधकत्वं तत्र योगरूढिः । यथा पङ्कजादिपदे । तत्र पङ्कजनिकर्तृपद्ममिति बोधात् । न च तत्र लक्षणा, अनुपपत्तिप्रतिसन्धानं सम्बन्धप्रतिसन्धानं च विनापि तत्र बोधात् । प्रकृते योगरूढिस्वीकृतौ व्याकरणमित्यस्य कः पदार्थ इति भाष्यमपि मानम् ।

वस्तुतस्तु शब्दानां श्रोत्रेन्द्रियेणैव ग्रहणाद् व्याकरणस्य सार्थक्याय साधुत्वविशिष्टशब्दज्ञानप्रयोजको नियमविशेषो व्याकरणपदार्थः । साधुत्वस्येन्द्रियाविषयत्वेन, भवति व्याकरणस्य सार्थक्यम् । तत्र कः शब्दः साधुः, कश्चासाधुरित्यत्र शिष्टप्रयोग एव मानम् । तथा च साधुत्वशिष्टप्रयुक्तार्थविशिष्टशब्दनिष्ठसाधुत्वज्ञानप्रयोजको नियमविशेष इति फलति । तथा च वाक्यपदीये—'साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः' इति ।

अथ शब्दानुशासनमिति वदता भाष्यकारेणापि सूचितोऽयमर्थः ।

तद्यथा—शब्दा अनुशिष्यन्ते, असाधुशब्देभ्यो विविच्यन्ते साधुशब्दा अनेनेति तत्र व्युत्पत्तिरादृता भाति । तत्र साधुशब्दाः, असाधुशब्दा वाऽनेन शास्त्रेण न निष्पाद्यन्ते, तथाननुभवादेव । साधुशब्दा असाधुशब्दाश्चानादिकालादेव व्यवह्रियन्ते, तत्र व्याकरणानिष्पाद्यत्वं ज्ञेयम् । क्व चास्य साफल्यमिति चेत् पर्यवसानतः साधुत्वज्ञान एवास्य शास्त्रस्य प्रयोजकतेति निर्णीयते । तस्मात् शिष्टप्रयुक्तार्थविशिष्टशब्दनिष्ठसाधुत्वज्ञापको नियमविशेषो व्याकरणपदार्थ इत्युक्तमेवावर्तते इति ।

घटितबुद्धौ घटकज्ञानस्यावश्यकत्वेन किं नाम शिष्टत्वम्, किं वा साधुत्वमिति क्रमशो ब्रूमहे ।

**अथ शिष्टलक्षणम्**

पृषोदरादीनि यथोपदिष्टमिति सूत्रे[2] के पुनः शिष्टा इति भाष्यकारेण प्रश्ने कृते, वैयाकरणाः, इति तेनैवोक्ते समाधाने, तत्पुष्ट्यर्थं शास्त्रपूर्विका हि शिष्टिः, वैयाकरणाश्च शास्त्रज्ञाः, इत्युक्तम् । तथा सति अन्योन्याश्रयोऽपि तेनादर्शि । अन्योन्याश्रयश्च ज्ञप्तौ उत्पत्तौ स्थितौ च भवति । ज्ञप्तौ यथा हलन्त्यमिति, आदिरन्त्येन सहेतेति सूत्रयोः हलपदार्थज्ञानाधीना, इत्पदार्थज्ञप्तिः, इत्पदार्थज्ञानाधीना हल्पदार्थज्ञप्तिरिति । तद्वारणाय हलन्त्यमिति

१. पाणि० सू० ।३।१।१३५ ।
२. म० भा० ६।३।१०९, पृ० सं० ८८३, प्रकाशको मोतीलालः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सूत्रस्यावृत्तिः कृता। उत्पत्तौ यथा बीजाङ्कुरयोः। तद्यथा बीजोत्पत्त्यधीनाऽङ्कुरोत्पत्तिः, अङ्कुरोत्पत्त्यधीना बीजोत्पत्तिः। तन्निवारणायानयोरनादित्वं स्वीकृतम्। स्थितौ यथा सिंहस्थितिवनस्थित्योः। तत्र हि सत्यां सिंहस्थितौ तद्भयाद् वनविनाशकानां तत्र गमनासम्भवाद् वनस्थितिः, वनस्थित्या च निर्द्वन्द्वतया सिंहस्थितिरिति। राजनियुक्तपुरुषादिभिरपि वनसंरक्षणसम्भवेन सिंहस्थितेरनिवार्यत्वाभावेनान्योन्याश्रयदोषवारणम्।

प्रकृते च ज्ञाने अन्योन्याश्रयता, भाष्यकारेण शास्त्रपूर्विका शिष्टिः, शिष्टिपूर्वकञ्च शास्त्रम्, तदितरेतराश्रयत्वं भवतीत्युक्त्या ध्वननात्। शास्त्रपूर्विका शिष्टिरिति, प्रतीकमादायोद्द्योतकारः शिष्टपदप्रवृत्तिनिमित्तभूतशिष्टेः शासनस्य शास्त्रपूर्वकत्वात्, शास्त्रज्ञानपूर्वकत्वादित्यर्थः। शिष्टिपूर्वकं च शास्त्रमित्यत्र, शिष्टशासनमूलकञ्च पृषोदरादिशास्त्रमिति वदन् ज्ञानपदगर्भितव्याख्यया ज्ञानेऽन्योन्याश्रयतां सूचयति। तादृशान्योन्याश्रयदोषपरिहाराय निवासतः, आचारतश्च शिष्टत्वज्ञानम्, निवासाचारयोर्ज्ञानञ्च न शास्त्रज्ञानमपेक्षते, तस्यान्यप्रमाणसिद्धत्वात्। शिष्टाचारश्चार्यावर्त एव।

शिष्टाचारश्चार्यावर्ते एव आर्यावर्तश्च तत्रैव भाष्य उक्तः[1]। वैयाकरणलघुमञ्जूषायामपि शास्त्रज्ञस्यैवात्र[2] शिष्टत्वमुक्तम्। शास्त्रस्थानां तन्निमित्तत्वादिति[3] वदताजैमिनिनाप्यस्यैवार्थस्य पोषणं कृतम्। भर्तृहरिस्तु 'शब्दतत्त्वविदः[4] शिष्टाः शब्दार्थेषु व्यवस्थिताः' इति शिष्टलक्षणमाह। एवञ्चार्यावर्तनिवासप्रयुक्ताचारवत्त्वे सति व्याकरणज्ञानपूर्वकयावच्छब्दतत्त्वयथार्थज्ञानवत्त्वं शिष्टत्वमिति निष्कृष्टं लक्षणम्। अन्योन्याश्रयपरिहाराय सत्यन्तदलम्। अष्टाध्यायीनैरर्थक्यवारणाय व्याकरणज्ञानमिति। मुक्तावलीटीकायां दिनकर्यामपि[5] शिष्टत्वं फलसाधनतांऽशे भ्रान्तिरहितत्वमित्युक्तम्। तेन सहास्य संवाद एव। पुण्यजननायेमे एव शब्दा एष्वेवार्थेषु प्रयोक्तव्याः, नान्येऽसाधवः, नाप्यन्यार्थवाचकाः। तथा चात्र फलं पुण्यं तत्साधनता तत्तच्छब्देषु, 'एकः शब्दः सम्यग् ज्ञातः' इति श्रुतेः।

**साधुत्वनिरुक्तिः**

साधुत्वञ्च व्याकरणव्यङ्ग्योऽर्थविशिष्टशब्दनिष्ठः[6] पुण्यजनकतावच्छेदको जातिविशेषः। टिघुभादीनां साधुत्वाय शिष्टप्रयुक्तत्वस्यावश्यनिवेशेन, तेनैव निर्वाहाद् व्याकरणव्यङ्ग्यत्वं परिचायकमात्रम्, न तु व्यावर्तकम्। पुण्यजनकतावच्छेदकधर्मो यागादावप्यस्ति, तद्वारणाय शिष्टप्रयुक्तशब्दनिष्ठेति। घटपदस्य पटरूपेऽर्थे साधुत्वाभावायार्थविशिष्टेति अर्थविशिष्टशब्दनिष्ठत्वं शब्दत्वादौ, तत्र वारणाय विशेष्यदलमिति।

---

१. कः पुनरार्यावर्तः, प्रागादर्शात्, प्रत्यक्कालकवनाद् दक्षिणेन हिमवन्तम्, उत्तरेण पारियात्रम्। एतस्मिन्नार्यावर्ते आर्यनिवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद् विद्याया पारङ्गतास्तत्रभवन्तः शिष्टा इति।

२. तात्पर्यान्ता रत्नप्रभाटीकोपेता लघुमञ्जूषा, पृ० ६०—६१।

३. मीमांसादर्शनम्, १।३।९।

४. वै० ल० म०, पृ० ६।

५. दिनकरी रामरुद्रीसहिता मुक्तावली, पृ० ७।

६. वै० ल० म०, पृ० ६५।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु साधुत्वं जातिरित्युक्तम्, तन्न समीचीनम्, कत्वादिना साङ्कर्यात् । साङ्कर्यस्यापि जातिबाधकेषु परिगणनात्[1] । साङ्कर्यन्नाम - स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्य-स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वैतत्त्रितयसम्बन्धेन परस्परविशिष्टत्वम् । समन्वयो यथा भूतत्वमूर्तत्वयोः । तथाहि—भूतत्वं पृथिव्यादिपञ्चसु, मूर्तत्वं पृथिव्यादिचतुर्षु, मनसि च, आकाशस्यामूर्तत्वात् । बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वं भूतत्वम् । परिच्छिन्नपरिमाणवत्त्वं क्रियादिमत्त्वं वा मूर्तत्वम् । आकाशस्यापरिच्छेदात्, क्रियारहितत्वाच्चामूर्तत्वम् । पृथिव्यादि-चतुर्षु भूतत्वाभाववति मनसि च मूर्तत्वस्य विद्यमानतया, भूतत्वसमानाधिकरणोऽभाव आकाशे, तत्र मूर्तत्वस्यावृत्तेः तत्प्रतियोगितया तस्य भूतत्वविशिष्टत्वम् ।

एवं मूर्तत्वसामानाधिकरण्यं पृथिव्यादिचतुरवच्छेदेन तदभावसामानाधिकरण्यम् आकाशावच्छेदेन, मूर्तत्वसमामाधिकरणोऽभावो मनसि भूतत्वस्य तत्रावृत्तेः, तत्प्रतियोगित्रया भूतस्य मूर्तत्ववैशिष्ट्यम् । तथा च भूतत्वं न जातिः । मूर्तत्वस्य जातित्वन्तु क्रियासमवायि-कारणतावच्छेदकतया स्वीकृतम् ।

साङ्कर्यस्य जातित्वदूषकताबीजन्तु स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्यै-तदुभयसम्बन्धेन जातिविशिष्टजातित्वं यत्र यत्र, तत्र स्वसमानाधिकरणात्यन्ताभावप्रति-योगित्वाभव इति नियमभङ्ग एव ।

यथोक्तोभयसम्बन्धेन पृथिवीत्वविशिष्टं द्रव्यत्वं यदि पृथिवीत्वसमानाधिकरणात्यन्ता-भावप्रतियोगि स्यात्, तदा तस्य व्यापकत्वं विहन्येत । तथा च व्यापकताभङ्ग एव दूषकता-बीजम् । प्रकृते पूर्वोक्तसम्बन्धत्रितयेन परस्परवैशिष्ट्यं सिद्ध्यति । तथाहि—साधुत्वं साधु-गगनादिशब्दघटकगकारादौ अस्ति, कत्वं नास्ति इति साधुत्वसमानाधिकरणात्यन्ताभाव-प्रतियोगित्वं कत्वस्य । साधुकृपणशब्दककारे साधुत्वं कत्वञ्च वर्ततेऽतः स्वसामानाधिकरण्यम् । असाधु 'कपड़ा' आदिघटकककारे कत्वमस्ति, साधुत्वं नास्तीति स्वाभावसामानाधिकरण्यमिति कत्वे साधुत्ववैशिष्ट्यम् । तथा च सति जातित्वाभावः स्यादिति स्थितौ वैयाकरणसिद्धान्ते साङ्कर्यस्य जातित्वबाधकत्वं तत्र भवति, यत्र स्वव्यापकात्यन्ताभावप्रतियोगित्वसम्बन्धेन जात्योः वैशिष्ट्यम् । यथा नरत्वव्यापकीभूताभावप्रतियोगित्वं सिंहत्वे ।

एवं सिंहत्वव्यापकात्यन्ताभावप्रतियोगित्वं नरत्वे । यत्र यत्र नरत्वं तत्र तत्र सिंहत्वाभावः ।

यत्र यत्र सिंहत्वम्, तत्र तत्र नरत्वाभाव इति व्याप्तिसत्त्वात्ते जाती भगवति नृसिंहे न स्वीक्रियेते, साङ्कर्यदोषग्रस्तत्वात्तत्र विलक्षणैव जातिः, नरसिंहत्वस्वरूपा स्वीकार्या । तथा स्वीकारे नरो न सिंहो सिंहो न नर इति नरत्वसिंहत्वयोराश्रयभेदः प्रसिद्धो भज्येत । अतो नृसिंहे विलक्षणैव जातिः स्वीक्रियते । यदि नरत्वं सिंहत्वं च क्वचिदेकत्र स्वीकृतं स्यात्, तदा कदाचिद् नराभिन्नः सिंह इति तादात्म्यसम्भवाद् भेदो भज्येतेति भावः[2] । साध्वसाधु-

---

१ मुक्तावली, ५८-५९ ।

२. लघुमञ्जूषा रत्नप्रभोपेता ७६ पृष्ठतः ।

११

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ककारयोः सत्त्वेन साधुः ककार इति तादात्म्येन प्रतीतौ बाधकाभावः। तथा च सति प्रकृते आश्रयभेदभङ्गप्रसङ्गो नास्तीति न साङ्कर्यं कत्वसाधुत्वयोः जातित्वे बाधकम्।

एवमेव मूर्तत्वस्येव भूतादिपदशक्यतावच्छेदकतया भूतत्वस्यापि जातिरूपता। नहि कारणतावच्छेदकतयैव जातिसिद्धिरिति राजाज्ञास्ति। साधुत्वस्य जातिरूपतायामनुगताकार-प्रतीतिरेव मानम्। तदेवं साधुत्वघटितं व्याकरणलक्षणं सूपपन्नम्।

व्याकरणशब्दार्थनिरुक्तौ मानत्वेन पूर्वमनुशासनपदव्याख्यानं भाष्यकारीयं प्रदत्तम्, तन्नानुचितम्, व्याकरणं शब्दानुशासनं शब्दशास्त्रमित्येवमादीनां शब्दानां पर्यायत्वात्।

अत एव अथ शब्दानुशासनमिति भाष्ये, यद्यपि अनुशासनमित्येवोक्तम्, तदेवादाय अनुशासनमित्यस्य कः पदार्थ इत्येवोचितमासीत्, किन्तु तद् विहाय व्याकरणमित्यस्य[1] कः पदार्थ इति वदतां भाष्यकाराणां मते शब्दानुशासनव्याकरणशब्दयोः एकार्थत्वं प्रतीयते। अतो व्याकरणपदार्थनिर्वचने तदंशस्य मानत्वेनोपन्यास उचित एव। शब्दाः शिष्यन्तेऽनेनेति करणव्युत्पत्तिः शब्दशास्त्रशब्देऽपि।

व्याकरणशब्दस्य प्रसिद्धत्वेऽपि शब्दानुशासनशब्दस्योपादाने भाष्ये किंफलमित्य-पेक्षायाम् अनुबन्धचतुष्ट्यप्रदर्शनार्थं तदिहोपात्तमित्यवधेयम्।

ग्रन्थारम्भेऽनुबन्धचतुष्टयनिरूपणमावश्यकम्। अनुबन्धत्वन्नाम[2] ग्रन्थाध्ययनविषयक-प्रवृत्तिप्रयोजकज्ञानविषयत्वम्, सम्बन्धाधिकारिविषयप्रयोजनभेदेनैतच्चतुर्विधम्। सर्वेषां जनानां प्रवृत्तौ इष्टसाधनत्वकृतिसाध्यत्वयोर्ज्ञानमावश्यकम्, विषयज्ञानेनेष्टज्ञानं भवति, तत्साधनत्वञ्च तद्ग्रन्थे सेत्स्यति। प्रयोजनज्ञानेन चेष्टत्वं सम्पाद्यते। अधिकारप्रदर्शनेन च कृतिसाध्यत्वं बोध्यते। सम्बन्धसूचनेन ग्रन्थस्येष्टसाधनत्वं प्रतीतं भवति। एवञ्च भाष्योक्त-शब्दानुशासनपदमहिम्ना साधुशब्दरूपो विषयः स्पष्टतया प्रतीतो भवति। साधुशब्दा एवैष्टव्या, इत्यंशः केषां शब्दानामित्यग्रिमग्रन्थेन[3] भाष्यकारेण संसूचि। प्रयोजनं तु मुख्यं साधुत्वज्ञानम्, प्रयोजनप्रयोजनानि रक्षोहादीनि भाष्योक्तानि; अधीतकाव्यकोशादिरधिकारी 'असाधुशब्देभ्यः साधुशब्दविवेचनम्'।

व्याकरणेन असाधुशब्देभ्यः साधुशब्दविवेचनञ्चेत्थम्—तत्र शब्दापशब्दोभयोपदेशे गौरवादन्यतरोपदेशेनापीतरव्यावृत्तिसिद्धौ लाघवाच्छब्दोपदेश एव, उपादेयानामुपदेशस्यौ-चित्यात्। असाधुशब्दानामनेकत्वात् साधुशब्दानां चाल्पीयस्त्वात् शब्दोपदेशः। एकैकस्य शब्दस्य बहवोऽपभ्रंशाः, यथा गौरित्यस्य गावी गोणी गोपोतलिकेत्येवमादयः।

एवं सत्यपि सर्वेषां शब्दानामुपदेशः कर्तुमशक्यः। भाष्ये तथा बोधनात्[4]। तादृशभाष्य-प्रामाण्यात्। पूर्वस्मिन् समये वर्षशतादपि अधिकं जीवनमासीद् इति ज्ञायते। एतदेवाह—

१. नवा० भा० प०।

२. लघुशब्देन्दुशेखरः, अभिनवचन्द्रिका, पृ० ८।

३. नवा० म० भा० पृ० ९।

४. एवं हि श्रूयते बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम। बृहस्पतिश्च प्रवक्ता इन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनकालो नान्तं जगाम, किं पुनरद्यत्वे यः सर्वथा चिरंजीवति वर्षशतं जीवति।

(नवा० म० आ० प्र० आ०)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दशवर्षसहस्राणि दशवर्षशतानि च।
रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति[1]। इति।

शब्दस्य विस्तृतक्षेत्रत्वं भाष्यकार आह—'महान् हि शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः, साङ्गाः, सरहस्याः बहुधा भिन्नाः। एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाथर्वणो वेदः। वाकोवाक्यमितिहासः पुराणं वैद्यकम् इत्येतावान्[2] शब्दस्य प्रयोगविषयः।' इति।

वाकोवाक्यमित्येतेनोक्तिप्रत्युक्तिरूपो ग्रन्थः। पूर्ववृत्तसङ्कीर्तनमितिहासः। वंशानुकीर्तनं पुराणम्। तत्रापि विद्यायाः परिपाकश्चतुर्भिः[3] प्रकारैर्भवति। आगमकालेन स्वाध्यायकालेन प्रवचनकालेन व्यवहारकालेन च। आगमकालः, ग्रहणकालः। स्वयमभ्यासकालः, अभ्यासकालः। प्रवचनकालः, अध्यापनकालः। व्यवहारो यज्ञकर्मणि। आयुषोऽल्पीयस्त्वेन पूर्णेनापि वयसा आगमकालोऽपि न सम्पद्यते। तस्मात् कया रीत्या शब्दानुशासनं कर्त्तव्यमिति शङ्कायां भगवतैव महाभाष्यकारेणोक्तम्, सामान्यविशेषवल्लक्षणं प्रवर्त्यम्। सामान्यविशेषौ यस्मिंस्तत् सामान्यविशेषवत्।

एवञ्च तदात्मकत्वेन मतुपोऽनुपपत्तिरित्यपास्तम्। सामान्यधर्मावच्छिन्नोद्देश्यताकं सामान्यवत्। विशेषधर्मावच्छिन्नोद्देश्यताकं विशेषवत्। सामान्यन्नाम व्यापकमुच्यते। विशेषो नाम व्याप्यो धर्मः। यथा [4]इको यणचीति सूत्रस्य अजव्यवहितपूर्वत्वविशिष्टेक्त्वावच्छिन्नोदेश्यताकत्वेन सामान्यशास्त्रत्वम्, सवर्णाजव्यवहितपूर्वत्वविशिष्टेक्त्वावच्छिन्नोद्देश्यकतया, "[5]अकः सवर्णे दीर्घः' इति शास्त्रस्य विशेषशास्त्रत्वम्। तत्र सामान्यशास्त्रेणापाततो ज्ञानं सम्पाद्य ततो विशेषशास्त्रेणापवादभूतेन स्वविषयातिरिक्तत्वेन सङ्कोचं कृत्वा स्वविषये पूर्वज्ञानस्य बाधः क्रियतेऽन्यथा तद्वैयर्थ्यापत्तेः। यद्यपि दैत्यारिः, इत्यत्र इको यणचीत्यस्याव्याप्त्या, नास्ति व्यापकत्वम्। तथापि क्वचित्तद्विषये इगंशे श्रीष इत्यादौ इको यणचीत्यस्य क्वचिदकारांशे, आद्गुण इत्यस्य च प्रवृत्त्या तदन्यतरत्वेन व्यापकतामभ्युपेत्य व्याप्यव्यापकभाव एष्टव्यः।

किञ्च 'कर्मण्यण्', 'आतोऽनुपसर्गे कः' इत्यनयोरस्त्येव व्यापकव्याप्यभावः। सर्वेषां सूत्राणामस्त्येव साक्षात् परम्परया वोत्सर्गापवादभावो विस्तरभयान्नोच्यते। तदनया रीत्या व्याकरणेन शब्दानुशासनं कृतम्।

**व्याकृतिकरणनिरूपणम्**

व्याक्रियन्तेऽनेनेति व्युत्पत्तिप्रदर्शनेन व्याकरणशब्दस्य अन्वर्थत्वं स्वीकृतम्। प्रत्यासत्त्या च कस्मात्कस्य व्यावृत्तिरित्यपेक्षायाम् असाधुशब्दावधिकसाधुशब्दकर्मिकैव व्याकृतिरिति सूचितम्। व्याकृतिकरणं किं येन शब्दा व्याक्रियन्ते इत्यपेक्षायां भाष्यकारेण 'अथ व्याकरणमित्यस्य कः पदार्थः' [6]इत्यादिग्रन्थैः स्वयमेवोक्तम्। तत्र भाष्ये सूत्रम् ( पाणिनेरष्टाध्यायीसूत्रम् ) व्याकरणमित्युक्तम्।

**सूत्रलक्षणम्**

तत्र सूत्रं नाम[7]—

---

१. मूलरामायणे। २. नवा० म० भा० ७० पृष्ठे, ५ संस्करणम्, मुम्बईतः प्रकाशितम्।
३. तदेव पृ० सं० ५५। ४. पा० सू० अ० ६। ५. पा० सू० अ० ६।
६. न० महा० भा० ६ पृष्ठे। ७. ऋषिकल्पन्यासे।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अल्पाक्षरमसंदिग्धं सारवद् विश्वतोमुखम् ।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः ।। इति ।

असारमपि अल्पाक्षरभवितुमर्हतीति तद् व्यावृत्तय आह सारवदिति । अनेकरूपेण व्याख्येयत्वमाह विश्वतोमुखमिति । यथा-शाङ्करे मते तत्त्वमस्यादिवाक्यानामद्वैतपरत्व-व्याख्यानम् । द्वैतिनां मते द्वैतपरत्वमेव । तथा वृद्धिरादैजित्यस्य शक्तिज्ञापकत्वम्, तज्जपेन वृद्धिलाभश्च । हा ऊ, हा ऊ इति रूपेण मध्ये मध्ये सामवेदे उच्चार्यंते वैदिकैः स एव स्तोभ उच्यते, सूत्रे तद्राहित्यबोधनाय अस्तोभमिति । अनवद्यमित्यनेन सर्वविधदोषरहितत्व-मुच्यते । एतच्च ब्राह्मणवशिष्ठन्यायेनोक्तम् । एवमसंदिग्धमित्यपि[1] ।

इदञ्च सूत्रम् षड्विधम्—संज्ञापरिभाषाविधिनियमातिदेशाधिकारभेदेभ्यः । तथा चोक्तम्—

संज्ञा[2] च परिभाषा च विधिर्नियम एव च ।
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम् ।। इति ।

अत्र लक्ष्यते ज्ञायते यत्तल्लक्षणमिति व्युत्पत्त्या लक्षणशब्दः स्वरूपपरः, न तु असाधारणधर्मपरः ।

तत्र संज्ञाशास्त्रत्वम्—शक्तिज्ञापकत्वम् । सर्वे सर्वार्थवाचका इति शिष्टोक्त्या वृद्धयादि-शब्दानां सर्वार्थवाचकत्वेऽपि अस्मदादीनां तदज्ञानाद् वृद्धिरादैजित्यादीनां तदर्थज्ञापकत्वमस्त्येव ।

परिभाषात्वं तु संकेतग्राहकभिन्नत्वे[3] सति शब्दधर्मिकसाधुत्वप्रकारकशास्त्रजन्या-प्रामाण्यज्ञानानास्कन्दितबोधे सहकारित्वेन मुन्यभिप्रेतत्वम्, यथा तस्मिन्निति निर्दिष्टे पूर्वस्येत्यादि ।

अतिदेशो नाम—वतिघटितत्वम्, यथा अन्तादिवच्चेत्यादि । क्वचिच्च वत्यन्तत्वा-भावेऽपि अब्रह्मदत्तं ब्रह्मदत्तमाहेति ब्रह्मदत्तसदृश उच्यते, विनापि वतिं वत्यर्थो गम्यते इति भाष्यात्[4], अर्थतो वतिप्रत्ययसम्बन्धमादाय पूर्वत्रासिद्धमित्यादौ समन्वयः । उत्तरोत्तरं सम्बन्धोऽधिकारः, यथा अङ्गस्येत्यादीनाम्, परिष्कृतस्तुस्वदेशे लक्ष्यसंस्कारकोपयोगिविधि-[5]शास्त्रीयवाक्यार्थबोधोपकारकवाक्यार्थाननुभावकत्वे सति, विधिशास्त्रीयलक्ष्यसंस्कारोपयोगि-वाक्यार्थबोधप्रयोजकत्वं संज्ञादिवारणाय सत्यन्तम् । शेष इत्यत्रातिव्याप्तिवारणाय वाक्यार्थे विधिशास्त्रीयवाक्यार्थबोधोपकारकेति विशेषणम् ।

---

१. श्रीपण्डित इति पत्रिकायां वाराणसीतः प्रकाशितायां सं० २०३१ ले० प० श्रीरामप्रसाद-त्रिपाठिमहाभागाः प्रा० द० आ० यो० त० सा० यो० अध्यक्षाः—सं० सं० वि० वि० वाराणसी ।

२. नागेशोक्तिप्रकाशोपेतो लघुशब्देन्दुशेखरः पृ० सं० ८ ।

३. परिभाषेन्दुशेखरः प्रथमतन्त्रे ।

४. श्रीसभापतिमहाभागविरचितटीकोपेतप्रौढमनोरमा, पृ० सं० ५२ ।

५. भूतिभूषितपरिभाषेन्दुशेखरः, पृ० सं० ११ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विधित्वं नाम पुण्यजनकतावच्छेदकसाधुत्वज्ञानजनकत्वम्, विधिशास्त्रं यथा इको यण-[1]चीत्यादिसूत्रम् ।

एतादृशभेदलक्षणं हि सूत्रं व्याकरणमिति चेदभिप्रायः, तदा व्याकरणस्य सूत्रमिति षष्ठ्यर्थो नोपपद्यते । नहि सूत्रादन्यत् उपलभामहे, येनावयवावयविभावादयः सम्बन्धाः स्युः । सूत्रमात्रस्य व्याकरणत्वमिति च वक्तुमनुचितं तावन्मात्रेण शब्दानां ज्ञातुमशक्यत्वात्, नहि केवलेन सूत्रेण शब्दज्ञानम्, किन्तूदाहरणप्रत्युदाहरणवाक्याध्याहारादिसमुदितेन ।

लक्ष्यं तावदस्तु—इत्ययमपि पक्षो न सामिचीन्यमर्हति ल्युडर्थासङ्गतेः । शब्दकरणक-शब्दव्याकरणासम्भवेन लक्ष्यमात्रे तादृशकरणत्वानुपपत्तेः ।

इत्येवमाशङ्क्य सूत्रमात्रस्यापि भाष्ये व्याकरणत्वं कथञ्चित्समर्थितम्, तथाहि व्याकरणस्य सूत्रमित्यत्र षष्ठी तु राहोः शिरः, इत्यादिवदौपचारिकी । यथा हि—तत्रानेकावस्थायुक्तं शिरः राहुशब्दार्थः, यत्किञ्चिदेकावस्था युक्तम्, तत्, शिरःशब्दार्थस्तादृशराहुशब्दार्थस्य तादृशशिरः शब्दार्थोऽन्वयः । तथा च षष्ठ्यर्थोपपत्तिः । एवमिहापि व्याकरणशब्देन शास्त्रस्य व्याकृति-क्रियायां व्याकरणत्वमुच्यते, सूत्रशब्देन तु समुदायरूपतेति भेदव्यवहारः । शब्दाप्रतिपत्तिरूपो दोषोऽपि नास्ति । पदच्छेदादिभिः सूत्रार्थस्यैवाभिव्यञ्जनात् ।

एतन्मूलकमेवोच्यते—सूत्रेष्वेव हि तत्सर्वं यद् वृत्तौ यच्च वार्त्तिके । [2]आतश्च सूत्राद्भवति, यो ह्युत्सूत्रं कथयेन्नादो गृह्यते, नाद इत्यस्य नैतदित्यर्थः, अथवा नादोऽर्थरहित-त्वाद् घोषमात्रमेव [3]गृह्येतेतिभावः ।

तथा चानया रीत्या भाष्ये यद्यपि सूत्रमात्रस्य व्याकरणत्वमभ्युपेत्य स्वीकृतम्, तथापि वस्तुतः लक्ष्यलक्षणे समुदिते व्याकरणमित्ययमेव पक्षो ज्यायान् । [4]अमुमेवार्थमाहुः सभापतिशर्मोपाध्यायाः—शब्दसाधुत्वबोधकः सूत्रात्मकः, लक्ष्यलक्षणात्मको वा ग्रन्थविशेषो व्याकरणम्, । तत्र वाकारोऽनास्थायामित्यवधेयम् । तृतीयपक्षस्य समुदितस्य व्याकरणत्व-पोषकस्य सिद्धान्तरूपता च टीकायामपि ।

ननु समुदितस्य व्याकरणत्वे सूत्रमात्राध्ययने कथ्यते—व्याकरणमधीयते तन्नोपपद्यते, इति चेत् तत्र घृतं भुक्तम्, तैलं भुक्तम्, उत्तरे पाञ्चालाः पूर्वे पाञ्चाला इत्यादि व्यवहाराः—यथा तेषां तेषां शब्दानां समुदायपरत्वेऽपि अवयवपरत्वमादाय निर्वाहः, तथा प्रकृतेऽपि निर्वोढव्यम् । अत एव सूत्रार्थोपबृंहणपराणां भाष्यादिग्रन्थानां काशिकाकौमुद्यादीनां तद्व्याख्यानभूत-शेखरादिग्रन्थानां तद्व्याख्याभूताधुनिकग्रन्थानां लक्ष्यलक्षणादिरूपाणां व्याकरणत्वम् । सूत्रमात्रस्य व्याकरणत्वे लक्षणावृत्तिराश्रयणीया भवेत् । वार्त्तिकानामपि तत्त्वमक्षतमेव । व्याकरणन्यूनतापूरकत्वादेव ।

तथा च वार्त्तिकलक्षणम्[5]—

उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते ।
तं ग्रन्थं वार्त्तिकं प्राहुर्वार्त्तिकज्ञा मनीषिणः ॥

तदेवं लक्ष्यलक्षणसमुदितव्याकरणेन शब्दा अन्वाख्यायन्त इति सिद्धम् ।

---

१. पाणिनिसूत्रम् ।  २. नवा० म० भा० ७६-७७ पृष्ठे ।
३. नवा० म० भा० प्रदीपोद्द्योतयोः पृ० ७६ ।
४. भैरवीरत्नप्रभोपेता प्रौढमनोरमा, भूमिका पृ० ३ ।
५. नवा० म० भा० पृ० ७९ सिद्धान्तभूततृतीयपक्षसमाहेति टीकास्वरूपम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**शब्दान्वाख्यानप्रकारः**

शब्दान्वाख्यानं व्याकरणेन क्रियत इत्यस्य कोऽभिप्रायः? असाधुशब्दोपमर्देन साधुशब्दोत्पादनेन अयं साधुरयमसाधुरिति साधुशब्दव्युत्पादनेन वेति द्वैतम्। न तावत् प्रथमः पक्षस्तस्य भाष्यकारैरेव खण्ड्यमानत्वात्। तथा च भाष्यम्[1]–'यल्लोकेऽर्थमर्थमुपादाय शब्दान् प्रयुञ्जते, नैषां निर्वृत्तौ यत्नं कुर्वन्ति, ये पुनः कार्या भावाः, तेषां निर्वृत्तौ यत्नः क्रियते। तद्यथा घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाऽऽह–कुरु घटं कार्यमनेन करिष्यामीति, न तद्वत् शब्दान् प्रयुयुक्षमाणो वैयाकरणकुलं गत्वाऽऽह कुरु शब्दान् प्रयोक्ष्ये' इति। तावत्येवार्थमुपादाय शब्दान् प्रयुञ्जते, बुद्ध्या वस्तुनिरूप्येत्यर्थः।

उद्द्योतकारस्तु[2] वैयाकरणकुलमगत्वैवेत्यर्थमाह। शब्दोत्पत्तिस्तु कण्ठताल्वादिस्थानेषु तत्तदाभ्यन्तरप्रयत्नानादाय वाय्वाघातादेव। तस्माद् व्युत्पादकत्वेनैव व्याकरणस्य शब्दान्वाख्यायकत्वम्। तथा चोक्तम्[3]–'सुक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत। अत्रा सखायः सख्या विजानते, भद्रैषां लक्ष्मी निहिताधिवाचि, इति। सक्तुः सचतेर्दुर्धावो भवति कसतेर्वा विपरीताद् विकसितो भवति। चालनीः तितउः पुमान् इत्यमरः। यथा तितउना सक्तोस्तुषोऽपनीयते, तथा व्याकरणेन वाचोऽपशब्दा अपनीयन्ते इत्यर्थः। शब्दानां नित्यत्वेऽपि शब्दापशब्दज्ञापकत्वेन व्याकरणस्य सार्थक्यम्। तथा चोक्तम्—'एकः शब्द सम्यग् ज्ञातः सुष्ठु प्रयुक्तः शास्त्रान्वितः स्वर्गे मर्त्ये च कामधुग् भवति' इति। शब्दानां सम्यग्ज्ञानं व्याकरणेनैव क्रियते।

**शब्दज्ञाने धर्मः प्रयोगे वेति विचारः**

इदानीमिदं विचार्यते यत् शब्दज्ञाने धर्मः, प्रयोगे वा। नाद्यः, ज्ञाने धर्म इति चेदधर्मः प्राप्नोति पुरुषम्। यो हि शब्दान् जानाति, अपशब्दानप्यसौ जानाति, किं वा भूयांसमधर्ममाप्नोति। भूयांसोऽपशब्दाः। अल्पीयांसः शब्दाः। एकस्यैव शब्दस्य बहवोऽपभ्रंशाः। तद्यथा–गौरित्यस्य गावी गोणी गोपोतलिकेत्येवमादयोऽपभ्रंशाः। नापि प्रयोगे धर्मः, सर्वलोकस्य नैयायिकादेरकृतश्रमाणामपि अभ्युदयप्राप्तिप्रसङ्गः। तथा च सति यत्नवैफल्यप्रसक्तिः। अनधीतव्याकरणाप्यन्ये परप्रत्ययावगतशब्दप्रयोगे कुशला भवन्ति, तथा मुग्धवैयाकरणापेक्षया प्रौढोऽवैयाकरणः साधुशब्दान् प्रयुङ्क्ते। एवं सति नापि ज्ञाने धर्मः, नापि प्रयोगे, किन्तु शास्त्रज्ञानपूर्वकशब्दप्रयोगे धर्म इत्येकः पक्षः।

अथवा पुनरस्तु ज्ञाने धर्म इति द्वितीयः पक्षः। तत्रानयोरित्थमुक्तिसम्भवे किञ्चित्तद्यथा तथाहि योऽश्वमेधेन[4] यजते यश्चैनमेवं वेदेति ज्ञानमात्रादेव ब्रह्महत्याकरणं यदि सिद्ध्येत् को जातुचिद् बहुद्रव्यव्ययायाससंसाध्यमश्वमेधं कुर्यात्। तद्विधानश्चानर्थकं स्यात्। एवं शब्दज्ञानाच्चेद् धर्मः सिद्ध्येत् को नामानेकताल्वादिव्यापारायासखेदमनुभवेत्। तस्मात् क्रतुवदेव ज्ञानपूर्वकशब्दप्रयोग एव धर्मः। कारणे कार्यवदुपचारात्।

---

१. महा० भा० पृ० ६५।
२. नवा० म० भा० पृ० ६५।
३. न० महा० भाष्यम्।
४. म० भा०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वस्तुतो ज्ञाने धर्म इत्येव सिद्धान्तः। तथाहि भाष्ये शब्दस्वरूपविवरणावसरे येनोच्चारितेन[1] सास्ना इति, अथवा प्रतीतपदार्थको लोके ध्वनिरिति द्विधा शब्दस्वरूपमुक्तम्। येनोच्चारितेनेत्यस्य उच्चारिताभिव्यक्तेनेत्यर्थः। तदनुसारेण ध्वनिरूपशब्दमाश्रित्य शास्त्रपूर्वकं शब्दप्रयोगेऽभ्युदय इत्युक्तम्, तस्यानित्यत्वेन प्रयोगसम्भवात्। 'स्फोटः शब्दः' इति द्वितीये सिद्धान्तभूते पक्षे ज्ञाने धर्म इति नित्यस्फोटस्य प्रयोगासम्भवात् स्फोटो नित्यः श्रुतिप्रतिपाद्यो ब्रह्मापरपर्यायः। तथा चोक्तम्—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः[2]॥ इति।

स्फोटज्ञानञ्च ब्रह्मज्ञानवद् मुख्यत्वात् पराङ्गं न भवति। 'सर्वमेव हि विज्ञानम्' इति सूत्रविरोधोऽपि न, स्फोटवादस्य सिद्धान्तरूपतया द्वितीयपक्षस्य सिद्धान्तत्वम्। न च ज्ञाने धर्म इति पक्षे यथा साधुशब्दे ज्ञाने धर्मः, तथैवासाधुशब्दज्ञानेऽधर्म इति पूर्वोक्तदोषप्रसङ्गः, 'एकः शब्दः सम्यग् ज्ञातः' इति श्रुत्या साधुशब्दज्ञाने धर्मबोधनेऽपि, असाधुशब्दज्ञाने अधर्मबोधकानुपलब्धेः।

धर्माधर्मबोधने शब्दस्यैव प्रामाण्यात्, यस्य ज्ञाने शब्देन धर्मबोधनं क्रियते तज्ज्ञाने धर्मो जायते, यत्र शब्दस्यौदासीन्यम्, तज्ज्ञानेनापि धर्मो नाप्यधर्मः, यथा अशिष्टाप्रतिषिद्धानां हिक्कितहसितकण्डूयितादिक्रियाणां धर्माधर्मोभयाप्रयोजकत्वम्। वस्तुतस्तु वह्न्यानयननान्तरीयकतया पात्रस्य पृथक्फलवत्त्वाभाव इव, शब्दज्ञानान्तरीयकतयाऽपशब्दज्ञानस्य पृथक्फलं नास्तीत्यभिप्रायः। एतच्च भाष्ये[3] सुस्पष्टम्।

**नित्यत्वानित्यत्वोभयपक्षेऽपि शास्त्रस्योपयोगित्वम्**

शब्दनित्यत्वानित्यत्वपक्षौ शास्त्रे आश्रितौ तद्विषये किञ्चिदेव वच्मः।

पाणिनिसम्मतनित्यत्वपक्षे त एव शब्दाः संस्कार्याः, ये खलु शिष्टैः प्रयुक्ताः, प्रयुक्तानामेवान्वाख्यानात्। शिष्टलक्षणन्तु पूर्वमुक्तम्। आर्यावर्तनिवासप्रयुक्ताचारवत्त्वे सति व्याकरणज्ञानपूर्वकयावच्छब्दयथार्थज्ञानवत्त्वं बोध्यम्। भाष्ये आर्यावर्तलक्षणं कृतम्, तत्र आदर्शः विशेषः। कालकवनं प्रयागः। पारियात्रो विन्ध्यः। शब्दकार्यत्वपक्षेऽपि शिष्टसम्मतशब्दानामेवोत्पत्तिः स्वीकार्या। न हि ते कामचारमुत्पादयन्ति शब्दान्। अत एव कौमुद्यां वच्धातुविषये 'अयमन्ति' परो न प्रयुज्यते इत्युक्तम्। प्रक्रियापक्षोऽपि (अनित्यत्वपक्षोऽपि) शास्त्रप्रवृत्त्यर्थमावश्यकतया शास्त्रे स्वीकृतो वर्त्तते। तथा सत्येव अचः[4] परस्मिन्निति शास्त्रस्य सार्थक्यम्। अन्यथा हि अचपर्याप्तस्थानिताकादेशस्याप्रसिद्धतया तद्वैयर्थ्यं सुस्पष्टमेव। स्थानिवदित्यादि सूत्रन्तु, अनुमानिकादेशमादायापि चारितार्थ्यम्भावितुं शक्नोति। स्थानिवदित्यादि सूत्रमपि अर्थवति पर्यवसानमित्यादिभाष्योक्त्या पचति इत्यादौ तिङित्यस्य स्थाने तु इत्युच्चारणीयम्। इत्येवंक्रमेण बुद्धिपरिणामप्रयुक्तस्थान्यादेशभावमादायैव चरितार्थम्।

---

१. नवा० म० भा०।  २. वा० प० १।१।
३. नवा० म० भा०, पृष्ठ ७५।  ४. सिद्धान्तकौमुदी–अच्सन्धिप्रकरणे।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कार्याविपरिणामाद्वेत्युक्तेः । कार्या बुद्धिः[1], तस्या विपरिणाम इत्यर्थः । अन्यस्यासम्भवेन कार्यवेदनात्र बुद्धिग्रहणम्, न तु कार्यशब्दो बुद्धिपर्यायः । पूर्वोक्तयुक्त्या पाणिनीयमते नित्याः[2] शब्दाः, नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यम्, 'सिद्धे शब्दार्थसम्बन्धे', इत्यादिभाष्यवार्त्तिकग्रन्थैश्च भूयो भूयः शब्दस्य कूटस्थनित्यताऽभिहिता । भर्तृहरिरप्याह—

नित्याः शब्दार्थसम्बन्धाः समाम्नाता महर्षिभिः ।
सूत्राणां सानुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः ॥ इति ।

अनुतन्त्रं वार्त्तिकम् । तत्रानयोः पक्षयोः समन्वयपरिस्थित्योः नित्यत्वपक्षो ज्यायान् सिद्धान्तत्वेनाभिमतः । व्याकरणेन साधुत्वबोधनमात्रं क्रियते । ततश्च बोधिते साधुत्वे साधुशब्दप्रयोगेणोत्पन्नधर्मादन्तःकरणशुद्धया शब्दब्रह्मणो ज्ञानेन परमपुरुषार्थो मोक्षो जायते। हरिणापीत्थमुक्तम्—

[3]तद् व्याकरणमागम्य परं ब्रह्माधिगम्यते ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ॥ इति ।

अयञ्च नित्यशब्दवादः स्फोटवादोऽपि निगद्यते । स्फुटत्यर्थोऽस्मादिति व्युत्पत्त्या अर्थविषयकप्रमितिप्रयोजकः । तथा चानया रीत्या अर्थप्रमितिप्रयोजकत्वं शब्दे सिद्धयति । स च स्फोटात्मा शब्दः अष्टसु भेदेषु विभक्तो राजते [5]भूषणादिग्रन्थेषु । वर्णपदवाक्यभेदेन त्रितयस्य, जातिव्यक्तिभेदेन षट्त्वम्, वर्णस्य नित्यत्वेऽपि पदवाक्ययोः सखण्डाखण्डभेदौ इति सङ्कलनया अष्टौ भवन्ति स्फोटाः । तेषु वाक्यस्फोटो मुख्यः । तेनैव लोके व्यवहारदर्शनात् । तथा चैतद्विषये [6]मञ्जूषायामप्युक्तम्—तत्र वाक्यस्फोटो मुख्यः, तस्यैवार्थबोधकत्वात् तेनैवार्थसमाप्तेश्च, तदुक्तं न्यायभाष्यकृता पदसमूहो वाक्यमर्थसमाप्तौ । अर्थसमाप्तौ इत्यस्य समर्थमिति शेषः ।

तथा च पदसमूहत्वे सति अर्थसमाप्तौ समर्थत्वं वाक्यत्वम् इति वाक्यलक्षणम्। पदञ्चात्र सुबन्ततिङन्तरूपं ग्राह्यम् । निराकाङ्क्षप्रतिपत्तिजनकत्वे सति पदसमूहत्वं वाक्यत्वमिति फलति । अनर्थके दश दाडिमानि, इत्यादावतिव्याप्तिवारणाय निराकांक्षेति। प्रत्यक्षे विषयस्यापि कारणत्वस्वीकारात् 'अयं घटः' इति निराकाङ्क्षप्रतिपत्तिजनकत्वेनार्थेऽतिव्याप्तिवारणाय पदसमूहत्वमिति अमरकोषे तु 'सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता' इत्युक्तम्, तदपि अनुकूलमेव । अत्र वाकारश्चेदर्थे ।

सुप् च तिङ् च सुप्तिङौ तौ अन्ते ययोः तयोश्च यः सुप्तिङन्तचयः। द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं सम्बध्यते इति न्यायेन चयशब्दस्य समासघटकयावत्पदैः सम्बन्धः । यद्यपि चयशब्दोऽत्र न समासान्तावयवः, तथापि नियमे अन्तशब्दस्य परसमीपपरत्वमेव । एवमत्र नियमे आदिशब्दः पूर्वसमीपबोधकः । द्वन्द्वस्वभावसिद्धसहविवक्षामूलकत्वेनायं नियम इति स्वीकारात् । 'द्वन्द्वादौ द्वन्द्वमध्ये द्वन्द्वान्ते च श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति नियमशरीरम् । 'द्वन्द्वादौ' इत्यस्य [7]"तुल्यास्यप्रयत्नम्"—इत्युदाहरणम् । द्वन्द्वमध्ये इत्यस्य "अन्तःशब्दस्याङ्

१. नवा म० भा०, पृ० ४५३ ।
२. नवा० महा०, पृ० ३७३ ।
३. वा० प० १।२३ ।
४. वा० प० १।१४ ।
५. वै० भू० सा० स्फोटनिरूपणम् ।
६. वैयाकरणल० म० प्रारम्भ एव ।
७. सिद्धान्तकौमुदी-संज्ञाप्रकरणम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किंविधिण[1]स्त्वेषूपसर्गत्वं वाच्यमिति"। द्वन्द्वान्ते इत्यस्य "प्रातिपदिकार्थलिङ्गपरिणामवचनमात्रे[2] प्रथमा" इत्युदाहरणम्। तथा च सुबन्तचयः तिङन्तचयः सुबन्ततिङन्तचयश्च गृह्यते। सुबन्तचयो यथा—रामेण शयितव्यम्, सुबन्ततिङन्तचयो यथा रामो भवति, तिङन्तचयो यथा-पचति भवति इत्यादीनि।

नन्वेवं सन्ति दश दाडिमानि इत्यादौ अतिव्याप्तिः स्यादित्यत आह—क्रिया वा कारकान्वितेति वा चेदर्थे इत्युक्तम्, क्रिया चेत् कारकान्वितेति तदर्थः। अनर्थके कारकान्वित-क्रियाया अभावेन न दोष इति भावः।

वार्त्तिककाराणां मते 'एकतिङ्[3]वाक्यम्' इति प्रवादः। नन्वेवं सति पचति भवति इत्य-स्यावाक्यत्वं स्यादिति चेन्न, एक तिङन्त एकं तिङन्तं मुख्यविशेष्यीभूतार्थप्रतिपादकं यत्रेति व्युत्पत्त्या एकतिङर्थनिष्ठमुख्यविशेष्यताप्रयोजकं वाक्यमिति तस्याभिप्रायेण, पचति भवति इत्यादेश्च पाककर्तृका भावनेति बोधेन तिङन्तद्वयेऽपि एकतिङर्थस्यैव प्राधान्यात् तत्त्वाक्षतेः।

एवं सत्यपि रामेण शयितव्यमित्यादावव्याप्तिस्तदवस्थैवेति चेद्, अत्राहुः—मुख्य-विशेष्यतायोग्यक्रियाप्रतिपादकत्वनिष्ठप्रकारतानिरूपिततात्पर्यीयविशेष्यतावत्पदाघटकञ्च यत्पद-द्वयम्, तद्घटितत्वे सति परस्परनिरूप्यनिरूपकभावापन्नविषयत्वाप्रयोजकपदाघटितत्व-मेकवाक्यत्वम् इति स्वीकारेणादोषात्।

रामः पठति, त्वया पठितव्यम्, इत्यादीनां वाक्यत्वेऽपि पचति भवति इत्यादीनां वाक्यत्वे मानन्तु "तिङतिङ्" इति सूत्रमेव। यदि नाम तिङन्तात् परं तिङन्तं न स्यात्तदा अतिङ् इति निर्विषयत्वमेव भजेत्। अस्ति च पचति भवतीत्यादीनां तिङन्तद्वयानामपि वाक्यत्वमतस्तदाह सूत्रे। "भूवादयो धातवः" इति [4]सूत्रस्थभाष्येणापि तिङन्तानामेकवाक्यत्व-स्वीकारः।

'पश्य मृगो धावति' इत्यत्रैकवाक्यत्वप्रतिपादकं महाभाष्यमपि तिङन्तानामेकवाक्यत्व-स्वीकारे मानम्। पश्य मृगो[5] धावति इत्यत्र भाष्यसिद्धैकवाक्यतासिद्धये वैयाकरणैः व्यापार-मुख्यविशेष्यकः शाब्दबोध इष्यते। प्रथमान्तार्थमुख्यविशेष्यताकत्वेषु एकवाक्यता हानिः। तथाहि 'पश्य मृगो धावति' इत्यत्र प्रथमान्तद्वयम्, अध्याहृतपश्येति क्रियाकर्तृभूतत्वमिति मृग इति च, प्रथमान्तार्थस्य प्राधान्ये दर्शनाश्रयस्त्वं धावनाश्रयो मृग इति पृथगेव बोधः, न त्वेक-वाक्यतयेति दोषः। तस्माद् एकवाक्यतासम्पादनाय व्यापारमुख्यविशेष्यकः शाब्दबोधोऽ-भ्युपेयते। तथा स्वीकारे उत्कटधावनस्यैव प्रतिपिपादयिषितत्वेन मृगकर्तृकोत्कटधावनकर्मक-त्वकर्तृकं प्रेरणाविषयीभूतं दर्शनमिति भाष्यसिद्धैकवाक्यत्वसिद्धिः। धावनस्य दर्शन-

---

१. सि० कौमुदी भ्वादिप्रकरणम्।
२. सि० कौमुदी कारकप्रकरणम्।
३. वै० अ० स० प्रभादर्पणसहितः, पृ० ११४।
४. महाभाष्यम् १।१३।
५. वै० भू० सा० धात्वर्थनिर्णयः।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कर्मत्वेऽपि धावतीत्यस्याप्रातिपदिकत्वान्न द्वितीयोत्पत्तिः। इतोऽधिकजिज्ञासुभिः [1]भूषण-सारेऽवलोकनीयम्। वाक्यलक्षणानि बहूनि विस्तरभयान्नात्र लिख्यन्ते।

तत्र प्रतिवाक्यं संकेतग्रहासम्भवात् तदन्वाख्यानस्य व्याकरणातिरिक्तलघुनोपायेना-शक्यत्वाच्च वाक्येषु पदानि प्रविभज्य पदे च प्रकृतिप्रत्ययविभागकल्पनेन कल्पिताभ्या-मन्वयव्यतिरेकाभ्यां तत्तदर्थविभागं शास्त्रमात्रविषयं परिकल्पयन्ति स्माचार्याः। एतदेवाभिप्रेत्य विभाषा सुप्[2] इति सूत्रे कैयटः अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययानामिह शास्त्रेऽर्थवत्ता-परिकल्पनादित्याह—इत्यादिलघुमञ्जूषावलोकनेनैव[3] ज्ञायते। यन्मुख्यो वाक्यस्फोटः, तदर्था-वगमाय पदकल्पनाप्रकृतिप्रत्ययादिकल्पना अन्वयव्यतिरेकाभ्यां तत्तदर्थपरिकल्पना च क्रियते।

तदुक्तं[4] हरिणा—

यथा पदे विभज्यन्ते प्रकृतिप्रत्ययादयः।
अपोद्धारस्तथा वाक्ये पदानामुपवर्ण्यते॥ इति।

अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययार्थपरिकल्पना इति, तिबुच्चारणे कर्त्रर्थबोधः तदुच्चारणाभावे कर्त्रर्थबोधाभावः, तस्मात् तिङः कर्तृरूपोऽर्थ इति शैली सनाथैव तत्तदर्थकल्पना। पचादिप्रकृतीनामप्यर्था अनयैव रीत्या विनिर्णेया भवन्तीति ध्येयम्। तथाहि पच्धातूच्चारणे फूत्कारादीनां बोधः, तदभावेन तदभाव इति–पच्धातोः फूत्कारादिषु शक्तिरभ्युपगम्यते। एवं वाक्यसंकेतग्रहफलकप्रक्रियानिर्वाहाय एष काल्पनिको विभागः। न चैष वास्तविकः। तत्तदवयव-तत्तदर्थबोधनेन च समुदायस्य समुदायार्थस्य च बोधने तात्पर्यम्मृषीणाम्, [5]स्पष्टञ्चैतदर्थवत्सूत्रे भाष्यकैयटयोः।

हरिणाप्याह—

उपायाः शिक्षमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥ इति।

'उपलालनाः' इत्यस्य भवन्ति इति शेषो बोध्यः। तस्मात् प्रकृतिप्रत्ययतत्तदर्थबोधन-द्वारा सर्ववाक्यसंकेतग्रहो व्याकरणद्वारा सम्पद्यते।

**पाणिनीयव्याकरणस्य प्राशस्त्यम्**

ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति, आगमेन साङ्गस्य वेदस्या-ध्ययनम् अनादिकालेनाऽपरिच्छेदे बोध्यते। अङ्गानि च छन्दःकल्पनिरुक्तज्योतिःशिक्षा-व्याकरणानि षड्। मुखमिव प्रधानत्वाद् व्याकरणं मुखस्थानीयं प्रधानमङ्गम्। यथा वेदोऽनादिः तथैव व्याकरणमपि अनादिः।

असौ पुनर्व्याकरणं ग्रहीष्यन् सूर्योन्मुखः प्रष्टुमनाः कवीन्द्रः।
उद्यद्गिरेरस्तगिरिञ्जगाम ग्रन्थं महद्धारयनप्रमेयः॥
ससूत्रवृत्त्यर्थपदं महार्थं ससंग्रहं सिद्धयति वै कवीन्द्रः।

---

१. वै० भू० सा० धात्वर्थनिरूपणम्।
२. म० भा० ५।३।६८।
३. लघुमञ्जूषा–र० प्र० पृ०, ५।
४. वा० प०–२।१०,
५. पा० सू०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति वाल्मीकिवचनेनापि एतत् सुस्पष्टीभवति यद् व्याकरणं न केवलं पाणिनिनैव प्रोक्तमपि तु ततः पूर्वमपि वेदवद् अनाद्येव ।

इदन्तु अन्यत् यत् पूर्वतनानि व्याकरणानि वृत्तिसंग्रहादिपदेन व्यवह्रियन्ते स्म । 'धाता यथापूर्वमकल्पयत्' इति श्रुत्यनुसारेण वैयाकरणाः पाणिन्यादयः सूत्राणि संग्रहादीनि च पूर्वव्याकरणानुबन्धीन्येव प्रकाशितवन्तः, अतः पूर्वं व्याकरणमपि नासीदिति स्वकपोलकल्पितान्येव पाणिन्यादिभिः कथ्यते इयमप्याशङ्का नावतरति ।

तच्च व्याकरणं नैकविधमासीत् । तथा चोक्तम् —

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् ।
सारस्वतञ्चापिशलं शाकलं पाणिनीयकम्[1] ॥

शिक्षोक्त्या नवविधम् । स्फोटायनम्, पौष्करसादिः, दौर्गम्, हैमम्, कातन्त्रम्, इत्यादीन्यपि अनेकानि व्याकरणानि । जैनव्याकरणानि च विचित्राणि उपलभ्यन्ते । सत्स्वेवान्येषु व्याकरणेषु अद्यत्वे पाणिनीयमेवाद्रियते । तदेव च वेदाङ्गतया मन्यते । अन्यत्र वैदिकानां लौकिकानाञ्च सर्वेषां व्युत्पादनाभावात्, अस्यैव वेदमूलकत्वाच्च ।

'अइउण्' सूत्रमुपक्रम्य ऋक् तन्त्रव्याकरणे उक्तं च—इदमक्षरच्छन्दोवर्णशः समनुक्रान्तम्, ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भारद्वाजाय, भारद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तं खल्विदमक्षरसमाम्नायमित्याचक्षते, न भुक्त्वा नक्तं ब्रूयाद् ब्रह्मराशिरिति वेदानां वेद इति श्रुतेरस्य वेदमूलकत्वम् ।

'कृते तु मानवा धर्माः त्रेतायां गौतमाः स्मृताः ।
द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः ॥ इति ।

व्यवस्थावद् इदानीं शब्दापशब्दनिर्णायकत्वं पाणिनीयव्याकरणस्यैव मन्यते । तदुक्तम्—

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् ।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन[2] ॥

'शताच्च ठन्यतावशते' इति सूत्रे कैयटोपि'शतप्रतिषेधेऽन्यशतत्वेऽप्रतिषेधः' इति भाष्यवार्त्तिकमुपादाय एवं सति शतं परिमाणमस्य शतको गोसङ्घ इत्यत्रापि प्रतिषेधो भवति आपिशलिकाशकृत्स्नयोस्तु अग्रन्थे इति वचनादन्यप्रतिषेधाभावः । नियतकालाश्च स्मृतयः व्यवस्थाहेतव इति मुनित्रयमतेनाद्यत्वे साधुत्वासाधुत्वविभागः । [3]पस्पशाह्निके भगवता-बृहस्पतिश्चप्रवक्तेत्यादिग्रन्थेन व्याकरणनिर्माणप्रकारमेकमुपपाद्य कथं तर्हि इमे शब्दाः प्रतिपत्तव्याः, इत्याशङ्क्य किञ्चित् सामान्यविशेषवल्लक्षणं प्रवर्त्यम् । येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन् इत्युक्तम् ।

एतेनेदम्प्रतीयते यत् पाणिनेः पूर्वतनानि व्याकरणानि नैवम्भूतानि, किन्तु श्रद्धावद्भिरनसूयद्भिः शिष्यैः कर्त्तव्यमिति बुद्ध्या पठ्यन्ते स्म । बहुकालव्ययसाध्यान्यासन् इति ।

---

१. प्रौ० मनोरमाभूमिका ।     २. पराशरोपपुराणम् ।     ३. नवा० म० भा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तादृशानि च सुकुमारबुद्धीनां दुरवगाहानि इति व्याकरणपरम्पराभ्रंशमाशङ्क्य भगवता पाणिनिना मन्दबुद्ध्यनुग्रहायोत्सर्गापवादरूपं लघुरूपं व्याकरणमाविष्कृतम् ।

एतदेव वाक्यपदीये[1]—

प्रायेण संक्षेपरुचीनल्पविद्यापरिग्रहान् ।
सम्प्राप्य वैयाकरणान् संग्रहेऽस्तमुपागते ॥
कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥ इति ।

अत्र चेत्थमाह पुण्यराजः—इह पुरा व्याड्युपरचितं ग्रन्थं लक्षपरिमाणं सङ्ग्रहाभिधानं निबन्धनमासीत्, तच्च कालवशात् सुकुमारबुद्धीन् वैयाकरणान् प्राप्यास्तमुपागतम्, तस्मात् क्लेशभीरुत्वात् संक्षेपरुचयस्ते जाताः । तैः सङ्ग्रहाध्ययने उपेक्षिते सति अस्तं यातः संग्रह इति । द्वितीयकाण्डविषयविवेचनवेलायामित्थमाह पुण्यराजः—

अवतारेऽपि भाष्यस्य सङ्ग्रहेऽस्तमुपागते ।
निबन्धहेतौ शास्त्रस्य टीकाकारेण कीर्तितः ।
संग्रहार्थाद्यनुगुणं रूपत्वं चोपपादितम् ॥ इति ।

एवञ्च सुकुमारबुद्धीन् अध्येतॄन् संप्राप्य ते ते व्याकरणागमास्तत्र तत्रावसरे शनैः शनैरस्तमुपयाता इति । तैस्तैराचार्यैः पुनः पुनः प्रकृतिमवस्थापितास्तद्रूपाणि भजन्ते । अत एव इन्द्रचन्द्रादयो व्याकरणकारा बहवः श्रूयन्ते । समय प्राबल्यात् पूर्वव्याकरणेष्वस्तमुपयातेषु साध्वसाधुत्वविषये विप्लवे सञ्जाते पाणिनीयमेतत्प्रवृत्तमिति समुचितमेव समुपपद्यते। तत्तद्दुपज्ञापकाचार्यैरेवालौकिकज्ञानशक्तिभिस्तत्तदर्थबोधनेन व्याकरणस्य शब्दानामर्थावबोधनायोपायान्तरानपेक्षणाद् अनवस्थादोषो नास्तीति शम् ।

---

१. वा० प० द्वि० का०–४८५ ।

● ● ●

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# व्याकरणागमसङ्ग्रहः

डॉ० शिवशङ्कर अवस्थी, शास्त्री, एम्० ए०, पी-एच्० डी०
संस्कृतविभागः—गोरखपुरविश्वविद्यालयः,

एषा चिरान्निबद्धा प्रसिद्धिरस्ति यद्वाक्यपदीयस्य कारिकाणां प्रणेता वृत्तेश्च कर्ता भगवान् भर्तृहरिरिति। वाक्यपदीयस्य द्वितीयकाण्डान्ते प्रस्तुता इतिहासपराः श्लोका दृश्यन्ते—

प्रायेण संक्षेपरुचीनल्पविद्यापरिग्रहान्।
सम्प्राप्य वैयाकरणान् संग्रहेऽस्तमुपागते॥
कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात्।
तस्मिन्नकृतबुद्धीनां नैवावस्थितनिश्चयः॥
वैजिसौभवहर्यक्षैः शुष्कतर्कानुसारिभिः।
आर्षे विप्लाविते ग्रन्थे संग्रहप्रतिकञ्चुके॥
यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः।
काले स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः॥
पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः।
स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः॥
न्यायप्रस्थानमार्गास्तानभ्यस्य स्वं च दर्शनम्।
प्रणीतो गुरुणास्माकमयमागमसङ्ग्रहः॥
वर्त्मनामत्र केषाञ्चिद्वस्तुमात्रमुदाहृतम्।
काण्डे तृतीये न्यक्षेण भविष्यति विचारणा॥
प्रज्ञा विवेकं लभते भिन्नैरागमदर्शनैः।
कियद्वा शक्यमुन्नेतुं स्वतर्कमनुधावता॥
तत्तदुत्प्रेक्षमाणानां पुराणैरागमैर्विना।
अनुपासितवृद्धानां विद्या नातिप्रसीदति॥

प्रतीयते यदिमे श्लोका न कारिकांशभूताः, अपि तु वृत्तिस्था एव, लिपिकरप्रमादात् कारिकासु सम्मिलिताः। केरलदेशादधिगता मलयालमलिप्यां लिखिता मध्ये मध्ये विच्छिन्ना द्वितीयकाण्डस्य वृत्तिर्देवनागर्यां परिणता मद्रासस्थप्राच्यहस्तलेखागारे विद्यते। अस्य हस्तलेखस्य संख्या डी० ५५४३ इत्यस्ति। तत्र सवृत्तिकवाक्यपदीयद्वितीयकाण्डान्ते 'प्रायेण संक्षेपरुचीन्' इत्यारभ्य 'प्रणीतो गुरुणाऽस्माकमयमागमसंग्रहः' इत्यन्तं सप्तैव कारिका विद्यन्ते। तद्ग्रन्थागारस्य वर्तमानाध्यक्षमहोदयेन प्रहितं पत्रं मत्सविधेऽस्ति, तत्र सूचितं यदेताः सप्त

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कारिका वृत्तिविरहिता एव सन्ति। एतेन ज्ञायते यदेताः कारिका वृत्त्यङ्गभूता एव, न कारिकांशरूपाः। अत एव च तदुपरि वृत्तिर्नास्ति।

मदीयं तु एतन्मतं यत् स्वोपज्ञोक्त्या प्रथिता वृत्तिर्भगवता भर्तृहरिणा रचिता, कारिकात्मकं मूलं तु भर्तृहर्युपाध्यायेन महावैयाकरणेन वसुरातगुरुणा प्रणीतम्। अत एव च द्वितीयकाण्डस्य वृत्त्यन्ते भगवान् भर्तृहरिः कथयति 'प्रणीतो गुरुणास्माकमयमागमसङ्ग्रहः'।

पुण्यराजाचार्यैः कृता अत्रत्या टीका विशेषतोऽस्मिन् विषये विवेचनामर्हति। 'प्रायेण संक्षेपरुचीन्' इति श्लोकस्यावतरणिकायामसौ कथयति— 'अथ महाभाष्यस्य अवतारान्वाख्यानपूर्वकं टीकाकारो महत्तामुपवर्णयन् स्वरचितस्य गुरुपूर्वक्रममभिधातुमाह'। अत्र टीकाकारपदे वर्तमानेन टीकाशब्देन महाभाष्यदीपिका टीकाऽवगन्तव्या, न तु वाक्यपदीयटीकेति पुण्यराजोऽभिप्रैति। यतोऽसौ द्वितीयकाण्डस्य षष्ठ्याः कारिकायाः स्वकीयव्याख्यायां लिखति[1]— 'तथा च टीकाकारः प्रदर्शयिष्यति—एकतिङ् यस्य वाक्यं तु.........।'

एतेनासौ कथयितुमीहते यत् कारिकाणां कर्ता भगवान् भर्तृहरिरिति।

किञ्च "अथ कदाचिद् योगतो विचार्य तत्रभवता वसुरातगुरुणा ममायमागमः संज्ञाय वात्सल्यात् प्रणीत इति स्वरचितस्यास्य ग्रन्थस्य गुरुपूर्वक्रममभिधातुमाह—'न्यायप्रस्थानमार्गांस्तान्' इति। अत्र पुण्यराजाचार्यः 'स्वरचितस्य ग्रन्थस्य' इति सन्दर्भेण कारिकाकर्तृत्वं भर्तृहरावेवारोपयति।

अन्यच्च 'प्रणीतो गुरुणास्माकमयमागमसङ्ग्रहः' इति ग्रन्थस्य टीकायां पुण्यराजाचार्यो विवृणोति—"अनेन गुरुणा संज्ञाय न तथा ममागमसङ्ग्रहः प्रणीतः, येन सन्देहो भवेदपि तु सावधानेनेत्युक्तं भवति। अस्माकमिति बहुवचनादन्येषामपि सहाध्यायिनां ग्रहणम्; अथवा मया तु तदनुच्छेदायायमुपनिबन्धः कृत इत्यात्मनो बहुमानः प्रकटितः"।

अपरञ्च द्वितीयकाण्डस्थमेयसमुच्चयश्लोकेषु पुण्यराजः सङ्गृह्णाति—

मूलभूतमवाप्याथ पर्वतादागमं स्वयम्।
आचार्यवसुरातेन न्यायमार्गान् विचिन्त्य सः॥
प्रणीतो विधिवच्चायं मम व्याकरणागमः।
मयापि गुरुनिर्दिष्टाद् भाष्यान्न्यायाविलुप्तये॥
काण्डत्रयक्रमेणायं निबन्धः परिकीर्तितः।
ग्रन्थकारेण ग्रन्थेऽस्मिन् स्वस्मिन् गुर्वागमः स्फुटम्॥

अत्र ममेति शब्दस्यासकृदुल्लेखात् 'स्वस्मिन् ग्रन्थेऽस्मिन्' इति वचनाच्च पुण्यराजोऽभिप्रैति यदि गुर्वागम उपनिबद्धो भर्तृहरिणा नेयं वसुरातस्य गुरोः कृतिरिति।

अनुमीयते यद् वाक्यपदीयस्य सवृत्तिकस्य यो हस्तलेखस्तदानीमस्य हस्ते निपतितस्तत्रागतानेतानितिहासपरान् श्लोकानसौ कारिकांशभूतानेवाजानात्। अत एवायमाचार्यो सर्वप्रथमं 'प्रणीतो गुरुणास्माकमयमागमसङ्ग्रहः' इति स्फुटस्य सन्दर्भस्य तथार्थमकरोत्।

पुण्यराजाचार्यो विक्रमस्य दशमशतके विद्यमान आसीदितीतिहासविदः। भगवतो भर्तृहरेश्च समयविषये श्रीसूर्यनारायणशुक्लाचार्या जयन्तभट्टस्य न्यायमञ्जर्या भूमिकायामित्थ-

1. वा० प० २।४५१।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

माहुः—'अभिधर्मकोशप्रणेता वसुबन्धुः ३२०–३३० ईसवीयाब्देषु (३७७–३८७ वैक्रमीयाब्देषु) भुवं शासतोऽयोध्याधीश्वरस्य प्रथमस्य गुप्तसम्राजश्चन्द्रगुप्तस्य तनूजन्मनश्चन्द्रप्रकाशस्य सचिव आसीत्' इति। तथा चोक्तं काव्यालङ्कारसूत्रे—

सोऽयं सम्प्रति चन्द्रगुप्ततनयश्चन्द्रप्रकाशो युवा।
जातो भूपतिराश्रयः कृतधियां दिष्ट्या कृतार्थश्रमः॥

आश्रयः कृतधियामित्यस्य 'वसुबन्धुसाचिव्याक्षेपपरत्वात्' इति वामनस्योद्धरणात् प्रतीयते इति वसुबन्धोः समयः २९० ईसवीयवर्षादारभ्य ३६० ईसवीयवर्षपर्यन्तं निश्चीयते। अस्मिन्नेव समये सङ्घभद्राख्यो बौद्धो वसुराताख्यो. महावैयाकरणश्च एतद्विरोधिनौ बभूवतुः इति।

किञ्च, चीनभाषायामनूदितेन वसुबन्धुजीवनवृत्तेन ज्ञायते यद्वसुबन्धुः वसुरातश्च समसामयिकावास्ताम्, तयोश्च शास्त्रार्थोऽभूदिति। वसुरातस्य गुरोः शिष्यो भर्तृहरिरपि वैक्रमीये चतुर्थशतकान्ते विद्यमान आसीत्, यतोऽधिकादत्यधिकं गुरुतः शिष्यस्य कनिष्ठता विंशतिवर्षाणामेव भवितुमर्हति[1]।

एवं षट्शताब्दानन्तरं टीकाकर्त्रा पुण्यराजेन वाक्यपदीयस्य यो हस्तलेखोऽधिगतस्तत्र तथोक्ता विपर्यस्तता सम्भाव्यते। यतो हि कारिकासु विवरणप्रणेत्रा भगवता भर्तृहरिणा द्वितीयकाण्डस्य ७६ तमकारिकाव्याख्याने उक्तम्—"तत्र द्वादश, षट्, चतुर्विंशतिर्वा लक्षणानीति लक्षणसमुद्देशे सापदेशं सविरोधं विस्तरेण व्याख्यास्यते"। एतेन निर्णेतुं शक्यते यत् तृतीयकाण्डेऽपि तत्रभवतो भर्तृहरेर्वृत्तिरासीत्[2]। किन्तु "तत्र षड्, द्वादश, चतुर्विंशतिर्वैतानि लक्षणानि तावदिह प्रदर्श्यन्ते। एतेषां च वितत्य सोपपत्तिकं सनिदर्शनं स्वरूपं पदकाण्डे लक्षणसमुद्देशे विनिर्दिष्टमिति ग्रन्थकृतैव स्ववृत्तौ प्रतिपादितम्।

आगमभ्रंशाल्लेखकप्रमादादिना वा लक्षणसमुद्देशश्च पदकाण्डमध्ये न प्रसिद्ध इति पुण्यराजवचसा—

काण्डद्वये यथावृत्ति सिद्धान्तार्थसतत्त्वतः।
प्रबन्धो विहितोऽस्माभिरागमार्थानुसारिभिः॥

इति हेलाराजोक्त्या च ज्ञायते यत्तदानीं भर्तृहरेस्सम्पूर्णा वृत्तिः, पूर्णश्च कारिकाग्रन्थो दुर्लभ एवाभूत्। तृतीयकाण्डस्य वृत्तिर्हेलाराजेन नासादिता। लक्षणसमुद्देशकारिकाश्च पुण्यराजेन नोपलब्धाः। एवं यदि तेन तदानीं वृत्तिस्था श्लोका कारिकांशतया संज्ञाय व्याख्याता भवेयुस्तर्हि तत्र का विचिकित्सा ?

---

१. सर्वदर्शनसङ्ग्रहस्य ग्रन्थकारसूच्यामनुमितो वसुबन्धोः कालोऽभ्यङ्करमहोदयेन २८०–३१० खृीष्टाब्दे निर्दिष्टोऽस्ति।

२. तृतीयकाण्डे भगवतो भर्तृहरेर्विवरणमासीदित्यत्रान्यान्यपि प्रमाणानि सन्ति यथा—
"कालस्यैव चोपाधिविशिष्टस्य परिमाणत्वात् कुतोऽस्यापरं परिमाणमित्येतत्कालसमुद्देशे व्याख्यास्यते"। —वा० प० वृत्तिकाण्ड। कारिका २४।
'सेयमपरिमाणविकल्पा बाधा विस्तरेण बाधासमुद्देशे समर्थयिष्यते' इति। काण्डः २, कारिका ७७ पुण्यराजव्याख्याने वृत्तिसन्दर्भः। इदानीं बाधासमुद्देशो नोपलभ्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्याकरणागमविद्वसुरात एव वाक्यपदीयकारिकाणां कर्त्तेत्यत्र द्रढीयः प्रमाणमिदानीं प्रस्तूयते । वैक्रमीये पञ्चमशतके विद्यमानेन जैनाचार्येण मल्लवादिसूरिणा स्वकीयस्य द्वादशारनयचक्रनामकग्रन्थस्य अष्टमे अरेऽभिजल्पस्वरूपस्य पूर्वपक्षस्य स्थापनायां भर्तृहर्यादि-मतमनूद्य तद्गुरोर्वसुरातस्य मतमित्थं निर्दिदेश 'वसुरातस्य भर्तृहर्युपाध्यायस्य मतं तु—स च स्वरूपानुगतार्थरूपमन्तरविभागेन सन्निवेशयति ।

अशक्तेः सर्वशक्तेर्वा शब्दैरेव प्रकल्पिता ।
एकस्यार्थस्य नियता क्रियादिपरिकल्पना ॥ (वा० प० २।१३३)

अत्र वसुरातमतोपन्यासे जैनाचार्येण वाक्यपदीयकारिकैवोपात्ता । भर्तृहरिप्रभृति-वैयाकरणानां मतं कारिकामुदाहृत्य तद्वृत्तिग्रन्थोपादानपूर्वकं निर्दिशति । यथा—'यदप्युच्येत स्त्रीपुंनपुंसकव्यक्तीनां विरुद्धानां पुष्यनक्षत्रतारार्थानामयुक्तमैकाधिकरण्यं पुनर्वसू नक्षत्रमित्यादि-संख्याविरोधादयुक्तेः, विज्ञानमपि तद्विषयमयुक्तम्, इत्यादिवचनखेदोऽयमकस्मात् क्रियते त्वया, अभिजल्पो हि शब्दार्थः, स च शब्द एव, न लिङ्गादिविचारखेदेनार्थोऽसद्विषयत्वात्, खपुष्पविषयविचारखेदवत्' इति ।

सोऽयमित्यभिसम्बन्धाद्रूपमेकीकृतं यदा ।
शब्दस्यार्थेन तं शब्दमभिजल्पं प्रचक्षते ॥
तयोरपृथगात्मत्वे रूढेरव्यभिचारिणि ।
किञ्चिदेव क्वचिद्रूपं प्राधान्येनावतिष्ठते ॥
लोकेऽर्थरूपतां शब्दः प्रतिपन्नः प्रवर्तते ।
शास्त्रे तूभयरूपत्वं प्रविभक्तं विवक्षया ॥ (वा० प० २।१२८-३०)

दर्शनोत्प्रेक्षाभ्यामर्थमभिधेयत्वेनोपगृह्य तत्र न्यग्भूतस्वशक्तिर्बुद्धौ परिप्लवमानोऽयमित्यमनेन शब्देनोच्यत इत्यान्तरो विज्ञानलक्षणः शब्दात्मा श्रुत्यन्तरस्य बाह्यस्य ध्वन्यात्मकस्य प्रवृत्तौ हेतुः, सोऽभिजल्पाभिधेयाकारपरिग्राही बाह्याच्छब्दादन्य इति भर्तृहर्यादिमतम्[1] ।

'दर्शनोत्प्रेक्षाभ्याम्'—इत्यत आरभ्य 'बाह्याच्छब्दादन्य' इत्यवधिको ग्रन्थो भगवद्-भर्तृहरिवृत्तितो गृहीत इति प्रतिभाति, यत एतदुपरि न्यायागमानुसारिण्याः टीकायाः कर्ता श्रीसिंहसूरगणिः ( वैक्रमसप्तमशतकस्थः ) लिखति—"कथमिति चेदुच्यते 'सोऽयमित्यभि-सम्बन्धात्' इति श्लोक......। तद्व्याख्या—दर्शनोत्प्रेक्षाभ्यामित्यादि[2] । अत्र 'तद्व्याख्या

१. ( द्वादशारनयचक्रे पृष्ठ ७७८-७७९ छाणी, बड़ोदा संस्करण ) ।

२. दर्शनोत्प्रेक्षाभ्यामित्यादि प्रघट्टकस्यार्थः

'प्रधानादिदर्शनेन पुरुषस्योत्प्रेक्षया वाऽर्थमभिधेयत्वेनोपगृह्य पूर्वोक्तचन्द्रादिवत् ( यथेन्द्रकश्चन्द्रक इतीन्द्रचन्द्राद्यप्रत्यक्षार्थानभिज्ञोऽपि इन्द्रचन्दशब्दरूपापन्नगोपालादिमर्थं प्रत्याययन् दृश्यते सोऽर्थेनैकीभूतः शब्द एवाभिजल्प इत्युच्यते ) साकारं तत्र न्यग्भूतस्व-शक्तिः—अस्वतन्त्रीकृताभिधानसामर्थ्यः बुद्धौ परिप्लवमानोऽयमित्थमनेन शब्देनोच्यत इत्यान्तरो विज्ञानलक्षणः शब्दात्मा बाह्यस्य ध्वन्यात्मकस्य प्रवृत्तौ हेतुः—उत्थापकः, सोभिजल्पाभिधेयाकारपरिग्राहो बाह्याच्छब्दादन्य इति भर्तृहर्यादिमतम्'—( इति श्री-सिंहसूरगणिः ! )

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शब्देन' भर्तृहरिकृता व्याख्यैवेत्यवधेयम्। श्रीसिंहसूरगणिरन्यत्र सर्वत्र 'एतमेवार्थं भाष्येण विवृणोति' इत्यादिना मल्लवादिनो व्याख्यानं भाष्यशब्देन वदति।

किञ्चाचार्यस्य मल्लवादिनः—"एवमेव च दर्शनोत्प्रेक्षाभ्यामित्यादिदर्शनानि शब्दाद् बहिरर्थसिद्धौ घटन्ते, इतरथा अभिजल्पार्थैक्ये तत्र किं दर्शनम्? का उत्प्रेक्षा?......कुतोऽभिजल्पः?"—इति सन्दर्भेण, 'तत्र किं दर्शनम्? नास्तीत्यर्थः, का उत्प्रेक्षा? इत्यादि तद्ग्रन्थानुसारेणासम्भवम्' इति सिंहसूरगणिनः 'तद्ग्रन्थानुसारेण' इति टीकया दर्शनोत्प्रेक्षाभ्यामित्यादि सन्दर्भः तत्र भवतो भर्तृहरेरेवेत्यनुसन्दध्महे।

अग्रे चाचार्यो मल्लवादी—"एतदुक्तं भवति अर्थविषयः शब्दः शब्दार्थकल्पनायां युक्ततरः स्यात्, (अर्थोत्थापितशब्दाभिजल्पस्वपक्षेऽभिजल्पशब्दार्थपरिकल्पना युक्ततरा स्यात् न्यायागमानुसारिणी टीका) न तु स्वतपरिकल्पिते शब्दप्रेरिते, एवं तावद् भर्तृहर्यादिदर्शनमयुक्तम्" इत्यादिना भर्तृहर्यादिमतमाक्षिपति।

अथ च 'यत्तु वसुरातो भर्तृहरेरुपाध्यायः, स च (अभिजल्पः) स्वरूपानुगतमर्थमविभागेन सन्निवेशयति, तेन द्वावपि शब्दोऽर्थश्चाभ्युपगताविति प्राच्यादत्यन्तादर्शनात्तैमिरिकदर्शनमिदं तत्त्वदृष्टिं प्रत्यासीदति, अभिजल्पस्वरूपं तु पुनस्तेनापि निरस्तम्'—इत्यादिना वसुरातमतमुपहसति।

अत्र मल्लवादी, द्वितीयकाण्डस्थां त्रुटितां (इदानीमप्राप्ताम्) वृत्तिमुद्धृत्य भर्तृहर्यादिमतमुदस्यति, वसुरातस्य च मतं कारिकामुदाहृत्य। एतेन स्फुटं ज्ञातुं शक्यते यत्कारिकाकारस्तत्रभवान् वसुरातो वृत्तिकारश्च तच्छिष्यः श्रीभर्तृहरिः। आदिशब्देनान्येऽपि वृत्तिकारा लक्षिताः। अथवा आगमभूतस्य कारिकाग्रन्थस्य श्रीवसुरातगुरुणा सङ्गृहीतस्य चिरात् प्रथिता विविधरूपा विवृतय आसन्, तानपि भगवान् भर्तृहरिः सङ्गृह्णाति—'अपर आह' 'अपरोऽर्थः' 'अपर आहुः' इत्यादिना। अत एव भर्तृहरिनामग्रहणपूर्वकमन्यानप्यादिपदेन निगृह्णाति मल्लवादी।

पुण्यराजाचार्योऽपि अस्मिन्विषये संशयान एवासीत्। अत एवायं 'प्रणीतो गुरुणास्माकमयमागमसंग्रहः' इति ग्रन्थस्यार्थद्वयं दर्शयति। यथा—

१. अनेन गुरुणा संज्ञाय न तथा ममागमसङ्ग्रहः प्रणीतः, येन सन्देहो भवेदपि तु सावधानेनेत्युक्तं भवति। अस्माकमिति बहुवचनादन्येषामपि सहाध्यायिनां ग्रहणम्।

२. अथवा मया तु तदनुच्छेदायायमुपनिबन्धः कृत इत्यात्मनो बहुमानः प्रकटितः।

एवमिदं निश्चीयते यत् कारिकाग्रन्थः 'व्याकरणागमसङ्ग्रहः' इति नाम्ना वसुरातगुरुणा प्रणीतः, तद्व्याख्यानं च वाक्यपदीयं नाम विवरणं भर्तृहरिणा निर्मितम्। पश्चाद्गते



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काले सर्वोऽपि ग्रन्थो वाक्यपदीयमित्याख्यया प्रथितोऽभूत् । वैक्रमसप्तमशतकप्रारम्भे वर्तमानेन पद्धतिकृता श्रीवृषभेण सर्वत्र कारिकाणां व्याख्यानं विवरणपदेनैवोक्तम्, न तु वृत्तिपदेन । यथा-

(क) कारिकोपन्यासफलं स्वयमेव विवरणे दर्शयिष्यति येषामित्यादिना ।

( पद्धतिः, वा० प० १।१३७ अथवा १४५)

(ख) यद्यपि सकृदुपात्तानादिनिधनश्रुतिः, तथापि कारिकाविवरणग्रन्थादवसीयते अर्थद्वयाङ्गीकरणेन शास्त्रकृतोपास्तेति - ( पद्धतिः वा० प० १।१ ) ।

एकत्र श्रीवृषभाचार्यः कारिकाव्याख्यानं भाष्यपदेनापि निर्दिशति । यथा—'तत्र श्लोकोपात्तं दृष्टान्तं विभज्य दार्ष्टान्तिकं भाष्ये विभजति वर्णपद इति' ( पद्धतिः, वा० प० श्लो० ८२ संस्करण ) ।

दशमकारिकागतस्य 'ज्ञानसंस्कारहेतवः' इति पदस्य वृत्तौ व्याख्यानद्वयं दर्शितम्। यथा—१. सम्यग्ज्ञानहेतवः पुरुषसंस्कारहेतवश्च । २. ज्ञानात्मकत्वाद्वा पुरुषस्यैव संस्कारहेतवः। अत्र श्रीवृषभाचार्यः कथयति—'वृत्तिव्याख्याता षष्ठीसमासमाह—ज्ञानात्मकत्वाद्वा इति। वृत्तिव्याख्यातृपदेनासौ किं निर्देष्टुमीहते इति गवेषणीयम्' इति ।

प्रथमोदाहरणे 'स्वयमेवेति' पदेन यद्यपि स्पष्टमेव ज्ञायते, यत्कारिकाकारो विवरणकारश्च—एक एव, तथापि 'प्रणीतो गुरुणास्माकमयमागमसङ्ग्रह' इत्यत्रोपात्तोऽयमिति शब्दो गुरुकर्तृत्वमेवास्य व्याकरणागमसङ्ग्रहस्य प्रमाणीकरोति, न प्ररोचनामात्रं प्रथयति । प्राचीनतमोऽयमाचार्यः श्रीवृषभो यः कारिकाकारं विवरणप्रणेतारं च एकमेव मनुते, तथापि तत्समये वाक्यपदीयस्य बह्वयष्टीका आसन्निति ।

यद्यपि टीका बह्वयः पूर्वाचार्यैः सुनिर्मला रचिताः ।
सन्तः परिश्रमज्ञास्तथापि चैनां गृहीष्यन्ति ।। ( पद्धतिः )

सन्दर्भेणासौ स्वीकरोति । इत्थं च वाक्यपदीयग्रन्थस्यात्यन्तप्राचीनतापि प्रकटी भवति। किञ्च 'गुरूपक्रमस्तु द्वितीये काण्डे स्वयमेव ग्रन्थकारो दर्शयिष्यति 'प्रायेण संक्षेपरुचीनित्यादिभिः श्लोकैः' इति कथनेनावसाययितुं पार्यते यत्प्रायेण संक्षेपरुचीनित्यारभ्य प्रणीतो गुरुणास्माकमयमागमसङ्ग्रह इत्यन्तो ग्रन्थस्तु तदानीमासीदेव ।

'वर्त्मनामत्र केषाञ्चिदित्यतः प्रक्रम्य विद्या नातिप्रसीदति' इति पर्यवसानग्रन्थ आसीन्नवेति निर्धारणे नास्ति गतिः । उपर्युक्तः प्रायेणेत्यादिसन्दर्भः कारिकास्थो विवरणस्थो वा श्रीवृषभाचार्यसमय आसीदिति विचारे कारिकास्थ एव प्रतिभाति, यतोऽसावाचार्यः स्फुटाक्षरपद्धतिप्रारम्भे वाक्यपदीयस्य सम्बन्धाभिधेयप्रयोजनानि निरूपयितुं कारिकाग्रन्थमेवोदाहरति । तत्रैव च प्रायेणेत्यादिसन्दर्भं संदृभ्णाति । किन्तु श्रीवृषभाचार्यादपि सार्द्धद्विशतवर्षप्राग्भवेन ( वीरवत्सरे ८८४, वैक्रमीये ४१४ शतके वर्तमानेन— द्रष्टव्यः—द्वादशारनयचक्रप्रथमभागस्य उपोद्घातः ) श्रीमल्लवादिसूरिणा वाक्यपदीयविवरणग्रन्थो भर्तृहर्यादिमतत्वेनोदाहृतः, कारिका च वसुरातमतत्वेनोपात्तेति ध्येयम् ।

यत्तु एम्० वियार्डो महोदयया फ्रेञ्चमहिलया कृतस्य सवृत्तिकवाक्यपदीयप्रथमकाण्डफ्रेञ्चानुवादस्य भूमिकायामुक्तं हरिवृषभो वृत्तिकारः, भर्तृहरिश्च कारिकाप्रणेतेति, तन्न, हरिशब्दस्य भर्तृहर्यर्थे रूढत्वात् । भगवता भर्तृहरिणा 'त्रिधा बद्धो वृषभो रोरवीति महो देवो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**मर्त्यां आविवेश'** इति श्रुतिमनुसन्धाय प्रचरिचतस्यागमस्य **'प्राहुर्महान्तवृषभं येन सायुज्य-मिष्यते'** इत्यस्य विवरणे यदुक्तमासीत् 'सर्वेश्वरः सर्वशक्तिर्महान् शब्दवृषभः, तस्मिन् खलु वाग्योगविदो विच्छिन्नाहङ्कारग्रन्थीनविनिर्भागेन संसृज्यन्ते' इति तदन्तःपाती शब्दब्रह्म-पर्यायभूतो वृषभशब्दः केनापि श्रद्धालुना लेखकेन हरिशब्देन सह योजितो हरिर्वृषभ इवेत्युपमित-समासधियेत्यवधारयितुं शक्यते। अथवा पद्धतिकृतो वृषभस्य नाम लिपिकरप्रमादादिना हरिशब्दे संयुक्तमभूत्। इदमेव हरिवृषभनाम्नो रहस्यम्।

यत्तु महिलयोक्तम्—कारिकाकारो विवर्तवादी नास्ति, किन्तु वृत्तिकारेण स तथात्व-मापादित इति तदपि न, कारिकाकारवृत्तिकारयोरेकमत एव समवस्थानात्। तथाहि परिणाम एव विवर्त इति द्वयोर्मतम्। परिणामो हि षोढा, किन्त्वत्र सुवर्णस्य कुण्डलकटकादिरूप एव परिणामोऽभिप्रेतः, नहि पयसो दधिरूपः। यथाह कारिकाकारः तृतीयकाण्डस्य साधन-समुद्देशे कर्त्रधिकारे १०५ पञ्चाधिकशततमकारिकायाम्—

**यथाहेः कुण्डलीभावो व्यग्राणां वा समग्रता।**
**तथैव जन्मरूपत्वं सतामेके प्रचक्षते[2]॥**

भगवान् भर्तृहरिश्च विवरणे (वृत्तौ) 'एकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणासत्य-विभक्तान्यरूपोपग्राहिता विवर्तः' इति विवर्तशब्दं व्याख्यत्। अस्मिन् विषये श्रृंगारप्रकाशे भोजराज आह—'कः पुनरयं विवर्तो नाम? उच्यते—एकस्य तत्त्वादप्रच्युतस्य सन्निवेश-विशेषादिभिरसत्यप्रविभक्तान्यरूपोपग्राहिता विवर्तः। तत्र यथा जलादयः कल्लोलादिरूपेण, सर्पादयः कुण्डलादिरूपेण, नीलादयश्चित्रादिरूपेण विवर्तन्ते, तथा शब्दतत्त्वविद्योपाधेस्तेन तेनार्थरूपेण तथा विवर्तते' (२२० पृष्ठे मैसोरसंस्करणे)।

भगवता शङ्कराचार्येण ब्रह्मसूत्रभाष्ये[3] परिणाम एव विवर्त इति कण्ठरवेण स्वीकृतः। यथा—'यत्तत्सुखदुःखमोहात्मक सामान्यं तत्त्रिगुणं प्रधानं मृद्वदचेतनं चेतनस्य पुरुषस्यार्थं साधयितुं स्वभावेनैव विचित्रेण विकारात्मना विवर्तते, इति।

**'वस्तुनः सन्निवेशविशेषेणावस्थानं विवर्तः'** इति भोजराजस्याशयः (श्रृंगारप्र०, ७ प्रकाशे, २२५ पृष्ठे)। वाक्यपदीयस्योक्तकारिकाव्याख्याने च हेलाराज आह—तत्र सतामेव तेषां जन्मार्थो विचार्यमाणोऽवतिष्ठते यदुत तथा तथा सन्निवेशमात्रम्। तद्यथा सर्पस्य कौटिल्यमनर्थान्तरभूतम्। पृथग्भूतानाञ्चाङ्गुल्यादीनां सङ्घातो मुष्ट्यादिः, इत्यवस्थाविशेष-मात्रसारः कार्यकारणभाव इत्यवस्थातुरभेदादवस्थास्वनुगमात् सत्त्वे जनिकर्तृतासिद्धिः।'

नागेशोऽप्याह—'तदुक्तं हरिणा—'अनादिनिधनं······'। आद्यश्लोके हरिग्रन्थेऽपि स्पष्टमेतत्—'तत्त्वादप्रच्युतस्य वस्तुनो भेदानुकारेण असत्याविभक्तान्यरूपोपग्राहिता विवर्तः स्वप्नविषयप्रतिभासवदित्यादिना। तत्त्वात्—स्वस्वरूपात्। असत्यं वस्तुनो बहिरसत्त्वात्।

---

१. यत्तु कैय्यनोक्तं रत्नत्रयाद् वाक्यपदीयवृत्तौ कतिपये श्लोका उदाहृता अतोऽष्टशतकानन्तर-भावी वृत्तिकारः कथनान्यो न भर्तृहरिरिति तदपि न, वृत्तित एव रत्नत्रये स्वायत्ती-कृत्योक्तश्लोकानां पठितत्वात्। यथा विद्यारण्यस्य पञ्चदश्यां नैष्कर्म्यसिद्धितः, भगवद्गीतात उपनिषद्भ्यश्च बहवः श्लोका आत्मसात्कृतास्तद्वदिहापि ज्ञेयम्।

२. वाक्यपदीयम्—३।७।१०७।  ३. ब्रह्मसूत्रभाष्यम्—२।२।१।१।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अविभक्तं तदधिष्ठानेन। अन्यद्—वैधर्म्योपलम्भात्। तादृशरूपोपग्राहिता तद्रूपप्रकारकज्ञान-विशेष्यता। तदाह—स्वप्नविषयेति। इति तद्व्याख्यातारः। पयसो दधि तु न विवर्तः तत्त्वात् प्रच्युते। स्वर्णादेः कुण्डलादि तु विवर्त एव' मञ्जूषायाम्। यद्धि बियार्डो महोदयया कारिकाकारानभिमतं वाग्रूपम्, वृत्तिकृताभ्युपगतं परवर्तिपरम्पराप्रभावेणेत्युक्तं तदविचार-रमणीयम्। द्वितीये काण्डे कारिकाकारेण स्वाभाविक्याः प्रतिभायाः स्वीकारात्। तथा च--

स्वभावचरणाभ्यासयोगादृष्टोपपादिताम्।
विशिष्टोपहितां चेति प्रतिभां षड्विधां विदुः ॥१५२॥

स्वभावाज्जातेति कारिकाकर्तुराशयः। अत आहुर्भर्तृहरिपादा विवरणे—'केचिदाचार्या मन्यन्ते काचित्स्वाभाविकी प्रतिभा। तद्यथा परस्याः प्रकृतेः प्रथमं सत्तालक्षणमात्मानं महान्तं प्रत्यानुगुण्यम्[1], सुषुप्तावस्थस्य प्रबोधानुगुण्यं फलसत्तामात्रं निद्रायाः'।

अत्र पराप्रकृतितः प्रतिभाया उन्मेष इति वदन् भर्तृहरिर्भगवान् नात्येति कारिका-कारमतम्।

किञ्च कारिकाकारेण कण्ठरवेण पराप्रकृतिः स्वीकृता।[2]तद्यथा—

विकारापगमे सत्यं सुवर्णं कुण्डले यथा।
विकारापगमे सत्यां तथाहुः प्रकृतिं पराम् ॥ १५ ॥
विद्या सा सर्वशब्दानां शब्दाश्च न पृथक्ततः ॥ १६ ॥
आत्मा परः प्रियो द्वेष्यो वक्ता वाच्यं प्रयोजनम्।
विरुद्धानि यथैकस्य स्वप्ने रूपाणि चेतसः ॥ १७ ॥
अजन्मनि तथा नित्ये पौर्वापर्यविवर्जिते।
तत्त्वे जन्मादिरूपत्वं विरुद्धमुपलभ्यते ॥ १८ ॥

चेतसोऽर्थात् स्वप्नविज्ञानपुरुषात्। तत्त्वे अनादिनिधने शब्दब्रह्मणि पराप्रकृता-वित्यर्थः। वैखरी इत्येका वाक्। मध्यमेति द्वितीया, पश्यन्ती प्रतिभेति प्रकृतिरित्यपरपर्याया तृतीया। एतावती एव व्यवहारनिपतिता वाक्। अतः परं व्यवहारातीतोऽर्थः[3]—'प्रणवः'

१. आनुगुण्यं कार्योत्पादनाभिमुख्यम्।—श्रीवृषभाचार्याः।
२. वाक्यपदीयम्—द्रव्यसमुद्देशः।
३. यथाह महाभाष्यदीपिकायां भर्तृहरिः—"द्रव्यं हि नित्यम्। नित्यः पृथिवीधातुः। पृथिवी धातौ किं सत्यम्? विकल्पः। विकल्पे किं सत्यम्? ज्ञानम्। ज्ञाने किं सत्यम्? ॐ। अथ तद्ब्रह्म। तदेतदुक्तं भवति। अतः परं शब्दार्थव्यवहारो निवर्तते। व्यवहारा-तीतोऽयमर्थ इति।

हेलाराजोऽप्येतदेवान्ववादीत्—

"रुचकस्वस्तिकस्वस्तिककुण्डलादयो विकाराः परस्परोपमर्देन भवन्तोऽस्थिर-प्रत्ययविषयाः सुवर्णमित्येव तु समन्वयिविज्ञानादवसेयं सत्यम्। एवमभेदान्तरविवक्षायां तेज इत्येव सत्यम्। तत्राप्यभेदस्तत्कारणमित्यन्त्या पराप्रकृतिः सत्या सर्वे विकारा-नुयायिनी प्रशान्तकल्लोला चिदेकघना ब्रह्मेत्यागमविदः। तदुक्तं—पृथिवीधातौ किं सत्यं विकल्पः। विकल्पे किं सत्यं विज्ञानम्, विज्ञाने किं सत्यम् ॐ, अथ तद्ब्रह्मेति। (वा० प० का० ३ कारिका ३२, जातिसमु० )

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति 'परा' इति पराप्रकृतिरिति वा तुरीया वाक् । यथा चाह भगवान् भर्तृहरिर्द्वितीयकाण्डस्य ऊनविंशतितमकारिकाविवरणे—उपाधिमतो ह्येकस्य शब्दस्य विभागा इवावस्थिताः संहितासंहितयोर्द्रुतमध्यविलम्बितासु वृत्तिषु शनैरुच्चैरुपांशु परमोपांशु संहृतक्रमं चेति ।

(१) तत्र प्राणवृत्त्यनुग्रहे सत्येव यत्र शब्दरूपं परैरसंवेद्यं भवति तदुपांशु ।

(२) अन्तरेण तु प्राणवृत्त्यनुग्रहं यत्र केवलमेव बुद्धौ समाविष्टरूपो बुद्ध्युपादान एव शब्दात्मा तत्परमोपांशु ।

(३) यत्र तु प्रतिसंहृतक्रमयोगया बुद्धया निमित्तान्तरोपरसम्प्राप्तमव्यक्ते शब्देऽध्यारोपितं हि शब्दानां क्रमरूपमिव साक्षात्क्रियते तत्प्रतिसंहृतक्रमम् ।

(४) शब्दानां क्रमरूपोपसंहारविषयायां बुद्धौ असम्प्रख्यातत्वमिव प्रतिपद्यमानायामारभ्यते शब्दातीतो व्यवहारः ।

शनैरुच्चैरुपांश्वित्यनेन वैखरी, परमोपांश्वेतेन मध्यमा प्रतिसंहृतक्रमेति पश्यन्ती, शब्दक्रमरूपोपसंहारविषयायां असम्प्रख्याततत्वमिवापन्नायां बुद्धौ परेति ध्येयम् । अथ चेन्मतं स्याद्वैखर्या मध्यमायाश्चेति कारिकायां तु त्रय्या एव वाचोऽभ्युपगमः, न तुरीयाया इति ? उच्यते व्यवहारिक्या एव त्रय्या वाचो व्याकरणशास्त्रं स्थानमिति मत्वा न तुरीयोपात्ता । विवरणकृता भर्तृहरिणा —"परं तु पश्यन्तीरूपमनपभ्रंशमसङ्कीर्णं लोकव्यवहारातीतम् । तस्या एव वाचो व्याकरणेन साधुत्वज्ञानलभ्येन वा शब्दपूर्वेण योगेनाधिगम इत्येकेषामागमः" इत्युक्तम् । अत्र एकेषामिति कथनेन ज्ञायते यत्केचन वैयाकरणा पश्यन्त्या रूपद्वयं मन्यन्ते स्म परमपरं चेति । अपरपश्यन्त्यवसानो हि व्याकरणशास्त्रव्यापारः न परपश्यन्तीं व्याप्नोति ।

अत एव चाह स्फुटाक्षरायां पद्धतौ श्रीवृषभाचार्यः—'व्यवहारातीतमिति । परिच्छेदादतिक्रान्तत्वात् । अत एव तत्र नास्ति व्याकरणव्यापारः' ।

इतिहासनिदर्शनेऽपि[1]—महाभारत आश्वमेधिके पर्वणि ब्राह्मणगीतासु—दिव्यादिव्यरूपेण पश्यन्त्येवोक्ता द्विविधा । अत आह श्रीवृषभः—दिव्यादिव्येनेति । तस्या हि पश्यन्त्या रूपे ।'

---

१. वृत्तौ 'पुनश्चाह' इति वचनेन भगवान् भर्तृहरिः महाभारतस्यैव 'स्थानेषु विवृते वायौ—इत्यारभ्य 'सूक्ष्मा वागनपायिनीत्यवसानं सन्दर्भमुदाहरति । वैक्रमदशमशतके विद्यमानेन जयन्तभट्टेन न्यायमञ्जर्यां प्रमाणप्रकरणेऽमीषां श्लोकानां त्रिविधवाक्परं व्याख्यानं कृतम् । तथा हि—'सा चेयं वाक् त्रैविध्येन व्यवस्थितैवावभासते' वैखरी, मध्यमा, पश्यन्तीति, तत्रेयं स्थानकरणप्रयत्नक्रमव्यज्यमानगकारादिवर्णसमुदायात्मिका या वाक् सा वैखरीत्युच्यते, विखर इति देहेन्द्रियसंघात उच्यते तत्र भवा वैखरी तदुक्तम्—स्थानेषु विवृते……। या पुनरन्तःसङ्कल्प्यमानक्रमवती श्रोत्रग्राह्यवर्णरूपाऽभिव्यक्तिरहिता वाक् सा मध्यमोच्यते । तदुक्तम्—'केवलं बुद्ध्युपादाना' या तु ग्राह्यभेदक्रमादिरहिता स्वप्रकाशसंविद्रूपा वाक् सा पश्यन्तीत्युच्यते, तदुक्तम्—

अविभागात्तु पश्यन्ती सर्वतः संहृतक्रमा ।
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ॥ इति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं भगवान् भर्तृहरिः प्राचीनमेव मतमत्र सङ्गृह्णाति इति कुतो मतवैषम्यं कारिकाकारतः ?

यच्च द्वितीयकाण्डस्थायाः[1]—

सम्बन्धे सति यत्त्वन्यदाधिक्यमुपजायते ।
वाक्यार्थमेव तं प्राहुरनेकपदसंश्रयम् ॥ इति ।

कारिकाया विवरणे 'अतश्च तत्र भवानाहेति उदाहरणे तत्र भवत्पदेन कारिकाकार एवोक्त इति, तदसङ्गतम् । अत्र तत्रभवत्पदेन महाभाष्यकारो भगवान् पतञ्जलिरुक्तः, अन्यथा विवरणकारः कारिकामेवोदाहरेत् । अन्ये तर्का आपातरमणीया विचारानर्हाः । इत्थं भर्तृहरिर्हरिवृषभश्च पृथग् व्यक्तीति मतमपास्तम् ।

वस्तुतः विवरणकारः ( वृत्तिकारः ) भगवान् भर्तृहरिः, कारिकाकारो महात्मा वसुरातस्तद्गुरुः । तत्र एव व्याकरणविद्यामधिगम्य हरिः, परम्परागतान् तांस्तानर्थान् कारिकाणां विवरणावसरे व्यावरीत्, अर्थविषये मतभेदांश्च समगृह्णात् । तत्र भवतो वसुरातस्य गुरुर्महायोगी चन्द्राचार्यश्चान्द्रव्याकरणप्रणेता महाभाष्योद्धर्ता च । भगवान् भर्तृहरिः— 'आत्मनामगुरोर्नामेत्यभियुक्तोक्तनीत्या स्वगुरोर्वसुरातस्य नाम न गृह्णाति किन्तु तद्गुरोश्चन्द्राचार्यस्योल्लेखं करोति । यथा—

पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः ।
स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः ॥

---

१. वाक्यपदीयम्—२।४२ ।

वैक्रमैकादशशतके वर्तमानो भोजराजः श्लोकानेतान् वाक्चतुष्टयपरतया विवृणोति शृङ्गारप्रकाशस्य नवमे प्रकाशे । यथा—"शब्दब्रह्मणश्चतस्रोऽवस्था, वैखरी, मध्यमा, पश्यन्ती सूक्ष्मेति । तत्र येयं स्थानकरणप्रयत्नक्रमव्यज्यमानगकारादिवर्णसमुदायात्मिका वाक्सा वैखरी । तत्र विशिष्टं खं सुखमिति दुःखमिति वा राति प्रयच्छतीति विखरो देहेन्द्रियसङ्घातः । तथा च श्रुतिः 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत्' इति तत्र भवा वैखरी । या पुनरन्तःसंजल्परूपा क्रमवती श्रोत्रग्राह्यवर्णाभिव्यक्तिरूपा सा मध्यमा । या तु वर्णविभागाभावादक्रमा स्वयम्प्रकाशा च सा पश्यन्ती । या पुनरनाद्यविद्यावासनोपप्लवमानशब्दार्थभेदरहितावबोधरूपब्रह्मशब्दवाच्या स्वरूपज्योतिरेवात्मनोऽन्तरनपाया प्रकाशते सा सूक्ष्मा । तदुक्तम्—'स्थानेषु विधृते— सूक्ष्मा वागनपायिनी श्रुतिरप्याह—

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥

तत्र गुहाशयेषु त्रिषु यदेतत् सूक्ष्मेति गीयते ते तदनाहतमित्यामनन्ति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आदिशब्देनात्र तत्रभवान् वसुरातः सङ्केतितः। कल्हणश्च राजतरङ्गिण्यामाह—

चन्द्राचार्यादिभिर्लब्ध्वादेशं तस्मात्तदागमम्।
प्रवर्तितं महाभाष्यं स्वं च व्याकरणं कृतम्॥

( –१ तरङ्गे, श्लोकः १७६ )

चन्द्राचार्यो ब्राह्मण आसीन्न बौद्धः। अयमेव चोपलब्धस्य चान्द्रव्याकरणस्य प्रणेता, बृहद्वृत्तेश्च निर्माता। इदानीं षष्ठाध्यायपर्यन्तमेव चान्द्रव्याकरणमुपलभ्यते। किन्तु ग्रन्थस्यास्यान्तःपरीक्षया ज्ञायते यदस्य सप्तमाध्याये वैदिकं प्रकरणमष्टमाध्याये च स्वरप्रकरणमासीत्। अस्य लघुवृत्तेः प्रारम्भेऽयं श्लोक उपलभ्यते—

सिद्धं प्रणम्य सर्वज्ञं सर्वीयं जगतो गुरुम्।
लघुविस्पष्टसम्पूर्णमुच्यते शब्दलक्षणम्॥

एतेनैव प्रमाणेन गड्डरिकाप्रवाहन्यायेन महायोगी[1] चन्द्राचार्यो बौद्धत्वमापादितः। भगवान् भर्तृहरिरपि चिरकालं यावदैतिहासिकधुरन्धरैः बौद्धत्वमानीत आसीत्। किन्त्वन्ते यथार्थता प्रकटितैव। उपर्युक्तश्लोके सिद्धशब्देन सर्वज्ञशब्देन[2] च यदि बुद्धोऽभिप्रेतस्तर्हि जैनमत आदितीर्थङ्करः कथं न? जैनमते सिद्धशब्दद्वारा आदितीर्थङ्करः सिद्धसर्वज्ञस्तथा च बौद्धमते सर्वार्थसिद्धः लक्षितो भवति। अतोऽयं श्लोकः सुतरां प्रमाणयति यच्चन्द्राचार्यो जैनो बौद्धश्चासीत्। किमिदं सङ्गतम्?

किञ्चात्र पठितो जगद्गुरुशब्दः सर्वमपि पर्याकुलीकरोति। अयं शब्दः सनातनधर्मिषु गुरुष्वेव रूढः। जगद्गुरुर्भगवान् कृष्णः, जगद्गुरुः शङ्कराचार्य इत्यादि। अपि चात्र जगद्गुरुशब्दः शब्दब्रह्मणो वाचकः, तथा चेत्थं श्लोकार्थोऽवधार्यः। सिद्धमिति। सिद्धं नित्यम्, मङ्गलार्थोऽयं सिद्धशब्द आदौ प्रयुक्तः। यथाह भगवान् पतञ्जलिः—"नित्यपर्यायवाची सिद्धशब्दः, माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते" इति। सर्वज्ञम्, यत्र ज्ञानं निरतिशयत्वमुपगच्छति स सर्वज्ञ ईश्वरः 'तत्र निरतिशयं सर्वज्ञबीज-

---

१. There are Variations Chandragomin Chandrayogin, Chandra, the dramatist in different person.

Chandragomin or Chandra was the Celebreted outhor of the grammatical Treatise चान्द्रव्याकरण, This treatise was used profusely by जयादित्य in काशिका. He was a Buddhist (?), वसुरात the preceptor of भर्तृहरि was his pupil. History of Classical Sanskrit Literature—p. 314. by M. Krishnamachorior.

२. आचार्यभासर्वज्ञविरचितायाः गणकारिकायाः प्रारम्भे तस्या रत्नटीकाया आदौ च लिखितमस्ति 'नमः सर्वज्ञाय'। किमेषोऽप्याचार्यः बौद्धः?

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मिति' योगशास्त्रोक्तेः, तम् । सर्वीयं सर्वस्मै हितम्, शब्दलक्षणं शब्दात्मानं प्रणवरूपम्, जगतो गुरुम् 'पूर्वेषामपि गुरुः कालेनानवच्छेदात्' इति योगानुशासनोक्तदिशा महेश्वरं प्रणम्य लघु-संक्षिप्तम्, विस्पष्टं सरलम्, सम्पूर्णमेतेनास्य ग्रन्थस्य वैदिकस्वरप्रकरणसमन्वितता लक्ष्यते। शब्दलक्षणं शब्दशास्त्रमित्यावृत्त्या व्याख्येयम् । उच्यते ।

अस्य ग्रन्थस्योपलब्धा लघ्वी वृत्तिः केनापि धर्मदासेन रचितेति 'श्रीमदाचार्यस्य धर्मदासस्य कृतिरियम् । शुभं भवतु । समाप्तं चेदं चान्द्रव्याकरणम्' इति पुष्पिकया ज्ञायते। पण्डितप्रवरः श्रीगुरुपदहालदारमहोदयेन स्वकीये 'व्याकरणदर्शनेर इतिहासे' बङ्गभाषामये धर्मदासविषये विस्तृतं विवेचनं कृतम् ।

धर्मदासश्चन्द्राचार्यस्य शिष्य आसीदित्यत्र प्रमाणाभावः,- किन्तु स चान्द्रवृत्तेः संक्षेप्ता अस्त्येवेत्यत्र नास्ति सन्देहलेशः ।

चान्द्रव्याकरणवृत्तिप्रारम्भे 'नमो वागीश्वराय' इति लेखोऽस्ति । क्षितीशचन्द्रचटर्जी-द्वारा सम्पादिते चान्द्रव्याकरणे वर्णसूत्रप्रारम्भे 'नमो मञ्जुघोषाय' इति जोधपुरसंस्करणगत-वर्णसूत्रप्रारम्भे 'नमो मृत्युजिते' इत्युल्लेखो वर्तते ।

किञ्चास्मिन्नेव संस्करणे उणादिप्रकरणप्रारम्भे 'नमो मञ्जुघोषाय' इत्युल्लेखोऽस्ति धातुपाठप्रकरणे नमो बुद्धायेति । एतेन निर्णेतुं शक्यते यद् बौद्धलिपिकरैरेव तत्र तत्र तथा तथा लिखितमिति नास्मिन्नितरां निर्बन्धः कार्यः ।

'उपज्ञोपक्रमं तदाद्यित्वे' ( २।२।६८ ) इति सूत्रवृत्तौ लिखितमस्ति 'पाणिन्युपज्ञ-मकालकं व्याकरणम् । चन्द्रोपज्ञमसंज्ञकं व्याकरणम् ।' एतेन वृत्तिकारः सूत्रकारादन्य इति सूचितो भवति । 'भ्रातुर्व्यत्' ( पा० २।४।६८ ) इति सूत्रवृत्तौ 'सपत्ने तु भ्रातृव्यशब्दस्या-द्युदात्तत्वं वक्ष्यति ।' अत्र 'वक्ष्यति' इति पाठेन भिन्नो वृत्तिकार इति लक्ष्यते । किञ्च स्वर-प्रकरणमपि चान्द्रव्याकरण आसीदित्यपि सूच्यते । अपि च 'ञिपो नेश्च' (१।१।१४५) इति सूत्रवृत्तौ 'स्वरविशेषमष्टमे वक्ष्यामः' इति लेखेन चान्द्रव्याकरणस्याष्टमाध्याये स्वरप्रकरण-मासीदिति सूचनोपलभ्यते । 'वक्ष्याम' इत्यनेन सूत्रकारो वृत्तिकारादभिन्न एवेति प्रतीयते। एतेन स्पष्टं भवति यच्चन्द्राचार्येण सूत्रेषु स्वोपज्ञा वृत्तिरपि सन्निवेशितासीत्, पश्चाद् धर्मदासेन तस्याः संक्षेपः कृतः ।

चन्द्राचार्यस्य वैदिकत्वसाधनाय कानिचिदुदाहरणान्यत्र वृत्तित उपन्यस्यन्ते—

१. दानीयो ब्राह्मणः—'तव्यानीयर्केलिमरः १।१।१०५।
२. गेयानि ब्राह्मणेन सामानि } 'यत्' १।१।१०७।
३. गेयो ब्राह्मणः साम्नाम् }
४. कथं तदेतज्ज्येष्ठाय पुत्राय पिता ब्रह्म ब्रूयात् प्रणाय्याय चान्तेवासिन इति ?
५. संकर्षणः । जनार्दनः । मधुसूदनः—१।१।१४०।
६. पूजार्हा ब्राह्मणी—१।२।३।
७. मन्त्रकारः । पदकारः । क्रमकारः ।१।१।७।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

८. कथं ब्रह्मवादी ? ब्रह्मणो वादः ब्रह्मवादः सोऽस्यास्तीति ब्रह्मवादी—१।२।५७।
९. ब्रह्मवित्—१।२।६४।
१०. द्विर्जातो द्विजः। ब्राह्मणजो धर्मः। क्षत्रियजं युद्धम् ।१।२।६५
११. दुःशासनः। दुर्योधनः—१।३।१०६
१२. भिक्षुको ब्राह्मणकुलमुपतिष्ठते उपतिष्ठतीति वा—१।५।६९।
१३. नयते पाणिनिर्व्याकरणे। पूजामधिगच्छतीत्यर्थः। नयते कात्यायनो व्याकरणे। प्रमेयं निश्चिनोतीत्यर्थः—१।४।८२।
१४. अन्वर्जुनं योद्धारः २।१।५८।
१५. अभिमन्युरर्जुनतः प्रति ।२।१।८३।
१६. ऋते पार्थम्। ऋते पार्थात्—२।१।८४।
१७. इह कस्मात्तृतीया न भवति—
'अर्जुनस्य तुला नास्ति केशवस्योपमा न च।'
नैतौ तुल्यार्थौ। किं तर्हि ? तुल्ययोगौपम्यार्थौ—२।१।९६।
१८. यावदमत्रं ब्राह्मणानामन्त्रयस्व—२।२।४।
१९. देवदेयं पुष्पम्। ब्राह्मणदेयं धनम् ।२।२।१६।
पूर्वाह्णे गेयं साम पूर्वाह्णगेयम्—
२०. विष्वक्सेनार्जुनौ। धनपतिरामकेशवाः।
युधिष्ठिरार्जुनौ। ब्राह्मणक्षत्रियवैश्यशूद्राः।
अर्जुनभीमसेनौ। वासुदेवार्जुनौ। तत्रापि नरनारायणौ इति दृश्यते व्यभिचारः २।२।४८।
२१—ब्रह्म प्रजापती। शिववैश्रवणौ। स्कन्दविशाखौ। ऋक्सामे—२।२।६६।

एवमेतादृक्षाण्येवोदाहरणानि सर्वत्रोपलभ्यन्ते। केवलमुणादिप्रकरणस्य प्रथमपादान्ते सूत्रद्वयमुपलभ्यते—९४ 'तारेः अन्'। तारा भगवती। ९५ 'जेः तुक् च'। जिनः भगवान् बुद्धः। एतावन्मात्रेणैव नास्य बौद्धत्वापादना सम्भवति। प्रक्षिप्तमिदं सूत्रद्वयं प्रतिभाति।

हेमचन्द्रस्य शिष्यः, कनकप्रभदेवेन्द्रस्य गुरुरुदयचन्द्रसूरिः, त्रयोदशेसवीयशतके मरुदेशस्य राज्ञोऽनूपसिंहस्याश्रये वर्तमान आसीत्। तेन निर्मिते हैमन्यासग्रन्थे बहुस्थलेषु चन्द्राचार्येण सहेन्द्रगामिनो नामेत्थं लिखितमुपलभ्यते—[1]'इन्द्रगोमिचन्द्रप्रभृतयः', 'चन्द्रेन्द्रगोमि-

---

१. गौरस्त्यस्येत्यस्मिन्नर्थे 'ज्योत्स्नातमिस्राशृङ्गिणोर्जस्वलगोमिन्मलीमसाः' पा० ५।२।११४। इति सूत्रेण निपातनाग्मिनिः।
'द्वौ गवीश्वरे गोमान् गोमीत्यमरः।'
'गोमिनामेव ते वत्सा नोद्यं स्कन्दितमार्षभम्।' इति मनुः ९।५८।
गौर्बीजमन्त्रमस्यास्तीति गोमी उपासक इति मेदिनी।
गौः कठोरध्वनिरस्त्यस्येति गोमी शृगाल इति मेदिनी।
बुद्धभिक्षुशिष्य इति त्रिकाण्डशेषः।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रभृतय' इत्यादि। एतेन निश्चेतुं शक्यते यदिन्द्रगोमिसाहचर्याच्चन्द्राचार्यश्चन्द्रगोमी सञ्जातः। वस्तुतोऽसौ चन्द्राचार्यो ब्राह्मणः।

चन्द्राचार्यस्य समये नागार्जुनो विद्यमान आसीदिति राजतरङ्गिण्यां कल्हणः—

चन्द्राचार्यादिभिर्लब्ध्वादेशं तस्मात्तदागमम्।
प्रवर्तितं महाभाष्यं स्वं च व्याकरणं कृतम्॥
तस्मिन्नवसरे बौद्धा देशे प्रबलतां गताः।
नागार्जुनेन सुधिया बोधिसत्त्वेन पालिताः॥
— प्रथमस्तरङ्गः।

अभिमन्योर्महाराजादादेशं लब्ध्वा चन्द्राचार्यादिभिः तदागमं महाभाष्यं च प्रवर्तितं स्वं व्याकरणं च कृतम्। भगवता भर्तृहरिणापि एवमेवाभ्यधायि। प्रस्तुतस्य चान्द्रव्याकरणस्य प्रणेता वृहद्वृत्तेश्च निर्माताऽयमेव चन्द्राचार्य इत्यत्र नास्ति सन्देहलेशः। अयं ब्राह्मणो न बौद्ध इति निश्वप्रचम्।

नागार्जुनस्यानुमितं कालमाधुनिकाः १५० ईसवीयमथवा २०७ वैक्रमीयमिति वदन्ति। अयमेव चन्द्राचार्यस्यापि समयः। चन्द्राचार्यस्य शिष्यो वसुराताचार्यो वसुरातस्य भर्तृहरिरिति। इयं कालानुमितिरसन्दिग्धा नास्ति, यतः पाश्चात्त्याः ७८ ईसवीयम् (१३५ वैक्रमीयवत्सरम्) कनिष्कस्य राज्ञो राज्यारोहणकालं मन्यन्ते, किन्तु राजतरङ्गिण्यां कल्हणाचार्यः कथयति यत्कनिष्कस्य शासनं कश्मीरेषु यदा प्रारभत ततः सार्धवर्षशतपूर्वं बुद्धदेवः परनिर्वाणं गतोऽभूत्। तद्यथा—

तदा भगवतः शाक्यसिंहस्य परनिर्वृतेः।
अस्मिन् महीलोकधातौ सार्धं वर्षशतं ह्यगात्॥१७२॥ (प्रथमस्तरङ्गः)

एवं बुद्धदेवमृत्युकाल ईसातः पूर्वं द्विसप्ततिवर्षे (७२) फलति, प्रादुर्भावकालश्च ७२+८०=१५२ ईसापूर्वम्। अत एव च रैप्सनमहोदयः स्वकीये [1]ग्रन्थे, वी० ए० स्मिथ महोदयश्चात्मनो ग्रन्थे[2] वुद्धस्य प्रादुर्भावकालं ईसापूर्वषष्ठशतकात्मकं कल्पनामूलकमिति वदति। अभिमन्योः कालविषये महान् मतभेदः दृश्यते। भारतीयकालगणनानुसारं तु बौद्धाचार्या ब्राह्मणाचार्याश्चैते विक्रमतः पूर्वमेव बभूवुः।

एवमित्थमन्ते समाकलयन्तु जिज्ञासवो यच्चान्द्रव्याकरणप्रणेता वृहद्वृत्तेश्च निर्माता चन्द्राचार्यो महावैयाकरणस्य वसुरातस्य गुरुः। तत्रभवान् वसुरातश्च भगवतो भर्तृहरेर्गुरुः। वसुरातगुरुणैव वाक्यपदीयकारिका व्याकरणागमसङ्ग्रहनाम्ना प्रणीताः। भर्तृहरिश्च वाक्यपदीयाख्यस्य विवरणस्य कर्ता। तदेव विवरणमद्यत्वे स्वोपज्ञा वृत्तिरिति जनैः कथ्यते।

१. Cambridge History of India, P. 171, Val I.
२. The Oxford Students Histry of India.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मद्रासनगरस्थे राजकीयहस्तलिखितग्रन्थागारे वर्तमानं, डी० ५५४३ संख्याङ्कितं यद्वाक्यपदीयमस्ति तस्य सवृत्तिके देवनागरलिपिमये द्वितीयकाण्डान्तेऽन्तिमांश इत्थमुपलभ्यते—

तथा द्विवचनेऽचीति तन्त्रोपायाविलक्षणः ।
एकशेषेण निर्देशो भाष्य एवोपवर्णितः ॥

तथा च वृत्तिः सह विवक्षाविषयलक्षणानुपातिनमेकशेषमन्तरेणापि भाष्ये द्विर्वचनेऽचीत्यत्र द्विर्वचनं च द्विर्वचनं चेति तन्त्रोच्चारणविषय एकशेषविकल्प एवोपन्यस्तः ।

प्रायेण संक्षेपरुचीनल्पविद्यापरिग्रहान् ।
सम्प्राप्य वैयाकरणान् संग्रहेऽस्तमुपागते ॥
कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ।
तस्मिन्नकृतबुद्धीनां नैवावस्थितनिश्चयः ॥
बैजिसौभवहर्यक्षैः शुष्कतर्कानुसारिभिः ।
आर्षे विप्लाविते ग्रन्थे संग्रहप्रतिकञ्चुके ॥
यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः ।
काले स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः ॥
पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः ।
स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः ।
न्यायप्रस्थानमार्गांस्तानभ्यस्य स्वं च दर्शनम् ।
प्रणीतो गुरुणास्माकमयमागमसंग्रहः ॥

हस्तलिखितग्रन्थे कुत्रापि श्लोकसंख्योट्टङ्कनं नास्ति । प्रायेणेत्यादिश्लोका वृत्त्यन्तःभागस्या एव तदुपरिवृत्तेरभावादित्यास्माकीना निर्णीतिः ।

• • •

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## 'विद्यावारिधि' [ पी-एच्० डी० ] इत्युपाधिप्राप्तये
### पञ्जीकृतानामनुसन्धातॄणां १९७० तमे ख्रीस्ताब्दे नामावलिः

| क्र० सं० | अनुसन्धाता | विषयः | छात्रवृत्तिः | निर्देशकः |
|---|---|---|---|---|
| १. | श्रीप्राणमोहनकुमारः | भट्टोजिदीक्षितनागेशभट्ट-योर्मतभेदविमर्शः (व्या०) | शिक्षामंत्रालयस्य | डॉ० भागीरथप्रसाद-त्रिपाठी 'वागीशः शास्त्री' |
| २. | ,, चन्द्रधरशुक्लः | पुराणेषु व्याकरणम् (व्या०) | | ,, |
| ३. | ,, रमाशंकरमिश्रः | महाभारते पाणिनीयानां प्रयोगाणां विमर्शः (व्या०) | | ,, |
| ४. | ,, भूपरामपाण्डेयः | धात्वर्थविषये वैयाकरण-भूषणसिद्धान्तमञ्जूषयोस्तुल-नात्मकमध्ययनम् (व्या०) | | |
| ५. | ,, मथुराप्रसाददीक्षितः | भाणरूपकसमीक्षा (सा०) | | ,, |
| ६. | ,, प्रभाकरद्विवेदी | उपग्रहसमीक्षा (ज्यो०) | शिक्षामंत्रालयस्य | श्रीभूपेन्द्रपतित्रिपाठी |
| ७. | ,, रमाशङ्करमिश्रः | हेमचंद्रकृत-शब्दानु-शासनस्य समीक्षात्मकम-ध्ययनम् (व्या०) | ,, | डॉ० कालिकाप्रसाद-शुक्लः |
| ८. | ,, पशुपतिनाथतिवारी | आधुनिक हिन्दी कहानी (१९६०–६९) का रीति-शास्त्रीय अध्ययन (भा०वि०) | | डॉ० विद्यानिवास-मिश्रः |
| ९. | ,, राममनोहरमिश्रः | वैयाकरणभूषणसारपरम-लघुमञ्जूषयोः सिद्धान्तानां समीक्षात्मकमध्ययनम् (व्या०) | शिक्षामंत्रालयस्य | श्रीमुरलीधरमिश्रः, |
| १०. | ,, अनिरुद्धप्रसाद-त्रिपाठी | पाणिनीयगणपाठ-पर्यालोचनम् (व्या०) | शिक्षामंत्रालयस्य | श्रीमुरलीधरमिश्रः |
| ११. | ,, नर्वदेश्वरतिवारी | शाब्दिकनये कालस्वरूप-पर्यालोचनम् (व्या०) | ,, | श्रीभूपेन्द्रपतित्रिपाठी |
| १२. | ,, श्रीनिवासशर्मा | भेलसंहितायाः सांस्कृतिक-मध्ययनम् (आयुर्वेदः) | वि० वि० | श्रीविश्वनाथद्विवेदी |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| क्र० सं० | अनुसन्धाता | विषयः | छात्रवृत्तिः | निर्देशकः |
|---|---|---|---|---|
| १३. | श्रीदेवनाथपाण्डेयः | महाभारते मुख्यरस-विवेचनम् (सा०) | | श्रीद्विजेन्द्रनाथमिश्रः |
| १४. | ,, नेवूलालयादवः | चारुदत्त-मृच्छकटिकयो-स्तुलनात्मकं साहित्यिकानु-शीलनम् (सा०) | | " |
| १५. | ,, सत्यानन्दपाण्डेयः | १९४०-१९७० ई० पर्यन्तानां वाराणसेय-संस्कृतकवीनां समीक्षणम् (सा०) | शिक्षामंत्रालयस्य | श्रीवटुकनाथशास्त्री खिस्ते |
| १६. | ,, विष्णुपदपण्डा | करुणस्य सर्वरसोपादान-त्वम् (सा०) | | " |
| १७. | ,, श्रीकान्तपाण्डेयः | व्याकरणशास्त्रदृष्ट्या सम्ब-न्धस्य रूपपर्यालोचनम् (व्या०) | | डॉ० रामप्रसाद-त्रिपाठी |
| १८. | ,, नारायणहरिशर्मा भट्टराई | संस्कृतकाव्यशास्त्रे एकरसवादः (सा०) | | श्रीद्विजेन्द्रनाथमिश्रः |
| १९. | ,, लालविहारीद्विवेदी | पुराणेषु वास्तुविद्याविवे-चनम् (मानचित्रसहितम्) (पु०) | | डॉ० श्रीकृष्णमणि-त्रिपाठी |
| २०. | ,, जगदीशप्रसादशुक्लः | शिलालेखादिषु प्राचीन-कामरूपस्य परिचयः (पु०) | | डॉ० अशोकशास्त्री |
| २१. | " देवनारायणमिश्रः | पौराणिकदृष्ट्या भारतीय-चित्रकलासिद्धान्तानां पर्यालोचनम् (पु०) | | " |
| २२. | ,, श्रीमती रत्नासेना | वैदिकसाहित्ये पुराणेषु च वामनावताराख्यानस्य क्रमिको विकासः (पु०) | | " |
| २३. | ,, रामावलम्बशास्त्री | पुराणेष्वायुर्वेदतत्त्वालोच-नम् (पु०) | | डॉ० श्रीकृष्णमणि-त्रिपाठी |
| २४. | ,, श्रीदुर्गाप्रसादो-पाध्यायः दवाड़ी | योगदर्शनकर्मसिद्धान्तस्य भारतीयदर्शनान्तरकर्म-सिद्धान्तेन सह तुलनात्मक-मध्ययनम् (यो० द०) | | डॉ० मुरलीधरपाण्डेयः |
| २५. | ,, नागेन्द्रपाण्डेयः | ज्योतिषे दिग्देशकालज्ञानम् (ज्यो०) | शिक्षामंत्रालयस्य यू० जी० सी० | श्रीअवधविहारी त्रिपाठी |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| क्र०सं० | अनुसन्धाता | विषयः | छात्रवृत्तिः | निर्देशकः |
|---|---|---|---|---|
| २६. | श्रीशुकदेवदासशास्त्री | दहरादिविद्यामीमांसा (वेदान्तः) | | डॉ० देवस्वरूपमिश्रः |
| २७. | ,, गयाप्रसादमिश्रः | वास्तुशास्त्रस्य सम्पादनम् (ज्यो०) | | श्रीअवधविहारी त्रिपाठी |
| २८. | " इन्दुनाथशर्मा | मुहूर्ततत्त्वस्य सटीकस्य सम्पादनम् (ज्यो०) | शिक्षामंत्रालयस्य यू० जी० सी० (१–७–७२) | श्रीअवधविहारी त्रिपाठी |
| २९. | " शिवजी उपाध्यायः | साहित्यान्तर्गतरस-सिद्धान्तसमीक्षा (सा०) | यू० जी० सी० | श्रीपट्टाभिरामशास्त्री |
| ३०. | " देवीप्रसादमिश्रः | भोजपुरी कृषिशब्दावली का व्युत्पत्तिपरक अध्ययन (भा० वि०) | | डॉ० विद्यानिवासमिश्रः |
| ३१. | " श्रीनिवासद्विवेदी | अमरुशतकस्य रीति-विज्ञानपरकमध्ययनम् (भा० वि०) | | " |
| ३२. | " रामनरेशसिंहः | वाराणसी नगर का भाषा-सर्वेक्षण (भा० वि०) | | " |
| ३३. | " सुशीलचन्द्रश्रीवास्तवः | संस्कृत और अंग्रेजी रीति-विज्ञान की पारिभाषिक शब्दावली का तुलनात्मक अध्ययन (भा. वि.) | | " |
| ३४. | " श्री के० टी० विश्वनाथः | हिन्दीशब्दावल्याः प्रयोगानुवृत्तेर्भाषावैज्ञानिकमध्ययनम् (भा० वि०) | | श्रीकरुणापतित्रिपाठी |
| ३५. | " विद्याधरमिश्रः | शब्दार्थयोस्तादात्म्य-समीक्षा (व्या०) | | डॉ० रामप्रसाद-त्रिपाठी |
| ३६. | " गायत्रीप्रसाद-पाण्डेयः | वाक्यवाक्यार्थसमीक्षणम् (व्या०) | यू० जी० सी० | श्रीमुरलीधरमिश्रः |
| ३७. | " सच्चिदानन्दशर्मा | समासादिपञ्चवृत्तिविमर्शः (व्या०) | शिक्षामंत्रालयस्य | श्रीभूपेन्द्रपतित्रिपाठी |
| ३८. | " बुद्धिसागरत्रिपाठी | संस्कृतदृश्यकाव्ये मालविकाग्निमित्रमालतीमाधवयोस्तुलनात्मकं विवेचनम् (सा०) | | श्रीद्विजेन्द्रनाथमिश्रः |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| क्र०सं० | अनुसन्धाता | विषयः | छात्रवृत्तिः | निर्देशकः |
|---|---|---|---|---|
| ३९. | श्रीविहारीलालशर्मा | काव्यप्रकाशस्य निर्देशन-साहित्यचूडाभाषाटीकयो-स्तुलनात्मकं पर्यालोचनम् (सा०) | | श्रीबटुकनाथशास्त्री खिस्ते |
| ४०. | " त्रिवेणीप्रसापाण्डेयः | नैषधमहाकाव्ये गुणीभूत-व्यङ्ग्यगवेषणम् (सा०) | | श्रीद्विजेन्द्रनाथमिश्रः |
| ४१. | " लोचनरामः | अलङ्कारसम्प्रदाये भट्टो-द्भटस्य स्थानम् (सा.) | | श्रीबटुकनाथशास्त्री खिस्ते |
| ४२. | " राजेन्द्रप्रताप-त्रिपाठी | १९०१–१९२० पर्यन्तानां वाराणसेयकवीनां पर्यवेक्ष-णम् (सा०) | | " |
| ४३. | " नारायणचन्द्र-गोस्वामी | दर्शनेष्वयथार्थज्ञानस्वरूपम् (न्या.) | | श्रीबदरीनाथशुक्लः |
| ४४. | " नारायणमिश्रः | भासर्वज्ञकृतन्यायसारस्य राघवभट्टकृतायाः न्याय-सारपदञ्जिकायाः टीकायाः सम्पादनम् (न्या०) | | श्रीसुरेन्द्रनाथद्विवेदी |
| ४५. | श्रीहरिवंशमिश्रः | पाणिनीयसूत्रानुसारेण भारतीयसमाजस्थितिः (व्या०) | | डॉ० रामप्रसाद-त्रिपाठी |
| ४६. | ,, रामयत्नशुक्लः | व्याकरणदर्शने सृष्टि-प्रक्रियाविमर्शः (व्या०) | | " |
| ४७. | ,, रामनारायण-चतुर्वेदी | पुराणेषु मीमांसा (मी०) | | श्री पट्टाभिरामशास्त्री |
| ४८. | ,, वृजरत्नदास। अग्रवालः | हिन्दी अंग्रेजी का विशेषणसंरचनाओं का व्यतिरेकी अध्ययन (भा० वि०) | | डॉ० विद्यानिवासमिश्रः |
| ४९. | ,, काशीनाथद्विवेदी | विप्रतिपन्नयास्कीयनिरुक्ति-परीक्षा | | डॉ० भागीरथप्रसाद-त्रिपाठी 'वागीशः शास्त्री' |
| ५०. | ,, आत्मप्रकाशयतिः | भामतीविमर्शः | | डॉ० देवस्वरूपमिश्रः |
| ५१. | ,, साधु-ब्रह्मानन्दः | वेदेष्वद्वैतस्थितिः (वेदा०) | | " |
| ५२. | ,, सर्वेश्वरदासः | श्रीमद्भगवद्गीताग्रन्थ-विमर्शः (वेदा०) | | डॉ० भागीरथप्रसाद त्रिपाठी 'वागीशः शास्त्री' |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| क्र०सं० | अनुसन्धाता | विषयः | छात्रवृत्तिः | निर्देशकः |
| --- | --- | --- | --- | --- |
| २६. | श्रीशुकदेवदासशास्त्री | दहरादिविद्यामीमांसा (वेदान्तः) | | डॉ० देवस्वरूपमिश्रः |
| २७. | ,, गयाप्रसादमिश्रः | वास्तुशास्त्रस्य सम्पादनम् (ज्यो०) | | श्रीअवधविहारी त्रिपाठी |
| २८. | " इन्दुनाथशर्मा | मुहूर्ततत्त्वस्य सटीकस्य सम्पादनम् (ज्यो०) | शिक्षामंत्रालयस्य यू० जी० सी० ( १–७–७२ ) | श्रीअवधविहारी त्रिपाठी |
| २९. | " शिवजी उपाध्यायः | साहित्यान्तर्गतरस-सिद्धान्तसमीक्षा (सा०) | यू० जी० सी० | श्रीपट्टाभिरामशास्त्री |
| ३०. | " देवीप्रसादमिश्रः | भोजपुरी कृषिशब्दावली का व्युत्पत्तिपरक अध्ययन (भा० वि०) | | डॉ० विद्यानिवासमिश्रः |
| ३१. | " श्रीनिवासद्विवेदी | अमरुशतकस्य रीति-विज्ञानपरकमध्ययनम् (भा० वि०) | | " |
| ३२. | " रामनरेशसिंहः | वाराणसी नगर का भाषा-सर्वेक्षण (भा० वि०) | | " |
| ३३. | " सुशीलचन्द्रश्रीवास्तवः | संस्कृत और अंग्रेजी रीति-विज्ञान की पारिभाषिक शब्दावली का तुलनात्मक अध्ययन (भा. वि.) | | " |
| ३४. | " श्री के० टी० विश्वनाथः | हिन्दीशब्दावल्याः प्रयोगानुवृत्तेर्भाषावैज्ञानिकमध्ययनम् (भा० वि०) | | श्रीकरुणापतित्रिपाठी |
| ३५. | " विद्याधरमिश्रः | शब्दार्थयोस्तादात्म्य-समीक्षा (व्या०) | | डॉ० रामप्रसाद-त्रिपाठी |
| ३६. | " गायत्रीप्रसाद-पाण्डेयः | वाक्यवाक्यार्थसमीक्षणम् (व्या०) | यू० जी० सी० | श्रीमुरलीधरमिश्रः |
| ३७. | " सच्चिदानन्दशर्मा | समासादिपञ्चवृत्तिविमर्शः (व्या०) | शिक्षामंत्रालयस्य | श्रीभूपेन्द्रपतित्रिपाठी |
| ३८. | " बुद्धिसागरत्रिपाठी | संस्कृतदृश्यकाव्ये मालविकाग्निमित्रमालतीमाधवयोस्तुलनात्मकं विवेचनम् (सा०) | | श्रीद्विजेन्द्रनाथमिश्रः |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| क्र०सं० | अनुसन्धाता | विषयः | छात्रवृत्तिः | निर्देशकः |
|---|---|---|---|---|
| ३९. | श्रीविहारीलालशर्मा | काव्यप्रकाशस्य निर्देशन-साहित्यचूडाभाषाटीकयोस्तुलनात्मकं पर्यालोचनम् (सा०) | | श्रीबटुकनाथशास्त्री खिस्ते |
| ४०. | " त्रिवेणीप्रसापाण्डेयः | नैषधमहाकाव्ये गुणीभूतव्यङ्ग्यगवेषणम् (सा०) | | श्रीद्विजेन्द्रनाथमिश्रः |
| ४१. | " लोचनरामः | अलङ्कारसम्प्रदाये भट्टोद्भटस्य स्थानम् (सा.) | | श्रीबटुकनाथशास्त्री खिस्ते |
| ४२. | " राजेन्द्रप्रताप-त्रिपाठी | १९०१–१९२० पर्यन्तानां वाराणसेयकवीनां पर्यवेक्षणम् (सा०) | | " |
| ४३. | " नारायणचन्द्र-गोस्वामी | दर्शनेष्वयथार्थज्ञानस्वरूपम् (न्या.) | | श्रीबदरीनाथशुक्लः |
| ४४. | " नारायणमिश्रः | भासर्वज्ञकृतन्यायसारस्य राघवभट्टकृतायाः न्यायसारपदञ्जिकायाः टीकायाः सम्पादनम् (न्या०) | | श्रीसुरेन्द्रनाथद्विवेदी |
| ४५. | श्रीहरिवंशमिश्रः | पाणिनीयसूत्रानुसारेण भारतीयसमाजस्थितिः (व्या०) | | डॉ० रामप्रसाद-त्रिपाठी |
| ४६. | ,, रामयत्नशुक्लः | व्याकरणदर्शने सृष्टिप्रक्रियाविमर्शः (व्या०) | | ,, |
| ४७. | ,, रामनारायण-चतुर्वेदी | पुराणेषु मीमांसा (मी०) | | श्री पट्टाभिरामशास्त्री |
| ४८. | ,, बृजरत्नदासः अग्रवालः | हिन्दी अंग्रेजी का विशेषणसंरचनाओं का व्यतिरेकी अध्ययन (भा० वि०) | | डॉ० विद्यानिवासमिश्रः |
| ४९. | ,, काशीनाथद्विवेदी | विप्रतिपन्नयास्कीयनिरुक्तिपरीक्षा | | डॉ० भागीरथप्रसाद-त्रिपाठी 'वागीशः शास्त्री' |
| ५०. | ,, आत्मप्रकाशयतिः | भामतीविमर्शः | | डॉ० देवस्वरूपमिश्रः |
| ५१. | ,, साधु-ब्रह्मानन्दः | वेदेष्वद्वैतस्थितिः (वेदा०) | | ,, |
| ५२. | ,, सर्वेश्वरदासः | श्रीमद्भगवद्गीताग्रन्थविमर्शः (वेदा०) | | डॉ० भागीरथप्रसाद त्रिपाठी 'वागीशः शास्त्री' |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| क्र०सं० | अनुसन्धाता | विषयः | छात्रवृत्तिः | निर्देशकः |
|---|---|---|---|---|
| ५३. | श्रीश्यामसुन्दरदासः | श्रीरामानन्दाचार्यं-स्तदीयग्रन्थसमीक्षा च (वेदा०) | | श्रीमुरलीधरमिश्रः |
| ५४. | ,, सिद्धिनन्दनमिश्रः | पारदस्य शास्त्रीयं प्रायोगिकं चाध्ययनम् (आयुर्वेदः) | | श्रीविश्वनाथद्विवेदी |
| ५५. | ,, त्रिलोकीनाथ-द्विवेदी | नलचम्प्वाः साहित्यशास्त्र-दृष्ट्या समीक्षात्मकम् अध्ययनम् (सा०) | | श्रीद्विजेन्द्रनाथमिश्रः |
| ५६. | ,, दामोदरशर्मा भारद्वाजः | अभिज्ञानशाकुन्तलस्य मनोवैज्ञानिकम् अध्ययनम् (सा०) | | ,, |
| ५७. | ,, हरिहरदत्तद्विवेदी | मार्कण्डेयपुराणे सटीकस्य सप्तशतीभागस्य समीक्षा-त्मकम् अध्ययनम् (पु०) | | डॉ० श्रीकृष्णमणि-त्रिपाठी |
| ५८. | ,, टशीपलजोरः | युक्तिषष्ठिकाशून्यतासप्त-तितो भोटागमीयटीका-दृष्ट्या आचार्यनागार्जुन-दर्शन समीक्षणम् | | श्रीरमाशङ्करत्रिपाठी |
| ५९. | ,, पं० सीताराम-हेब्बारः | ऋग्वेदे अद्वैतसिद्धान्तानां समीक्षणम् (वेदा०) | | डॉ० एच० वी० मल्लादिबालसुब्रह्मण्यम् के० सं० वि० तिरुपति |
| ६०. | कु० शान्तीदेवी | बाणसाहित्ये नारीपात्राणि (सा०) | | श्रीद्विजेन्द्रनाथमिश्रः |
| ६१. | त्रिवेणीप्रसाददीक्षितः | शैली विज्ञान की दृष्टि से पद्मावत और रामचरित मानस का तुलनात्मक अध्ययन (भा० वि०) | | डॉ० विद्यानिवास-मिश्रः |
| ६३. | श्रीवासुदेव शास्त्री (प्राप्तोपाधिः) | विशिष्टो रसवादः (सा०) | | श्री बटुकनाथशास्त्री खिस्ते |
| ६४. | ,, पी० के० गोपाल-कृष्णन् | ज्ञापकसिद्धवचनानां परीक्षात्मकमध्ययनम् (व्या०) | | श्री एन्०एस्० रामा-नुजताताचार्यः |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| क्र०सं० | अनुसन्धाता | विषयः | छात्रवृत्तिः | निर्देशकः |
|---|---|---|---|---|
| ६५. | श्रीजगदीशप्रसादशुक्लः | शिलालेखादिषु प्राचीनकामरूपस्य परिचयः (पु०) | | डॉ० अशोक शास्त्री |
| ६६. ,, | रामकैलाशपाण्डेयः | आयुर्वेदे शारीरविमर्शः (आयुर्वेदः) | | पं० विश्वनाथद्विवेदी |
| ६७. ,, | सुधीरनारायणठाकुरः | प्रौढमनोरमा–शब्दरत्नयोर्विचारभेदानां युक्तायुक्तत्वसमीक्षा (व्या०) | शिक्षामंत्रालयस्य | डॉ० भागीरथप्रसाद त्रिपाठी 'वागीशः शास्त्री' |
| ६८. ,, | रामचन्द्रदासश्रीवैष्णवः | लघुमञ्जूषोपन्यस्तसिद्धान्तानां पर्यालोचनम् (व्या०) | | डॉ० श्रीरामपाण्डेयः |
| ६९. ,, | के० इ० गोविन्दन् | पदार्थमालाया वैज्ञानिकं समीक्षात्मकं च सम्पादनम् (न्या० वै०) | | पं० एन्० एस्० रामानुजताताचार्यः |
| ७०. ,, | अयोध्यादासः | समासशक्तिसमीक्षा (व्या०) | शिक्षामंत्रालयस्य | डॉ० कालिकाप्रसादशुक्लः |
| ७१. ,, | रामाज्ञाप्रसादमिश्रः | तद्धितप्रत्ययार्थविमर्शः (व्या०) | | श्रीमुरलीधरमिश्रः |
| ७२. ,, | दयारामशुक्लः | धातूपसर्गसमीक्षा (व्या०) | | डॉ० रामप्रसादत्रिपाठी |
| ७३. ,, | रामदेवझाः | ज्यौतिष-पुराणयोर्दृष्ट्या ग्रहाणामध्ययनम् (ज्यो०) | | डॉ० मण्डनमिश्रः |
| ७४. ,, | शारदानिवासशास्त्री | तत्त्वादिभावानां वैज्ञानिकं विश्लेषणम् (ज्यो०) | | ,, |
| ७५. ,, | बनवारीलालपाठकः | भारतीयज्योतिषे रमलसाहित्यम् (ज्यो०) | | पं० विश्वनाथझाः |
| ७६. ,, | रामप्रकाशदासः | भाट्ट-प्राभाकरप्रस्थानयोः प्रमाणप्रमेयविमर्शः (मी०) | | पं० एस्० सुब्रह्मण्यशास्त्री |
| ७७. ,, | रामसुभग ओझाः | उत्तररामचरित-कुन्दमालयोस्तुलनात्मको विचारः (सा०) | | पं० पी० एन्० पट्टाभिरामशास्त्री |



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| क्र०सं० | अनुसन्धाता | विषय | छात्रवृत्ति | निर्देशक |
|---|---|---|---|---|
| ७८. | श्रीसूर्यनारायणझाः | कवीन्द्रगङ्गानन्दस्य रचनानां समालोचनात्मकमध्ययनम् (सा०) | | श्रीअमीरचन्द्रशास्त्री |
| ७९. | " हरिकृष्णभारद्वाजः | सुबन्धुबाणयोरलङ्कारप्रयोगपरिपाटीपर्यालोचनप्रधानगद्यशैल्यामध्ययनम् (सा०) | | डॉ० रुद्रदेवत्रिपाठी |
| ८० | " जयप्रसादबालोथीः | कालिदासकृतीनां रसालङ्कारदृष्ट्याऽनुशीलनम् (सा०) | | " |
| ८१. | " रामप्रसादमिश्रः | औचित्यविचारचर्चाया अनुशीलनात्मकमध्ययनम् (सा०) | | पं० पी० एन्० पट्टाभिरामशास्त्री |
| ८२. | " राजकुमारद्विवेदी | पञ्चमहाकाव्यानां भारतीयसामाजिकव्यवस्थादृष्ट्या मूल्याङ्कनम् (सा.) | | श्रीद्विजेन्द्रनाथमिश्रः |
| ८३. | " रामसूरतपाण्डेयः | "अवधी लोकगीतों में सादृश्यविधान" अर्थविज्ञानपरक अध्ययन (भा० वि०) | | डॉ० विद्यानिवासमिश्रः |
| ८४. | " शिवलालपाठकः | आधुनिक हिन्दी तथा तिब्बती भाषाओं की वर्णसंघटना का व्यतिरेकी विश्लेषण (भा० वि०) | | " |
| ८५. | " शिवशङ्करसिंहः | हिन्दी के विभिन्न स्तरों का भाषाशास्त्रीय अध्ययन (भा० वि०) | | " |
| ८६. | कु० बालचन्द्रिकापाठकः | १७वीं १८वीं शती के ब्रजपद साहित्य का रीतिविज्ञानपरक अध्ययन | | " |
| ८७. | " कमलाद्विवेदी | अज्ञेय की काव्यभाषा का रीतिविज्ञानपरक अध्ययन (भा० वि०) | | " |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| क्र०सं० | अनुसन्धाता | विषयः | छात्रवृत्तिः | निर्देशकः |
|---|---|---|---|---|
| ८८. | श्रीप्रभाकरदत्ततिवारी | आधुनिक हिन्दी एवं संस्कृत में कतिपय उपसर्गों का अर्थविज्ञान की दृष्टि से तुलनात्मक अध्ययन (भा० वि०) | | पं० करुणापतित्रिपाठी |
| ९९. | ,, तेजप्रतापसिंहः | हिन्दी के तद्भव, तत्सम शब्दों के पर्याययुग्मों का अर्थपरक विज्ञानविषयक अध्ययन (भा० वि०) | | ,, |

● ○ ●

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# वाचस्पति [ डी० लिट्० ] इत्युपाधिलाभाय

## पञ्जीकृतानाम् अनुसन्धातॄणां १९७१–७६ ख्रीस्ताब्देषु नामावलिः

| क्र० सं० अनुसन्धाता | विषयः | छात्रवृत्तिः | निर्देशकः | पञ्जीकरणवत्सरः |
|---|---|---|---|---|
| १. कु० पुष्पावती | वैदिकतान्त्रिकसाधना-प्रणालीषु योगः (यो०त०) | | श्रीव्रजवल्लभ-द्विवेदी | १९७१ |
| २. स्वामीरामपालसिंहः | गुरुग्रन्थसिद्धान्तानां निगमागमयोः समन्वयः (सर्वद०) | | डॉ० रामप्रसाद-त्रिपाठी | " |
| ३. श्रीरामनारायण-दासः | ध्वनितत्त्वविमर्शः (व्या०) | जू० फेलोशिप् | श्रीभूपेन्द्रपतित्रिपाठी | १९७२ |
| ४. देवर्षिसनाढ्यः | रामचरितमानस के विषयों का रीतिविज्ञान-परक अध्ययन (भा०वि०) | | डॉ० विद्यानिवास-मिश्रः | " |
| ५. डॉ० परमहंसमिश्रः | अद्वैतदृष्ट्या प्रत्यभिज्ञा-दर्शनस्य समीक्षणात्मकं विवेचनम् (सर्वद०) | | डॉ० रामप्रसाद-त्रिपाठी | " |
| ६. डॉ० कन्हैयापाण्डेयः | द्वयाश्रयकाव्यपरम्परा-पर्यालोचनम् (सा०) | | डॉ० भागीरथप्रसाद त्रिपाठी 'वागीशः शास्त्री' | १९७३ |
| ७. श्रीमती लक्ष्मीदेवी शर्मा अय्यरः | वाल्मीकिरामायणयोः समीक्षात्मकमध्ययनम्(पु०) | | " | " |
| ८. श्रीजगदीशप्रसाद-मिश्रः | प्रयोगरत्नमाला-व्याकरणसमीक्षा (व्या०) | | डॉ० रघुनाथशर्मा | १९७४ |
| ९. डॉ० श्रीहरिश्चन्द्र-मणित्रिपाठी | सर्वनामशब्दानाम् ऐतिहासिकं व्युत्पत्तिमूलकञ्च प्रत्यभिज्ञानम् (व्या०) | | डॉ० कालिकाप्रसाद-शुक्लः | " |
| १०. " नन्दनन्दनझाः | मैथिली कृषिशब्दावली का भाषावैज्ञानिक अध्ययन (भा० वि०) | | डॉ० विद्यानिवास मिश्रः | १९७५ |
| ११. " हरिनारायण-मिश्रः | निराला की काव्यभाषा-एक रचनाकार के शैली वैविध्य का भाषावैज्ञानिक अध्ययन (भा०वि०) | | " | " |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| क्र०सं० | अनुसन्धाता | विषयः | छात्रवृत्तिः | निर्देशकः | पञ्जीकरणवत्सरः |
|---|---|---|---|---|---|
| १२. | श्रीअमरनाथपाण्डेयः | संस्कृत मुक्तककाव्यों का ब्रजभाषामुक्तक काव्यों पर रीतिवैज्ञानिक प्रभाव (भा०वि०) | | डॉ० विद्यानिवास-मिश्रः | १९७५ |
| १३. | " रघुवंशमणि-पाठकः | सर्वनाम के द्वारा रीति-वैज्ञानिक सार्थकता की खोज (भा० वि०) | | | " |
| १४. | " उमाकांत-त्रिपाठी | भारतीय साहित्य में रीतिविज्ञानपरक दृष्टि एक विवेचनात्मक अध्ययन (भा० वि०) | | | " |
| १५. | डॉ० शिवनारा-यणशर्मा | वैदिकवाङ्मय में भाषा चिन्तन (भा०वि०) | | " | १९७५ |
| १६. | डॉ० सदानन्द दुबे | भोजपुरी में संस्कृत एवं संस्कृतेतरमूलक शब्दों के व्युत्पत्ति की समस्याएँ (भा०वि०) | | " | |
| १७. | डॉ० त्रिभुवननारा-यणसिंहः | भाषा एवं वाक्सम्बन्धी भारतीय भाषाशास्त्रीय चिन्तन का आधुनिक भाषा वैज्ञानिक दृष्टि में पुनर्मूल्याङ्कन (भा०वि०) | | " | १९७५ |
| १८. | एन० एच० चन्द्र-शेखरस्वामी | आगमदृशा वचनसाहित्यस्य अध्ययनम् (आगमः) | | डॉ० भगीरथ प्रसाद त्रिपाठी 'वागीशः शास्त्री' | १९७५ |
| १९. | डॉ० देवस्वरूपमिश्रः | अद्वैतसिद्धिसर्वस्वम् (प्रथमपरिच्छेदान्तम्) (वेदा०) | | डॉ० रघुनाथशर्मा | १९७५ |
| २०. | श्रीरविनाथमिश्रः | पालि में व्युत्पत्ति की समस्याओं का ऐतिहासिक भाषाविज्ञान की दृष्टि से अध्ययन(भा०वि०) | | डॉ० विद्यानिवास मिश्रः | १९७५ |
| २१. | डॉ० कालिका-प्रसादशुक्लः | वैयाकरणानामन्येषां च मतेन शब्दस्वरूप-तच्छक्तिविचारः (व्या०) | | पं० भूपेन्द्रपति-त्रिपाठी | १९७५ |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| क्र०सं० | अनुसन्धाता | विषयः | छात्रवृत्तिः | निर्देशकः | पञ्जीकरणवत्सरः |
|---|---|---|---|---|---|
| २२. | श्रीसुधीरनारायण-ठाकुरः | काशिका-पदमञ्जर्योः परस्परविरुद्धस्थलानां समीक्षा (व्या०) | | डॉ० भगीरथप्रसाद त्रिपाठी | १९७५ |
| २३. | श्री ब्रह्मानन्दपाण्डेयः | आधुनिकरीतिविज्ञान परिप्रेक्षा से वक्रोक्ति, औचित्यसिद्धान्त और ध्वनिसिद्धान्त का अध्ययन (भा० वि०) | | डॉ० विद्यानिवास-मिश्रः | १९७५ |
| २४. | श्रीअचरजमिश्र। | मानक हिन्दी व्याकरण के विभिन्न प्रतिमानों का विवेचनात्मक अध्ययन (भा० वि०) | | " | १९७६ |
| २५. | श्रीमती अरुणादूबे | रीतिकालीन अलङ्कार-शास्त्र के प्रमुख ग्रन्थों का आधुनिक रीतिविज्ञान की दृष्टि से अध्ययन (भा०वि०) | | " | |
| २६. | डॉ० सोहंप्रकाशः | पातञ्जलयोगसूत्रस्य व्याख्याकाराणां दृष्ट्या चित्तवृत्तिसमीक्षा (दर्शनम्) | | डॉ० रामप्रसाद-त्रिपाठी | १९७६ |
| २७. | डॉ० गिरीशस्वरूप-ब्रह्मचारी | वेदान्तसिद्धान्तप्रस्थान-भेदसमीक्षा (वेदान्तः) | | डॉ० देवस्वरूप-मिश्रः | १९७६ |
| २८. | ,, हरिप्रसादसिंहः | भोजपुरी लोककथा और लोकगीत का रीति-वैज्ञानिक अध्ययन (भा० वि०) | | डॉ० विद्यानिवास-मिश्रः | १९७६ |
| २९. | श्रीकेदारनाथ-त्रिपाठी | ब्रह्मसूत्रविज्ञानामृत-भाष्यस्य शाङ्करीयशारीरिकभाष्येण सह तुलनात्मकमीक्षणम् (वेदा०) | | डॉ० रघुनाथशर्मा | १९७६ |

[ क्रमशः ]

● ● ●

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लघुग्रन्थमाला-२१

पण्डितरघुनाथशर्मविरचितः

# सन्ततिस्तवः




सम्पादकः

प० रघुनाथशर्मा

वेदान्तविभागाध्यक्षचरः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वै० सं० २०३४

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## विषयानुक्रमणी





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# भूमिका

अयं खलु सन्ततिस्तवोऽतिनिर्विण्णमनसा मया देवीभागवतमाधारीकृत्य विनिर्मितः। मन्येऽस्मिन् सर्वासां शक्तीनां पारेसहस्र मुपजीव्य नामानि स्वरूपाणि चरितानि च निबद्धानि। स्तुत्यस्य स्वरूपचरितवर्णनं हि नाम स्तोत्रमुच्यते। अस्मिँश्च छन्दोऽनुरोधात् क्वचित् क्वचित् स्खलितानीव लक्ष्यन्ते। तद्यथा—क्वचिदक्षरच्युतिः, क्वचिन्मात्राच्युतिः, क्वचिद् बिन्दुच्युतिः, क्वचिदधिकाक्षरनिवेशः, क्वचिदर्थगूहनम् इत्यादि, तत्तु प्रहेलिकामवगत्य पाठ्यम्। इदञ्च जयदेववाक्यमत्र स्मर्तव्यम्—

नात्रातीव प्रकर्तव्यं दोषदृष्टिपरं मनः।
दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते॥ इति।

इदञ्च दीधितिकृद्वाक्यम्—

मान्यान् प्रणम्य विहिताञ्जलिरेष भूयो
भूयो विधाय विनयं विनिवेदयामि।
दूष्यं वचो मम बुधैर्निपुणं विभाव्य
भावावबोधविहितो न दुनोति दोषः॥ इति।

इदञ्च श्रीहर्षवाक्यम्—

ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया
प्राज्ञं मन्यमनाहठेन पठितोमाऽस्मिन् खलः खेलतु।
श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय-
स्त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः॥ इति।

अत्र च तन्त्रग्रन्थेष्विव बीजानि विगूहितानि। अस्य ग्रन्थस्य प्रतिपद्यं व्याख्यासापेक्षत्वेऽपि वाक्यपदीयव्याख्याव्यस्ततया व्याख्यानं न कृतम्। सति मातुः कारुण्ये कदाचित् करिष्यते। मम तु मातुराराधनं द्वादशभिः शतकैः सम्पन्नमित्येव मनसस्तुष्टिरिति वेदये।

रघुनाथशर्मा
वेदान्तविभागाध्यक्षचरः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य,

छाता, बलिया
रामनवमी,
वि० सं० २०३५

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पण्डितरघुनाथशर्मविरचितः

# सन्ततिस्तवः

—:*:—

## प्रथमं शतकम्

मम मङ्गलहेतुमुदारदये सुतसन्ततिमाजिरसीम्नि शिवे ।
स्मितशोभितवक्त्रविलोकिनिके तनुतां भवती भवभाविनिके ॥ १ ।
करुणाकणकल्पितमुञ्जभवे कृतदिक्करितुण्डसुतुण्डसुते ।
मम सौतपरम्परिकां परमां ननु भावय भक्तहृदब्जशये ॥ २ ।
मणिनूपुरनादतिरोहितनादकलश्रुतिविस्मृतिवृद्धशिवे ।
विनिवेशितसस्मितचारुदृशा दिशतात् सुतसन्ततिमाशु शिवा ॥ ३ ।
अयि दानवतानवकारिशरे शरणागतमम्ब विलोक्य वरे ।
वरमाशु दिश प्रदिश प्रसुतं प्रतिमानविहीनपदास्यकरे ॥ ४ ।
करुणावरुणालयमानसिके सिकतासमशुभ्रसुवासनिके ।
परिवारकबीरसुवासनिके प्रदिश प्रसुतं गिरिराजसुते ॥ ५ ।
दलदञ्जनगञ्जनकान्तिभृतेऽमृतसम्भृतसागरमध्यगते ।
गणनायकभूषितजानुयुगे प्रदिश प्रसुतं गिरिराजसुते ॥ ६ ।
कलिकल्मषहारियशःप्रचये प्रचितासुरयूथवरूथहरे ।
हरवीक्षितसस्मितचारुमुखे प्रदिश प्रसुतं गिरिराजसुते ॥ ७ ।
जननीजनदैवविधायिनिके वरतोषितशोषितभक्तकुले ।
कुलसन्ततिकारिणि कामहरप्रतिबद्धसुमङ्गलतन्तुकरे ॥ ८ ।
चलचारुविलोचनशोकहरे जितकामकलत्रपदप्रमुखे ।
परमाणुपुरस्कृतमध्यवरे प्रदिश प्रसुतं गिरिराजसुते ॥ ९ ।
अमरीकबरीभ्रमरीगणगीतनिनादितपादपयोजयुगे ।
मम मानसमाश्रयतां भवती कुलकारणवारणवक्त्रसुते ॥ १० ।
करुणाकणसम्प्लुतचारुदृगञ्चलवीक्षितदीनजनार्तिहरे ।
गतिमम्ब दिश प्रदिश प्रसुतं भवभावनभावनयाऽभिषुते ॥ ११ ।
सुरपादपसंश्रितवल्लिकलामनुकुर्वति शम्भुशरीरगते ।
गतिमम्ब दिश प्रदिश प्रसुतं मदनान्तकमानसमादिनिके ॥ १२ ।
करिराजकरोद्धृतकर्करिका मुखनिःसृतवारिझरासुतिके ।
प्रसुतं प्रथितं तनुतां भवती वरवारणराजकराभकरे ॥ १३ ।
जगतीगतजीवसुजीवनहेतु पराक्रमकेतुयशःप्रसरे ।
सुरसंस्तुतिहर्षनिवारिततर्षजितासुरधर्षनिकर्षकले ॥ १४ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शरणागतशीर्षनिविष्टकरे करिणीकरवीजितचामरिके ।
करुणारससम्भृतमानसिके प्रदिश प्रसुतं गिरिराजसुते ॥ १५ ।
कलितामरकालकलाकवले कलिकालविकालनकीर्त्तनिके ।
मम मानसमन्दमरालगते प्रदिश प्रसुतं गिरिराजसुते ॥ १६ ।
अभिधावति विस्वरवक्त्रवरे कवलीकरणाय कृतान्तभटे ।
अभितर्जनशूलकरे भवती तनुतां प्रसुतं गिरिराजसुते ॥ १७ ।
निटिलार्चिरुपायनतप्तविधुस्रवदमृतबिन्दुविलेपनतः ।
परिजीवितमाल्यनिवेशितमुण्डपरिष्कृततुण्डनुतिश्रवतः ॥ १८ ।
परिहृष्यदुमावदनेन्दुविभाप्रविलोकनमत्तगजान्तकृतः ।
श्रुतचाटुवचःश्रवतश्चटुलाकृतिका प्रसुतं प्रददातु शिवा ॥ १९ ।
मणिकङ्कणलम्बितचारुकरे करुणाकृतकौतुकहृष्टहरे ।
कनकाङ्गदकोटिविषक्तदशे प्रदिश प्रसुतं गिरिराजसुते ॥ २० ।
कृतकर्णविभूषणमञ्जरिके कृतकेशविभूषणमौनसुभे ।
शतपत्रकुशेशयचारुकरे तनुतां प्रसुतं भवती गिरिजे ॥ २१ ।
परिपावितकोटिमहीध्रकुले परिभावितदानवदैत्यकुले ।
परिसावितविश्वजनुर्भृतके प्रदिश प्रसुतं गिरिराजसुते ॥ २२ ।
हरिपुङ्गवयुग्मरथाधिगते भवसर्गविनाशविसर्गकरे ।
करुणारससम्भृतरोषभरे प्रदिश प्रसुतं गिरिराजसुते ॥ २३ ।
तरुणीतरुणीगणगीतगुणा गुणभावितसर्गविसर्गगणा ।
गणनामतिभूत्तगुणा भवती तनुतां प्रसुतं गिरिराजसुते ॥ २४ ।
तरुमूलनिकेतनतापसकैरवकोटिविकासकचन्द्रकले ।
मम मानसमाश्रयतां भवती प्रदिश प्रसुतं गिरिराजसुते ॥ २५ ।
तपनोडुपमण्डलकुण्डलिके धृतकर्णिकयौवतसाधु नुते ।
मम मानसमाश्रयतां भवती प्रदिश प्रसुतं गिरिराजसुते ॥ २६ ।
शुचिमञ्चकपञ्चकमध्यगतेऽशुचिवञ्चकरङ्कविदूरगते ।
शुचिसेवकशावकशंतनने प्रसिते प्रदिश प्रसुतं गिरिजे ॥ २७ ।
कमले कमलाकरमध्यचरे भवदावविकुण्ठकुठारकरे ।
मम मानसमन्दिरमध्यचरे प्रदिश प्रसुतं गिरिराजसुते ॥ २८ ।
कृतकर्णिकचारुशिरीषसुभे कृतकङ्कणमालतिकालिकरे ।
धृतफुल्लकुशेशयमौलिवरे प्रदिश प्रसुतं गिरिराजसुते ॥ २९ ।
मृडमौलिनिविष्टनिलिम्पझरी निनदश्रुतिसम्भवरोषयुते ।
पदपद्मनतप्रमथे शशिरो युतिभीतिपदापनयप्रसृते ॥ ३० ।
मम वीक्षणकातरचारुदृगञ्चलचञ्चलवारिझराप्लुतिके ।
गतिमम्ब दिश प्रदिश प्रसुतं प्रणतारतिभञ्जनभाविनिके ॥ ३१ ।
मुखमण्डलकान्तिजितेन्दुकले कटिकान्तितिरस्कृतकेसरिके ।
करपल्लवधिक्कृतपल्लविके प्रदिश प्रसुतं गिरिराजसुते ॥ ३२ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बृहती बृहती परिगीतगुणे वसुदे वसुधे वसुरूपिणिके ।
चितिरूपिणि चिद्गणनाङ्गणगे प्रदिश प्रसुतं गिरिराजसुते ॥ ३३ ।
गिरिगह्वरगे गिरिसानुगते गिरिशानुगते मम मानसगे ।
चलचित्तविदूरगते भवती तनुतां प्रसुतं गिरिराजसुते ॥ ३४ ।
कुलकन्यकयाऽनुकृताचरिते कुलयोगिनि योगरतप्रणुते ।
कुलयौवतमार्गनिदेशपरे प्रदिश प्रसुतं गिरिराजसुते ॥ ३५ ।
मणिकुट्टिमसंकुमशालिनिजप्रतिबिम्बविलोकनहासपरे ।
गजराजमुखे प्रतिहासपरे प्रदिश प्रसुतं गिरिराजसुते ॥ ३६ ।
तव वाहनकेशरिकेसरकर्षणसक्तषडाननवारिणिके ।
वरबाहुविधारणताडनभीतसुरेशचमूपतितर्जनिके ॥ ३७ ।
जगदम्ब मदम्ब कदम्बवनेषु विहारपरे मणिहारधरे ।
गतिमाशु दिश प्रदिश प्रसुतं मम मानसमन्दिरमध्यचरे ॥ ३८ ।
शचिकाकचिकाकृतसंस्तवने रुचिकालिकया जितकाञ्चनिके ।
विकचप्रचितप्रसुमावलिके प्रदिश प्रसुतं गिरिराजसुते ॥ ३९ ।
निरवद्यनिरञ्जननिस्तुलिके विधिमात्रनिवृत्तिनिषेधनुते ।
पतिदैवतयौवतगीतगुणे प्रदिश प्रसुतं गिरिराजसुते ॥ ४० ।
कलहंसगते परहंसमते परहंससहस्रसमानरुचे ।
रुचितर्जितताडितवारिवहे प्रदिश प्रसुतं गिरिराजसुते ॥ ४१ ।
करुणारससागरनामधरे करुणारससूतकुमारवरे ।
करुणारसकल्पितसर्गसरे प्रदिश प्रसुतं गिरिराजसुते ॥ ४२ ।
पशुपाशविलोकनशोकपरे पशुपाशविमोचनशोकहरे ।
पशुतापगतार्चितपादवरे प्रदिश प्रसुतं गिरिराजसुते ॥ ४३ ।
पदपद्मपराजितपद्मकुले निजसद्मविमानितसद्मकुले ।
कलहुंकृतिवारितवैरिकुले प्रदिश प्रसुतं गिरिराजसुते ॥ ४४ ।
कलधौतधरामणिधामगते कलधौतमहीधरमूर्धगते ।
कलधौतविभूषितपादयुगे प्रदिश प्रसुतं गिरिराजसुते ॥ ४५ ।
मणिमन्दिरमञ्जुलमञ्चगते ममताहतिपूतहृदब्जशये ।
असुनिग्रहगोचरतोपगते प्रदिश प्रसुतं गिरिराजसुते ॥ ४६ ।
प्रमथाद्भुतभूतविभूतरवश्रुतिसंभवदर्शनकौतुकिके ।
वृषवाहविलोकनधाविनिके प्रदिश प्रसुतं गिरिराजसुते ॥ ४७ ।
कनकाङ्गदमण्डितचारुकरे करबालकरालविशालकरे ।
वरचक्रविभूषितवक्रकरे प्रदिश प्रसुतं गिरिराजसुते ॥ ४८ ।
मुनिमानसहंसकुलाङ्गनिके मुनिमानसफुल्लपयोजपदे ।
मुनिमानसगोचरदूरगते प्रदिश प्रसुतं गिरिराजसुते ॥ ४९ ।
कुरु कुल्लिकयाऽभिधयाऽभिहिते जलविन्ध्यनिवासिनि वन्द्यपदे ।
धृतचामरवाक्कमलाकलिते प्रदिश प्रसुतं गिरिराजसुते ॥ ५० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ललिते ललनाशतसंवृतिके विधिविष्णुहराश्रितशक्तियुते ।
वशिनीकृतनामसहस्रनुते प्रदिश प्रसुतं गिरिराजसुते ॥ ५१ ।
तरणे भवसागरपारगमे सरणे भवकाननपारगमे ।
अरणे भवकाननदाहपरे प्रदिश प्रसुतं गिरिराजसुते ॥ ५२ ।
मनसे मनसो गतिदूरगते मनसे हितवस्तुविधानकरे ।
मनसा परिभावितरूपधरे प्रदिश प्रसुतं गिरिराजसुते ॥ ५३ ।
भवसम्भवरोगभयप्रणुदे भवसंभवशोकभयप्रणुदे ।
भवसम्भवमङ्गलमोदकरे प्रदिश प्रसुतं गिरिराजसुते ॥ ५४ ।
जगतीजगतीधरणीधरणी धरणीधरमन्दरमूलगते ।
बृहतीहरिशक्तिरुमे भवती तनुतां प्रसुतं प्रथितं गिरिजे ॥ ५५ ।
सुरहव्यवहे पितृकव्यवहे बहुरूपधरे बहुवर्गनुते ।
नुतिसंश्रुतिसम्भवहर्षयुते प्रदिश प्रसुतं गिरिराजसुते ॥ ५६ ।
वषडर्थविहीनपदाभिहिते स्वरितिप्रतिबद्धपदोपगते ।
सुधयाऽभिधयाऽभिहितार्थवति प्रदिश प्रसुतं गिरिराजसुते ॥ ५७ ।
जय मङ्गलकारिणि मङ्गलिके जय कालिकपालिनि कुण्डलिके ।
जय कालकलाकलनातिगते प्रदिश प्रसुतं गिरिराजसुते ॥ ५८ ।
जय चण्डविनाशिनि मुण्डहरे जय शुम्भनिशुम्भनिघातपरे ।
महिषासुरमर्दिनि शम्भुवरे प्रदिश प्रसुतं गिरिराजसुते ॥ ५९ ।
वदनद्युतिवारिविहारिचलाचलमीनयुगाभविलोचनिके ।
वरमाशु दिश प्रदिश प्रसुतं मम मानसमन्दिरमन्दसरे ॥ ६० ।
नवद्रुविमबिम्बतिरस्कृतिकारिरदच्छदकान्तिसुचारुमुखे ।
गतिमम्ब दिश प्रदिश प्रसुतं प्रणतार्पितराज्यसमृद्धिसुखे ॥ ६१ ।
परिफुल्लपयोभवजिष्णुपदे परिफुल्लपयोभवजिष्णुकरे ।
परिफुल्लपयोभवजिष्णुमुखे प्रदिश प्रसुतं गिरिराजसुते ॥ ६२ ।
वरचक्रनिवेशितपादयुगे वरवक्त्रविनिन्दितचन्द्रकुले ।
वरबाहुविनिर्जितराहुकुले प्रदिश प्रसुतं गिरिराजसुते ॥ ६३ ।
दधिभक्तभुजे दधिभक्तददे दधिमाथितकार्पिततोकवरे ।
दधिशुभ्रयशःप्रसरे भवती तनुतां प्रसुतं गिरिराजसुते ॥ ६४ ।
पशुकारिणि पाशविमोचिनिके गृहकारिणि बन्धनिवारिणिके ।
हरितालिसुशालिकरेऽसुकरे प्रदिश प्रसुतं गिरिराजसुते ॥ ६५ ।
पुरुषे पुरुशक्तिरुमे भवती सकलामरशक्तिरुमे भवती ।
सदसद्गतशक्तिरुमे भवती तनुतां प्रथितं प्रसुतं भवती ॥ ६६ ।
सकलामरमौननुता भवती वरभूधरभूपसुता भवती ।
द्विरदास्यषडास्यसुता भवती तनुतां प्रथितं प्रसुतं भवती ॥ ६७ ।
अतिवर्णनरूपयुता भवती अतिवर्णनवीर्ययुता भवती ।
अतिवर्णनवृत्तयुता भवती तनुतां प्रसुतं प्रथितं भवती ॥ ६८ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवसम्भवहेतुरुमे भवती भवनेत्रगुणाढ्यवपुर्भवती।
हरिशङ्करदृग्विगता भवती तनुतां प्रसुतं प्रथितं भवती॥ ६९।
सकलाश्रयभूमिरुमे भवती सकलस्तवभाग उमे भवती।
अविभाव्यवपुःप्रकृतिर्भवती तनुतां प्रसुतं प्रथितं भवती॥ ७०।
धरणीधरधामविदूरगते विधिविस्मृतिगोचरतोपगते।
अशुभोद्भवभीतिहरा भवती तनुतां प्रसुतं गिरिजे भवती॥ ७१।
सुरसद्मगता कमला भवती असुरास्तगताऽकमलाभवती।
वरबुद्धिरुमे हृदये भवती तनुतां प्रसुतं प्रथितं भवती॥ ७२।
असुरेषु महेषुहतेषु शिवे प्रददासि शिवां गतिमात्तदये।
त्वयि भक्तिनते तव पादगते प्रदिश प्रसुतं गिरिराजसुते॥ ७३।
समराङ्गणनिष्ठुरमानसिके करुणारससम्भृतमानसिके।
बुधबुद्धिविभावितशान्तरसे प्रदिश प्रसुतं गिरिराजसुते॥ ७४।
परचक्रनिविष्टपराभवती परिपश्यति नाभिगता भवती।
हृदयाश्रितमध्यमिका भवती तनुतां प्रसुतं प्रथितं भवती॥ ७५।
मम सन्नुतिसंश्रुतिहर्षपरे मम दैन्यनिवारणतर्षपरे।
मम शत्रुकदम्बकधर्षपरे प्रदिश प्रसुतं गिरिराजसुते॥ ७६।
वरबाणगदापरिघासिधरे वरचक्रधनुर्धरहस्तवरे।
शितशूलशिरःशुचिशङ्खधरे नददम्बुदघोरभुशुण्डिकरे॥ ७७।
परचक्रविभञ्जकवक्त्रवरे रथचक्रविभञ्जकपादवरे।
गजयूथविभञ्जकयूथकरे प्रदिश प्रसुतं भवभाग्यवरे॥ ७८।
तनुकान्तिविनिर्जितविद्रुमिके विषमाम्बकसर्गविसर्गपरे।
मणिचन्द्रविभूषितमौलिवरे प्रदिश प्रसुतं गिरिराजसुते॥ ७९।
चषकीकृतरत्नविभासिकरे कलसीकृतरत्ननिविष्टपदे।
स्मितवारिविनिर्झरमग्नमुखे प्रदिश प्रसुतं गिरिराजसुते॥ ८०।
मणिशाकुनिकाकृतिकामगमप्रतिधावदमानविमानगते।
वृषवाहनवाहनधाविनिके प्रदिश प्रसुतं गिरिराजसुते॥ ८१।
उपसुन्दकसुन्दनिषूदिनिके दितिजाधमभण्डविभीषिणिके।
मधुकैटभदारणकारिणिके प्रदिश प्रसुतं गिरिराजसुते॥ ८२।
पदपद्मयुगप्रणतार्तिहरे चरकाचरकेश्वरि पापहरे।
धरणे धरणीधरभारधरे प्रदिश प्रसुतं गिरिराजसुते॥ ८३।
जलरूपिणि जीवितजीवकुले दहने दहनोन्नतसालगते।
ग्रहगोलविधारिणि गन्धवहे प्रदिश प्रसुतं गिरिराजसुते॥ ८४।
बलवृत्रविदारणकारिणिके गजपृष्ठगते वरवज्रधरे।
शतपङ्क्तिनिविष्टविलोचनिके प्रदिश प्रसुतं गिरिराजसुते॥ ८५।
नखदारितदानवदैत्यधरे शनिदर्शनहृष्टसुरेशनुते।
गतिमम्ब दिश प्रदिश प्रसुतं प्रणतामरमौलिनिविष्टपदे॥ ८६।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वृषवाहिनि शूलकरा भवती गजवैरिणि पौरहरा भवती ।
मदनान्तकशक्तिरुमे भवती तनुतां प्रसुतं गिरिजे भवती ॥ ८७ ।
गिरिशेशयनाङ्गधरा भवती शितधारपरश्वधिका भवती ।
गजचर्मनिवीतवपुर्भवती तनुतां प्रसुतं गिरिजे भवती ॥ ८८ ।
भसिताङ्कुतगात्रवरा भवती फणिकङ्कणचारुकरा भवती ।
नरमुण्डकपालधरा भवती तनुतां प्रसुतं गिरिजे भवती ॥ ८९ ।
परिभूतपुरन्दरिका भवती परिणूतपरार्धगुणा भवती ।
ज्वलिताशहुताशदृशानिटिले परिदग्धमनोभविका भवती ॥ ९० ।
सुरथीकृतभूमिरुमे भवती विधिसारथिरुग्रवपुर्भवती ।
धरणीधरभूपधनुर्भवती तनुतां प्रसुतं प्रथितं भवती ॥ ९१ ।
रथचक्रयुगीकृतचन्द्रविभा करबाणविनिर्मितचक्रधरा ।
त्रिपुराशुविनाशनवित्तचरा तनुतां प्रसुतं सकलाघहरा ॥ ९२ ।
ऋजुवक्रबहुश्रुतिमार्गमिले ऋजुवक्रमनोजनभक्तिमिले ।
ऋजुवक्रविमूढविदूरगते प्रदिश प्रसुतं गिरिराजसुते ॥ ९३ ।
अयि गीष्पतिवाग्रचनाऽतिगते मम विप्लुतवाक्परिपावनिके ।
परिणूतगुणोच्चितपुण्यचये प्रदिश प्रसुतं गिरिराजसुते ॥ ९४ ।
पदघातविकम्पितभूमितला वरबाहुविघूर्णितभालतला ।
लगुडाकृतिमूर्धजताडितदिक्तटिकाकृतताण्डविका शिविका ॥ ९५ ।
पदकम्पितभूमितला भवती करकम्पितभालितला भवती ।
चलमूर्धजताडितदिक्तटिका कृतताण्डवनृत्तकला भवती ॥ ९६ ।
गरलाशनभूतिकरी भवती प्रमथेशविभूतिकरी भवती ।
चितिभस्मविभूषितभूतिकरी नृकपालिकभूतिकरी भवती ॥ ९७ ।
गरलाशनभीतिविभञ्जनकुण्डलमण्डलमण्डितगण्डतला ।
गरुडध्वजगीतगुणा भवती तनुतां प्रसुतं गिरिजे भवती ॥ ९८ ।
भवमोदिनिके भवनोदिनिके भवसम्भववैभववृद्धिकरे ।
भवभीतिहरे भवसौख्यकरे प्रदिश प्रसुतं गिरिराजसुते ॥ ९९ ।
वरशङ्खसुदर्शनचक्रधरे मृगखण्डपरश्वधचारुकरे ।
चितिभूतिविभूतिधरे भवती तनुतां प्रसुतं गिरिजे भवती ॥ १०० ।
इन्द्रनीलमणिरम्यसानुके नीलभूभृतिकृतास्पदे शिवे ।
पौत्रगोयुगमुदारदर्शने मातरुद्दिश दयावलोकनैः ॥ १०१ ।

इत्येतदतिनिर्विण्णरघुनाथमुखोद्गतम् ।
सन्ततिस्तवकं पुष्पस्तवकप्रतिकञ्चुकम् ॥ १०२ ॥
आवर्तयति यः शक्रदृक्संख्यामिदमादरात् ।
पुत्रपौत्रानुवृत्तिः स्यात् तस्य यावत् स्थिरा धरा ॥ १०३ ॥

**इति श्रीब्रह्मीभूतकाशीनाथतनय-**
**सौभद्रेयरघुनाथकृतौ सन्ततिस्तवे**
**प्रथमं शतकम् ॥**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## द्वितीयं शतकम्

रविसोमसुतान्वयवृद्धिकरे कमले कमलाकरसम्भविके ।
हरवल्लभिके हरितुष्टिकरे प्रदिश प्रसुतं गिरिराजसुते ॥ १ ।
अयि लक्ष्मिसरस्वतिवेदसुते सचराचरविश्वविधानकरे ।
भवपालिनिके भवकालिनिके प्रदिश प्रसुतं गिरिराजसुते ॥ २ ।
विधिविष्णुमहेशविधायिनिके परबुद्धिमतां वरनिर्वृतिदे ।
जडबुद्धिमतां वरबुद्धिददे प्रदिश प्रसुतं गिरराजसुते ॥ ३ ।
प्रकृते पुरुषप्रियदर्शनिके बहुशक्तिभृते विकृतैः प्रभृते ।
स्वनिदेशवपुर्निगमे भवती तनुतां प्रसुतं गिरिराजसुते ॥ ४ ।
शरणागतभुक्तिविमुक्तिददे शुभकर्मकृतां सुखसाधनिके ।
यमिनां बहुसिद्धिविधायिनिके प्रदिश प्रसुतं गिरिराजसुते ॥ ५ ।
अयि आरुणिशोकविमोचिनिके अयि दृश्यमनोभवसाक्षिणिके ।
परमेशि शताम्बकचारुमुखे प्रदिश प्रसुतं गिरिराजसुते ॥ ६ ।
जगदीश्वरि पञ्चककोशगते वरपुच्छपरात्मवपुर्विदिते ।
अरुणाम्बरवेषधरे भवती तनुतां प्रसुतं गिरिराजसुते ॥ ७ ।
करुणारससागरमानसिके विविधायुधधारकचारुकरे ।
जगतीपरिपालनतत्परिके प्रदिश प्रसुतं गिरिराजसुते ॥ ८ ।
हरिचन्द्रपराधिपरासनिके जगदन्तरयामिनि कालयमे ।
अपराश्रितसंश्रितशोकहरे प्रदिश प्रसुतं गिरिराजसुते ॥ ९ ।
निजकामविनिर्मितविश्वभवे बहुकोटिपराण्डविधायिनिके ।
वरकूटवपुश्चितिरूपिणिके प्रदिश प्रसुतं गिरिराजसुते ॥ १० ।
अयि वेदविसायविगीतगुणे भुवनेश्वरि नेतिपदाकलिते ।
नवनीलसरोरुहकान्तियुते प्रदिश प्रसुतं गिरिराजसुते ॥ ११ ।
नवनीरजनीलशतेक्षणिके अतिकर्कशपीनघनस्तनिके ।
वरबाणकदम्बकमुष्टिकरे प्रदिश प्रसुतं गिरिराजसुते ॥ १२ ।
नवपल्लवपुष्पपयोजकरे वरमूलकशाकफलादिधरे ।
अमरारिविभीषणचापधरे प्रदिश प्रसुतं गिरिराजसुते ॥ १३ ।
रविकोटिनिकाशविभासकरे करुणारससागरनामधरे ।
करुणाकणनिःसृतवारिझरे प्रदिश प्रसुतं गिरिराजसुते ॥ १४ ।
अयि वेदशिरोनुतवृत्तवरे परचेतनरूपिणि मायिनिके ।
निजपादतलाश्रितकल्पलते प्रदिश प्रसुतं गिरिराजसुते ॥ १५ ।
अयि तारिणि कालि रमे त्रिपुरे अयि भैरवि बालवयोविदिते ।
अयि सुन्दरि मातरुमे त्रिपुरे अयि मत्तमतङ्गजिकेतुलजे ॥ १६ ।
अयि कामविलोचनिका भवती ननु जम्भिनि मोहिनि कामवती ।
अयि छिन्नशिरोऽयुतबाहुवरे प्रदिश प्रसुतं गिरिराजसुते ॥ १७ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि कालि कपालिनि गुह्यतरे द्विजपङ्क्तिमितामितशक्तियुते ।
अयि दुर्गमदर्पहरे भवती तनुतां प्रसुतं गिरिराजसुते ॥ १८ ।
अयि शाकभरे शतलोचनिके जगदम्बुधिविभ्रमकारिणिके ।
अयि दुर्गमदैत्यविदारिणिके प्रदिश प्रसुतं गिरिराजसुते ॥ १९ ।
अयि सर्वविकल्पविजल्पपरे प्रणवाहितवर्णविगीतगुणे ।
बहुकोटिपराण्डविधायिनिके प्रदिश प्रसुतं गिरिराजसुते ॥ २० ।
अयि पामरदर्शनदीनतरे सदये परमेश्वरि मातरुमे ।
अयि दैवतविस्मयकारिवपुर्विदिते प्रदिश प्रसुतं गिरिजे ॥ २१ ।
अयि पञ्चकपीठवरासनिके भुवनेश्वरि विस्फुटदूरगते ।
चितिशक्तिवपुःस्वगुणैः पिहिते प्रदिश प्रसुतं गिरिराजसुते ॥ २२ ।
अयि विश्वविरूपिणि सूक्ष्मतरे जगदन्तरयामिनि सोमधरे ।
चितिनिर्वृतिसत्त्ववपुर्भवती तनुतां प्रसुतं गिरिराजसुते ॥ २३ ।
अयि गौरि हरास्यविकासकरे अयि लक्ष्मि हरिप्रतिहासपरे ।
अयि नीरजसम्भववक्त्रगते प्रदिश प्रसुतं गिरिराजसुते ॥ २४ ।
अभयाङ्कुशपाशवराङ्ककरे वरविश्वविभावसुरूपधरे ।
अयि तैजससूत्रवपुर्विदिते प्रदिश प्रसुतं गिरिराजसुते ॥ २५ ।
प्रकृतेऽखिलभावकचित्तनुके अहमर्थवपुर्जगतीविदिते ।
समरूपिणि सर्वसुलक्ष्मवपुः प्रदिश प्रसुतं गिरिराजसुते ॥ २६ ।
अविमुक्तगते विपुलाक्षियुते सतिकामुखनित्यनिवासरते ।
अयि नैमिषकाननगे भवती तनुतां प्रसुतं गिरिराजसुते ॥ २७ ।
अयि लिङ्गविधारिणिके ललिते सितनीलसरिद्वरसङ्गमगे ।
अयि कामुकि गन्धविमादनगे प्रदिश प्रसुतं गिरिराजसुते ॥ २८ ।
अयि दक्षिणमानसगे कुमुदे अयि उत्तरमानसगेऽखिलदे ।
अयि कामपुरोगतविश्वपदाभिहिते प्रदिश प्रसुतं गिरिजे ॥ २९ ।
अयि गोमतिगोमदुपाश्रितिके अयि कामविहारिणि मन्दरगे ।
अयि चैत्ररथे तु मदोत्कटिके प्रदिश प्रसुतं गिरिराजसुते ॥ ३० ।
अयि देवि जयन्ति गजाह्वयगे अयि कुब्जपुरस्कृतकान्यगते ।
मलयाचलगे कदलीपदगे प्रदिश प्रसुतं गिरिराजसुते ॥ ३१ ।
अयि एकरसालकपीठगते अयि कीर्तिमतीपदसंविदिते ।
अयि विश्वनियामिनि विश्वगते प्रदिश प्रसुतं गिरिराजसुते ॥ ३२ ।
अयि पुष्करगे पुरुहूतपदे अयि सद्गतिदायिनि केदरगे ।
हिमशैलगते अयि मन्दपदे प्रदिश प्रसुतं गिरिराजसुते ॥ ३३ ।
सुरभिश्रवसिश्रितचारुपदे पदपद्मपराजितपद्मकुले ।
अयि भद्रपदादिककर्णिकया विदिते प्रदिश प्रसुतं गिरिजे ॥ ३४ ।
अयि आसनकेश्वरि मातरुमे अयि देवि भवानि भवाकृतिके ।
अयि विल्वकपीठगतेऽसुददे अयि बिल्वदलाकृतिके गिरिजे ॥ ३५ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जय माद्रिगते जय माधविके जय भद्रपदेश्वरभद्रपदे।
जय शूकरशैलगते जयदे जय देवि जयापदसंविदिते॥ ३६।
कमलालयके कमलापदिके जय कालजरे जय कालिवरे।
जय रुद्रककोटिनिवासपरे जय रुद्रविनोदिनि रौद्रतरे॥ ३७।
जय देवि पुरोगमहापदिके जय शालपुरे सुनिवासपरे।
शिवलिङ्गनिकेतनवासरते जय जीवनतर्षजलप्रियके॥ ३८।
मुकुटेश्वरि मादिककोटगते कपिलाऽसि महादिकलिङ्गगते।
जय देवि कुमारि मयापुरके जय सन्ततिगेहगते ललिते॥ ३९।
जय गेहगते जय मङ्गलिके पुरुषोत्तमसंश्रयगे विमले।
पुरुहूतपदे कमलाक्षिवरे प्रदिश प्रसुतं गिरिराजसुते॥ ४०।
अयि वह्निसुताक्षमहोत्पलिके अयि देवि अमोघद्दशाविदिते।
अयि निर्मलनीरविपाशगते प्रदिश प्रसुतं गिरिराजसुते॥ ४१।
जय पाण्डलिके जय पाण्डुरिके जय पुण्ड्रविवर्धनसंश्रयिके।
जय देवि सुपार्श्वगते भवती तनुतां प्रसुतं गिरिराजसुते॥ ४२।
जय नारनिकेतनवामगते जय रुद्रकसुन्दरि सुन्दहरे।
गुणसम्मितकूटगते भवती तनुतां प्रसुतं गिरिराजसुते॥ ४३।
विपुले विपुले मलयाचलके कलपाणिकराङ्कुशपाशधरे।
अयि सह्यगिरौ वरवीरपदे प्रदिश प्रसुतं गिरिराजसुते॥ ४४।
हरिचन्द्रगते हरचन्द्रगते वरचन्द्रिकयाऽमलयाविदिते।
रमणे जय राघवतीर्थगते प्रदिश प्रसुतं गिरिराजसुते॥ ४५।
जय देवि मृगावत्ति यामुनगे जय कोटविकोटकतीर्थगते।
जय माधवकाननगे सुरभे प्रदिश प्रसुतं गिरिराजसुते॥ ४६।
जय गोदिकयाप्लुततीर्थजले गुणसङ्ख्यकसन्ध्यकमौननुते।
जय देवनदीप्रसरे रतिका प्रियके प्रदिश प्रसुतं गिरिजे॥ ४७।
अयि नन्दपदाभिहिते शुभिके अयि नन्दिनिदैविकतीरगते।
अयि रुक्मिणिद्वारवतीविदिते प्रदिश प्रसुतं गिरिराजसुते॥ ४८।
अयि कुण्डगते वरदेऽभयदे तुलसीवरकाननगेऽविदिते।
वृषभानुसुतापदसंविदिते प्रदिश प्रसुतं गिरिराजसुते॥ ४९।
अयि देवकवंशविपावनिके मथुरानगरे हरिजन्मकरे।
अयि कंसनिषूदनकारणिके प्रदिश प्रसुतं गिरिराजसुते॥ ५०।
धरणीतलगे परमेश्वरिके अयि जानकिचित्रककुद्गतिके।
अयि विन्ध्यनिवासिनि विन्ध्यनगे प्रदिश प्रसुतं गिरिराजसुते॥ ५१।
अयि लक्ष्मि पुरोगमहापदिके करवीरगतेऽवनिदेवनुते।
अयि देवि विनायकतीर्थगते प्रदिश प्रसुतं मम मातरुमे॥ ५२।
अयि नाथपुरोगतवैद्यरवे विविधाघिनि वारिणि शोकहरे।
अयि कालपुरोगमहापदिके जय देवि महेश्वरि मातृवरे॥ ५३।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुनितम्बिनि विन्ध्यमहीधरगे अभयोष्णकतीर्थवरप्रगते।
अयि माण्डविमाण्डवतीर्थगते प्रदिश प्रसुतं गिरिराजसुते ॥ ५४।
अयि देवि महेश्वरिकापुरगे ज्वलनप्रियके प्रसुत प्रददे।
अयि चण्डतरे छगलण्डगते प्रदिश प्रसुतं गिरिराजसुते ॥ ५५।
अयि निर्जरकण्टकतीर्थगते अयि चण्डि विखण्डितचण्डकुले।
अयि दुर्धरदानवदर्पहरे प्रदिश प्रसुतं गिरिराजसुते ॥ ५६।
अयि रोहपुरोगवरारविके अयि रोहविसायगदीर्घयुते।
अयि सोमपतौ कृतवासरुचे प्रदिश प्रसुतं गिरिराजसुते ॥ ५७।
प्रविभासितभासकतीर्थगते अयि पुष्करशालिनि पद्मकरे।
अयि देवि सरस्वतिकातटगे अयि दैवतमातृतया विदिते ॥ ५८।
तटगे च परापरपारगमे विपुलालयगे वरभागयुते।
अयि पिङ्गलकेश्वरि उष्णपयोऽभिधवारिविहावरतीरगते ॥ ५९।
कृतशौचपदे अयि सिंहिनिके अतिशाङ्करि कार्तिकतीर्थगते।
अयि उत्पलवर्तकतीर्थगते अयि लोलकरे अयि लोलपदे ॥ ६०।
अयि शोणनदाधिपसङ्गमगे अयि देवि सुभद्रपदाभिहिते।
अयि सिद्धवने वरमातरुमे प्रदिश प्रसुतं गिरिराजसुते ॥ ६१।
अयि नीरधिजे भरताश्रमगे जयदेवि अनङ्गपदाधिरते।
जय विश्वमुखीपदसंविदिते जय जालधराह्वयतीर्थगते ॥ ६२।
जय किष्किधपर्वतसानुगते जय तारिणि तारपदाभिहिते।
सुरदारुककाननतीर्थगते जय पुष्टिरुमे जय तुष्टिरुमे ॥ ६३।
जय शारदमण्डलमध्यगते कृतबुद्धिनुते वरमेध उमे।
जय भीषणभीमपदाभिहिते जय तुष्टिरुमे हिमभूधरगे ॥ ६४।
जय विश्वनियामिनि यामिनिके नृकपालविमोचनपावनिके।
जय शुद्धिरुमे जयमातरुमे जयकायविरोहणकामगमे ॥ ६५।
अयि शङ्खधरे धरिका भवती अयि पिण्डरिके धृतिका भवती।
अयि चन्द्रपुरस्कृतभागपदावरवारिबहागकला भवती ॥ ६६।
अयि अच्छजले शिवधारिणिके वरौणिकतीर्थगते सुधिके।
अयि उर्वशिके बदरीगतिके प्रदिश प्रसुतं गिरिराजसुते ॥ ६७।
अयि उत्तरकौरवतीर्थगते अयि औषधिके कुशमण्डलगे।
अयि देविकुशोदकनामधरे प्रदिश प्रसुतं गिरिराजसुते ॥ ६८।
अयि हेमककुद्मतिमन्मथिके अयि कौमुदके ऋतवादिनिके।
चलपत्रगते अयि वन्द्यपदे प्रदिश प्रसुतं गिरिराजसुते ॥ ६९।
अयि वैश्रवणालयके निधिके अयि वेदमुखप्रगते त्रिपदे।
शिवसन्निधिगे अयि पार्वतिके प्रदिश प्रसुतं गिरिराजसुते ॥ ७०।
सुरलोकगताशचिका भवती विधिवक्त्रसरस्वतिका भवती।
रविमण्डलगाप्रभिका भवती अयि वैष्णविमातृवरा भवती ॥ ७१।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि देवि अरुन्धतिका भवती प्रमदासु तिलोत्तमिका भवती।
हृदि चित्कलिकावरशक्तियुता शरदारितदैत्यकुला भवती॥ ७२।
अयि वेदचतुष्कविनूतपदे रविकोटिनिकाशविभासयुते।
चपलाचयकोटिसमानरुचे प्रदिश प्रसुतं गिरिराजसुते॥ ७३।
अयि विश्वविनिर्गतविग्रहिके अयि आदिविरामकथारहिते।
बहुपाणिपदेऽपदपाणियुगे प्रदिश प्रसुतं गिरिराजसुते॥ ७४।
नहि यौवतरूपधरा भवती नहि पौरुषरूपधरा भवती।
नहि षण्डकरूपधरा भवती कृतकौतुकरूपधरा भवती॥ ७५।
अयि यौषितरूपधरा भवती अयि देवि मनोहरिका भवती।
रमणीयतरङ्गयुता भवती अयि देवि कुमारितरा भवती॥ ७६।
मुखनिन्दितचन्द्रकुला भवती कचनिन्दितनीलतमा भवती।
वरकिङ्किणिकायुतमेखलिका मधुरारवनूपुरका भवती॥ ७७।
कनकाङ्गदभाषिकरा भवती मणिकावलिहारधरा भवती।
गलबन्धनिबद्धमणिप्रभया विहितेन्द्रधनुःशुभिका भवती॥ ७८।
तनुकेतकसंश्रितनीलकचैर्विहितभ्रमरभ्रमिका भवती।
चलकुण्डलताडितगण्डयुगा भवदर्शनसम्भ्रमिका भवती॥ ७९।
शशिखण्डविमिश्रितपर्णपुटी परिपूरितवक्त्रवरा भवती।
शशिखण्डविडम्बिललाटवती भ्रुकुटीयुगचापधरा भवती॥ ८०।
अयि रक्तसरोरुहकान्तिविनिन्दकनेत्रनिपातितदैत्यकुले।
अयि उन्नसिके अरुणाधरिके प्रदिश प्रसुतं गिरिराजसुते॥ ८१।
अयि कुन्दककुड्मलदन्तरुचे अयि मौक्तिकहारविराजितिके।
अयि रत्नविभासितमौलिवरे प्रदिश प्रसुते गिरिराजसुते॥ ८२।
अयि शक्रधनुर्निभचापकरे अयि भाल्लिकभालतमाल्यधरे।
अयि कुङ्कुमबिन्दुविभासितभालवरे प्रदिश प्रसुतं गिरिजे॥ ८३।
विषमाम्बकसङ्गविलासिनिके वरपाशकरेऽङ्कुशिकेऽभयदे।
करचारुचतुष्कयुते भवती तनुतां प्रसुतं गिरिराजसुते॥ ८४।
अरुणांशुकवीतवपुर्भवती अयिदाडिमरक्तवपुर्भवती।
अखिलामरवर्गनुता भवती तनुतां प्रसुतं गिरिजे भवती॥ ८५।
अयि सर्वमनोरथपूरणिके अयि सर्वकमातृतयाविदिते।
अयि सर्वविमोहिनिके भवती तनुतां प्रसुतं गिरिराजसुते॥ ८६।
अयि मन्दशुचिस्मितचारुमुखे कपटोज्झितकारुणिकाकृतिके।
प्रकृते अयि भद्रतरेऽग्निरुचे प्रदिश प्रसुतं गिरिराजसुते॥ ८७।
अयि वीरविरोचनतोकवरे तपसा ज्वलने कृतकर्मफले।
अयि दुर्गतिदारिणिदेवि उमे प्रदिश प्रसुतं गिरिराजसुते॥ ८८।
विविधाकृतिपाशववक्त्रगते अयि वाणि गवाकृतिकोपमिते।
अयि भद्रविकाङ्क्षितसूर्जपुटे प्रदिश प्रसुतं गिरिराजसुते॥ ८९।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि कालविभावरिका भवती विधिना नुतचारुपदा भवती।
अयि वैष्णविका सुरसङ्घनुता कृतजन्मषडाननिका भवती ॥ ९० ।
अयि देवि सरस्वतिका भवती अयि दक्षदुहितृपदा भवती।
अदितिर्वरदेवसुता भवती अयि पावनिका शिविका भवती ॥ ९१ ।
अयिविश्वविराजपदा भवती अयि सूत्रकरूपधरा भवती।
अपरिस्फुटरूपधरा भवती परमात्मकरूपधरा भवती ॥ ९२ ।
अयि तत्पदलक्ष्यवपुर्भवती अयि चिन्मयरूपवपुर्भवती।
अविभागसुनिर्वृतिका भवती अयि वेदपराशयिका भवती ॥ ९३ ।
अयि पञ्चककोशविनिर्गतिके त्रिदशावलिसाक्षिणि साक्षिवरे।
अयि युष्मदिलक्ष्यतया प्रगते प्रदिश प्रसुतं गिरिराजसुते ॥ ९४ ।
प्रणवाकृतिके हरभाकृतिके वरबिन्दुयुते करुणाकृतिके।
अयि भक्तमनोरथकल्पलते प्रदिश प्रसुतं गिरिराजसुते ॥ ९५ ।
अयि तर्कितरूपवपुर्भवती व्यपदेशुविहीनवपुर्भवती।
उपमापरिवर्जितरूपधरा सकलामयदोषपरा भवती ॥ ९६ ।
अयि ईश्वरविग्रहिका भवती अयि सूत्रपदाभिहिता भवती।
अयि चारुविराजपदा भवती तनुतां प्रसुतं गिरिजे भवती ॥ ९७ ।
विधिविष्णुपदाभिहिता भवती अयि रुद्रपदाभिहिता भवती।
अयि दक्षसुता विदिता भवती अयि देवि सरस्वतिका भवती ॥ ९८ ।
अयि वैष्णविकाप्रथिता भवती अयि देविदिवाकरगा भवती।
अयि मालिगताशशिरूपिणिका पशुपक्षिकरूपधरा भवती ॥ ९९ ।
अयि वैष्णववृत्तिरुमे भवती अयि तस्करवृत्तिरुमे भवती।
मृगयुर्जनगर्हितकर्मकरा बुधशंसितकर्मकरा भवती ॥ १०० ।
अयि यौवतरूपधराभवती अयि पौरुषरूपधरा भवती।
अयि षण्ढकरूपधरा भवती तनुतां प्रसुतं गिरिजे भवती ॥ १०१ ।
सुरलौकिकमूर्धवरा भवती रविचन्द्रमिषाक्षिवराभवती।
श्रवणीकृतदिग्विदिशा भवती तनुतां प्रसुतं गिरिजे भवती ॥ १०२ ।
इन्द्रनीलमणिरम्यसानुके नीलभूभृतिकृतास्पदे शिवे।
पौत्रगो युगमुदारदर्शने मातरुद्दिश दयाविलोकनैः ॥ १०३ ।

इत्येतदतिनिर्विण्णरघुनाथमुखोद्गतम्।
सन्ततिस्तवकं पुष्पस्तवकप्रतिकञ्चुकम् ॥ १०४ ।
आवर्तयति यःशक्रदृक्सङ्ख्यामितमादरात्।
पुत्रपौत्रानुवृत्तिःस्तात्तस्य यावत् स्थिरा धरा ॥ १०५ ।

इति श्रीब्रह्मीभूतकाशीनाथतनय-
सौभद्रेयरघुनाथकृतौ सन्ततिस्तवे
द्वितीयं शतकम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## तृतीयं शतकम्

अयि वेदचतुष्कवचा भवती अयि वायुमिषासुधरा भवती ।
अयि विश्वहृदब्जवरा भवती तनुतां प्रसुतं गिरिजे भवती ॥ १ ।
वियदद्भुतनाभिसरा भवती उरसिश्रितभालितला भवती ।
महसिस्थितकण्ठवरा भवती तनुतां प्रसुते गिरिजे भवती ॥ २ ।
जनसिश्रितभद्रमुखा भवती वहुकौतुकरूपधरा भवती ।
तपसिस्थितचारुरराटिवरा विधिलोकसमीपगता भवती ॥ ३ ।
करभावितसर्वसुरा भवती स्वनभावितकर्णवरा भवती ।
नसिभावितदस्रसुरा भवती मुखभावितहव्यवहा भवती ॥ ४ ।
दिनरात्रिविनिर्मितपक्ष्मवरा भ्रुकुटीयुगभावितवैधगृहा ।
जलकल्पितताालुवराभवती तनुतां प्रसुतं प्रथितं भवती ॥ ५ ।
रसनाकृतसर्वरसा भवती यमनिर्मितदन्तवरा भवती ।
द्विजपङ्क्तिविनिर्मितनेहकला कुहकाद्भुतह्लासकरा भवती ॥ ६ ।
सुरसाध्यपतत्रिविधात्रि उभे पशुमानुपसर्गसवित्रि उभे ।
असुपञ्चकधान्ययवादिकरी तनुतां प्रसुतं प्रथितं भवती ॥ ७ ।
परभक्तिपराव्यपदा भवती शुभरत्नगुणाकरिका भवती ।
अपराश्रितभक्तहृदब्जशया विविधागमगोचरगा भवती ॥ ८ ।
पयसिश्रितसर्पिरिवाखिलगा सकलैः शुभकर्मकरैः सुलभा ।
सकलाशयगा दशरालयगा गृहनाश्रितवप्रगता भवती ॥ ९ ।
अयि कोलमहापुरसंश्रितिके कमले कमलालयमध्यगते ।
अयि रेणुपदे अयि रेणुकिके प्रदिश प्रसुतं गिरिराजसुते ॥ १० ।
तुलजापुरके तुलजापदिके मुनिशृङ्गगते अयि हिङ्गुलिके ।
अयि कैलमुखि प्रथिते जगति प्रदिश प्रसुतं गिरिराजसुते ॥ ११ ।
अयि शाकभरीभ्रमरी भवती अयिरक्तरदा प्रथिता भवती ।
अयि दुर्गमदैत्यहरा भवती अयि दुर्गतिनाशिनिका भवती ॥ १२ ।
अयि विन्ध्यनिवासरता भवती अविमुक्तपुरेऽन्नददा भवती ।
अयि काञ्चिपुरे वरहर्म्यगते अयि भीमपदाभिहिता भवती ॥ १३ ।
विमले विमलाम्बरसंवृतिके विमलाश्रितमानसमध्यवरे ।
विमलाम्भसि सुश्रितहर्म्यगने प्रदिश प्रसुतं गिरिराजसुते ॥ १४ ।
अयि चन्द्रलिके अयिकौशिकिके अयि मातृपुरोगतनीलपदे ।
अयि नीलमहीधरसानुगते प्रदिश प्रसुतं गिरिराजसुते ॥ १५ ।
अयि जाम्बवनीरनदेश्वरिके कमलानगरे कृतसंस्थितिके ।
अयि कालिपुरोगतगुह्यपदे प्रदिश प्रसुतं गिरिराजसुते ॥ १६ ।
अयि मीनविलोचनिका भवती अयि चारुचिदम्बरगा भवती ।
अयि वेदवने नियता भवती अयि सुन्दरिका पदिका भवती ॥ १७ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परशक्तिपदाभिहिता भवती अयि एकवियत्पदगा भवती ।
अयि योगमहेश्वरिका भवती अयि देविमहालसिका भवती ।। १८ ।
अयि चीनकदेशगता भवती अयि नीलसरस्वतिका भवती ।
अयि वैद्यकनाथगताबगलाभुवनेश्वरिकाविदिता भवती ।। १९ ।
त्रिपुराननभैरविका भवती सवितुर्महसिप्रगता भवती ।
अयि पुष्करगाऽवनिदेवनुता अयि चण्डिसुरेशगता भवती ।। २० ।
प्रविभासकतीर्थगता भवती अयि पुष्करकेक्षणिका भवती ।
अयि लिङ्गविधारिणिका भवती अयि नैमिषतीर्थगता भवती ।। २१ ।
अयि पुष्करनेत्रगता भवती पुरुहूतपदाभिहिता भवती ।
अयि आषढिगारतिका भवती प्रदिश प्रसुतं गिरिजे भवती ।। २२ ।
अयि चण्डकमुण्डिकयाविदिता महतिस्थितिकावरदण्डनिका ।
परमेश्वरिका नकुलेश्वरिका अयि नाकुलतीर्थगता भवती ।। २३ ।
अयि चन्द्रिकया विदिता भवती हरिचन्द्रकतीर्थगता भवती ।
अयि भूतिपुरोगतभारपदे ननु भूतिपदाभिहिता भवती ।। २४ ।
अयि शाङ्करिका कमलागिरिके गुणशूलयुता जपकेश्वरके ।
अयि आम्रतकेश्वरकेमहिता ननु सूक्ष्मपदाभिहिता भवती ।। २५ ।
अयि कालपुरोगमहापदिके महतिस्थितिके अयि शांकरिके ।
अयि मध्यमके कृतवासरुचे प्रदिश प्रसुतं गिरिराजसुते ।। २६ ।
अयि सर्वहृदब्जविकासकरे अयि केदरिके शुचिमार्गददे ।
अयि भैरविभैरवके भवती तनुतां प्रसुतं गिरिजे भवती ।। २७ ।
गयिका गतिका ननु मङ्गलिका कुरुभूमिगता शिवसुप्रियका ।
अयि नाकुलतीर्थगता भवती विधिसंस्तुतचारुपदा शुभदा ।। २८ ।
शुचिकानखले अयि उग्रपदे विमलेश्वरके सकलेश्वरिके ।
अयि नन्दपुरोगमहापदिके अयि अट्टविहासकतीर्थगते ।। २९ ।
अयि अन्तकपूर्वमहापदिके महनीयमहेन्द्रमहीधरगे ।
अयि भीमकभीममहेश्वरिके प्रदिश प्रसुतं गिरिराजसुते ।। ३० ।
अयि वस्त्रपथे विदिता भवती भवभावभृदाशयिका भवती ।
अयि शांकरिका सुरसङ्घनुता जगतीहितकारिणिका भवती ।। ३१ ।
अयि अर्धककोटिकतीर्थगते अयि रुद्रकहर्षिणि हर्षयुते ।
अयि मुक्तगते विपुलाक्षिवरे प्रदिश प्रसुतं गिरिराजसुते ।। ३२ ।
महनीयमहालयगा भवती वरभागपदाभिहिता भवती ।
अयि गोऽन्तगकर्णकचारुपदे अयि भद्रकर्णिनुता भवती ।। ३३ ।
अयिभद्रककर्णकतीर्थगता अयि भद्रपदाभिहिता भवती ।
अयि उत्पलचारुविलोचनिका कनकाक्षकतीर्थगता भवती ।। ३४ ।
अयि शम्भुपरिबृढिका भवती अयि शम्भुकतीर्थगता भवती ।
कमलालयगा कमला भवती तनुतां प्रसुतं गिरिजे भवती ।। ३५ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

छगलण्डकतीर्थगता भवती प्रपदाग्रगचण्डपदा भवती ।
अयि देवि कुरण्डलतीर्थगता गुणसन्धिपदाभिहिता भवती ॥ ३६ ।
अयि मण्डलकेशकतीर्थगता अयि शाण्डकिकाऽभिहिता भवती ।
अयि मोदिककोटकतीर्थगता मुकुटेश्वरिका प्रथिता भवती ॥ ३७ ।
अयि कालि कपालिनि कालजरे अयि देवि दितीजकरोटिहरे ।
अयि शङ्कुककर्णगते ध्वनिके प्रदिश प्रसुतं गिरिराजसुते ॥ ३८ ।
अयि पीवरकेश्वरतीर्थगते अयि पीवरिके अयि धीवरके ।
अयि धीवरहृत्कमलान्तरगे अयि हृल्लिखिके परमेश्वरिके ॥ ३९ ।
अयि भौतिकमूर्तिगता भवती रविमण्डलचन्द्रगता भवती ।
जलगा वरबाणकलिङ्गगता बृहदम्बरगा विदिता भवती ॥ ४० ।
अयि यन्त्रगता महिता भवती हृदयाम्बुजकोशगता भवती ।
परतः परमा सगुणा भवती करुणारसपूर्णतरा भवती ॥ ४१ ।
तरणी अरुणारुणकर्पटिका सुरसुन्दरिका नुतचारुगुणा ।
सकलाङ्गविभूषणसुन्दरिका तनुतां प्रसुतं गिरिराजसुता ॥ ४२ ।
अयि अङ्कुशपाशवराभयकैः परिशोभितचारुचतुर्भुजिके ।
अयि चन्द्रकखण्डशिखण्डिनिके प्रदिश प्रसुतं गिरिराजसुते ॥ ४३ ।
प्रथमप्रगतौ प्रथमानगुणे प्रतियानगतेऽमृतरूपिणिके ।
अयि अन्तरपद्धतिचारुचरे प्रदिश प्रसुतं गिरिराजसुते ॥ ४४ ।
अयि देवकदम्बमहेश्वरिके भवकारणकारिणिके प्रकृते ।
अयि शङ्खगदारिकचारुकरे प्रदिश प्रसुतं गिरिराजसुते ॥ ४५ ।
अयि वेदविनिर्मितमूर्तिवरे अयि केशवहृत्कमलान्तरगे ।
जगती जननीपदसंविदिते प्रदिश प्रसुतं गिरिराजसुते ॥ ४६ ।
अयि कारणकस्थितिरूपिणिके अयि वेदचतुष्कवचोविदिते ।
सुरसङ्घनुते शिवशक्तिवरे प्रदिश प्रसुतं गिरिराजसुते ॥ ४७ ।
हरमादिकबिन्दुपदा भवती अयि कीर्तिपदाभिहिता भवती ।
स्मृतिकान्तिपदा कमला गिरिजा सतिका ननु दक्षसुता भवती ॥ ४८ ।
श्रुतिगर्भपदाभिहिता भवती अयि बुद्धिविसर्गिणिका भवती ।
अभया प्रणतार्तिहरा भवती तनुतां प्रसुतं प्रथितं भवती ॥ ४९ ।
अयि लोकपसर्गकरा भवती दितिजाधमदर्पहरा भवती ।
अयि मङ्गलमङ्गलरूपधरा धरणीधरभूपसुता भवती ॥ ५० ।
अयि ईश्वरमालिनिका भवती अयि कान्तिवितारिणिका भवती ।
अयि दुष्टविनाशकरी भवती तुलिकावरपुष्टिरुमे भवती ॥ ५१ ।
अयि आद्यपदाभिहिता भवती अयि अन्तविहीनपदा भवती ।
अयि पापिकदम्बकपाविनिका स्मरतां भवरोगहरा भवती ॥ ५२ ।
अयि कीर्तनतोऽखिलविघ्नहरा अयि मान्यसुरासुरमान्यतरा ।
अयि कोकिलहृक्करुणा भवती अयि कामकलाप्रथिता भवती ॥ ५३ ।


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि कामसुपूजितपादयुगा कुलिशालिकठोरवपुर्धरिका ।
अयि धन्यतरा सुरमान्यतरा अयि देवि गभस्तिनिका भवती ॥ ५४ ।
अयि उत्समहेश्वरिका भवती अयि भक्तहितार्थकरी भवती ।
अयि देवि सुपूजितपादयुगा वरसाहससंविदिता भवती ॥ ५५ ।
अयि कालकरालवपुर्भवती महनीयमहाननिका भवती ।
अयि कर्मफलप्रदिका भवती तनुतां प्रसुनं प्रथितं भवती ॥ ५६ ।
अयि कामककोटिविवर्तिनिका अयि सर्वसुरेश्वरिका भवती ।
अयि कान्तरकग्रहणेश्वरिका अयि कालतराङ्गवरा भवती ॥ ५७ ।
अयि मीनवराक्षिवरा भवती अयि नीलनवाम्बरिका भवती ।
अयि रौद्रमुखी अलिनीलकचा सुरसङ्घनुता फलदा भवती ॥ ५८ ।
अयि मान्यतरा अयि पूज्यतरा निजभक्तकपर्दनिविष्टकरा ।
अयि मत्तमतङ्गजगामिनिका मदनोन्मदहेतुवरा भवती ॥ ५९ ।
अयि मानरसाविदिता भवती अयि मानरसान्तरिका भवती ।
अयि मारकपूजितपादयुगा अयि मारकमादिनिका भवती ॥ ६० ।
अयि मारकवेगधरा भवती अयि मारविनूतपदा भवती ।
अयि चित्रशिखण्डिशिखण्डयुता शिखिवाहनगर्भधरा भवती ॥ ६१ ।
अयि वैष्णवि मङ्गलिका भवती अयि कालि दुरत्ययिका भवती ।
अयि कालकरात्रिरुमे भवती अयि मायिनि पद्मशया भवती ॥ ६२ ।
अयि मत्तमत्तङ्गजिका भवती वरमायिनिका शिविका भवती ।
शतपङ्क्तिपदाम्बुजिका भवती सकलाभयमङ्गलिका भवती ॥ ६३ ।
मधुकद्रुमवासरता भवती मधुकैटभमूर्धहरा भवती ।
अयि देवि वरेशि महेश्वरिका सकलेष्टकसिद्धिकरा भवती ॥ ६४ ।
अयि पुष्करनेत्रवरा भवती धरणीधरिका विदिता भवती ।
अयि देवि महेश्वरिका महती सुरसुन्दरिकाऽभिहिता भवती ॥ ६५ ।
परमार्गविदायिनिका भवती परमेश्वरिका विदिता भवती ।
अयि देवि महायुतमङ्गलिका परमा परमाघहरा भवती ॥ ६६ ।
प्रजिकोद्भविका परचिद्घनिका मददायिनिका प्रथिता भवती ।
मदमत्ततराऽखिलमानगमा अयि देवि मनस्विनिका भवती ॥ ६७ ।
अयि देवि महोन्नतमानसिका मुनिमानसगा रविमण्डलगा ।
अयि लोकपलोकपरेश्वरिका प्रलयाम्बुदकान्तिधरा भवती ॥ ६८ ।
यमलोकनिवारिणिका भवती यमपूज्यतरा प्रथिता भवती ।
यमपूर्वजिका यजनीयपदा यमनिग्रहरूपधरा भवती ॥ ६९ ।
जनसङ्घविनाशकरी भवती कमनीयकरूपवती भवती ।
समशीलवती निखिलेश्वरिका जनसङ्घविवर्जितिका भवती ॥ ७० ।
करुणापरविग्रहिका भवती नृकरङ्ककरालतरा भवती ।
अयि कामविलोचनिका भवती अयि मीनविलोचनिका भवती ॥ ७१ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri.

अयि मर्मविभेदिनिका भवती अयि कर्मविभेदिनिका भवती ।
मधुरस्वरपूजितपादयुगा मधुराद्भुतरूपवती भवती ॥ ७२ ।
मधुराद्भुतशीलवती भवती . महनीयमहामणिमन्त्रवती ।
अयि मन्त्रगमा जनमानसगा अयि मन्त्रसुमद्रकरी भवती ॥ ७३ ।
अयि मन्मथकाहितभद्रकरी अयि पिप्पलपादपगा भवती ।
वटनिम्बरसालकपित्थगता बदरीगतिका विदिता भवती ॥ ७४ ।
पनसार्ककरीरगता भवती अयि दुग्धलतावसतिर्भवती ।
दयनीयदयाऽभ्यधिका भवती अयि दक्षिणिका करुणा भवती ॥ ७५ ।
अयि सर्वविदप्रियका भवती उरुगायविगीतपदा भवती ।
गणनाथजनुष्करिका भवती अयि दुर्गतिदारिणिका भवती ॥ ७६ ।
अयि राधिकयाऽभिधयाभिहिता अयि लक्ष्मि सरस्वतिका भवती ।
सवितुः पदगाऽवनिदेवनुता प्रकृतिः खलु पञ्चविधा भवती ॥ ७७ ।
परमा प्रकृतिस्त्रिगुणा भवती गणनायकभाविनिका भवती ।
शिवरूपिणिका शिववल्लभिका परिपूर्णचितिर्विदिता भवती ॥ ७८ ।
अयि नारनिकेतनिका भवती अयि वैष्णवि मायिनिका भवती ।
मुनिभिर्मनुभिर्विबुधैर्विनुता अयि सर्वनियामिनिका भवती ॥ ७९ ।
अयि देवि सनातनिका भवती अयि सर्वसुरूपिणिका भवती ।
अयि धर्मसती बहुपुण्यकृता अयि कीर्तिपदाभिहिता भवती ॥ ८० ।
अयि कीर्तिवितारिणिका भवती अयि मङ्गलदायिनिका भवती ।
सुखमोक्षददा बहुहर्षददा अयि शोकविनाशिनिका भवती ॥ ८१ ।
अयि आर्तिविनाशिनिका भवती अयि दुःखविनाशिनिका भवती ।
शरणागतदीनतरार्तिहरा महसार्जितसूर्यशता भवती ॥ ८२ ।
रविमण्डलमध्यगता भवती सदसद्गतशक्तिवरा भवती ।
सकलेश्वरशक्तिरुमे भवती तनुतां प्रसुतं गिरिजे भवती ॥ ८३ ।
अयि सिद्धमहेश्वरिका भवती अयि सिद्धिविधायिनिका भवती ।
अयि सिद्धिरुमेश्वरिका भवती तनुतां प्रसुतं गिरिजे भवती ॥ ८४ ।
वरबुद्धिरुमे दहरान्तरगा अयि सुप्तिरुमे प्रलयान्तरगा ।
असुतोषकरी क्षुधिका भवती तनुतां प्रसुतं गिरिजे भवती ॥ ८५ ।
प्रतिबिम्बतमस्विनिका भवती करुणावरुणालयिका भवती ।
अयि तन्द्रिरुमे सुखसर्जनिका असुपोषकरी तृषिका भवती ॥ ८६ ।
अयि जातिरुमे विदिता भवती अयि कर्मविभेदिनिका भवती ।
विधिसर्गविधौ स्मृतिरूपिणिका अयि कान्तिरुमे शुभिका भवती ॥ ८७ ।
अयि शान्तिसुरूपिणिका भवती शुभमार्गनिदेशिनिका भवती ।
क्षमिका बहुरोगनिवारिणिका भ्रमिका बहुदोषकृता भवती ॥ ८८ ।
अयि तुष्टिपदाभिहिता भवती अयि पुष्टिपदाभिहिता भवती ।
अयि चेतनिकाऽखिलविग्रहगा धृतिका पदिका विदिता भवती ॥ ८९ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि लक्ष्मि सरस्वतिका भवती कविमानसहंसगता भवती ।
अयि मायिनिका बहुविग्रहिका भवसर्गविधायिनिका भवती ॥ ९० ।
शुचिसत्त्वगुणाऽभ्यधिका भवती बहुबोधविचारपरा भवती ।
रजसापरिपोषितविग्रहिका कुलसन्ततिकारिणिका भवती ॥ १०१ ।
इन्द्रनीलमणिरम्यसानुके नीलभूभृतिकृतास्पदे शिवे ।
पौत्रगोयुगमुदारदर्शने मातरुद्दिश दयाऽवलोकनैः ॥ १०२ ।

इत्येतदतिनिर्विष्णरघुनाथमुखोद्गतम् ।
सन्ततिस्तवकं पुष्पस्तवकप्रतिकञ्चुकम् ॥ १०३ ॥
आवर्तयति यः शक्रदृक्संख्यामितमादरात् ।
पुत्रपौत्रानुवृत्तिः स्यात् तस्य यावत् स्थिरा धरा ॥ १०४ ॥
विविधाधिमहाव्याधिबाधिते मम मानसे ।
पदपद्मनिवेशेन पराम्बा सहसाऽवतु ॥ १०५ ॥

इति श्रीब्रह्मीभूतकाशीनाथतनयसौभद्रेयरघुनाथकृतौ
सन्ततिस्तवे तृतीयं शतकम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## चतुर्थं शतकम्

अयि सर्वविभूतिगता भवती परमात्मनि शक्तिरये भवती।
अयि सर्वविभूतिनियामिनिका कमला विमलाऽभिहिता भवती ॥ १ ।
अयि कान्ततरा अयि दान्ततरा अयि शान्ततरा विदिता भवती।
वसुशीलवती सकलास्तगताऽखिलमङ्गलिका कथिता भवती ॥ २ ।
अयि लोभविवर्जितिका भवती अयि मोहविवर्जितिका भवती।
अयि कामविहीनतरा भवती अयि रोषविहीनमना भवती ॥ ३ ।
अयि भक्तमनोऽनुगता भवती सतिका व्रतिका प्रथिता भवती।
अयि भागवतप्रियवादरता अयि भागवतासुनिभा भवती ॥ ४ ।
भगवद्रतिगोचरिका भवती भवयौवतगीतगुणा भवती।
अयि शंसितसस्यसुरूपिणिका जनजीवनसाधनिका भवती ॥ ५ ।
हरिलोकगता परमा भवती पतिसेविनिका सतिका भवती।
सुरलोकगता सुरमा भवती अयि राजसु राजरमा भवती ॥ ६ ।
गृहिणां गृहकेषु रमा भवती परमा गजयूथगता भवती।
अयि सर्वजनेषु मनोहरिका शुचिवस्तुगता शुभिका भवती ॥ ७ ।
अयि पण्यवतां वरकीर्तिरुमे नृपसद्मनि सुप्रभिका भवती।
वणिजां वरवाणिजिका भवती अघिनां कलहाङ्कुरिका भवती ॥ ८ ।
करुणावरुणालयविग्रहिका श्रुतिसम्मतरूपधरा भवती।
अयि सर्वसुपूजितपादयुगा विधिवन्दितवन्द्यपदा भवती ॥ ९ ।
अयि वाग्मतिबोधविधायिनिका कृतविद्यहृदन्तरगा भवती।
अयि वैद्यविशेषकचारुपदा अयि देवि सरस्वतिका भवती ॥ १० ।
वरबुद्धिरये कविताप्रतिभास्मृतिदा बहुधारणिका भवती।
बहुभेदकृतान्तकलाकलना वरविवृतिबोधवरा भवती ॥ ११ ।
अयि सर्वकसंशयभञ्जिनिका परमार्थविचारपरा भवती।
अयि ग्रन्थककारिणिका भवती अयि शक्तिवपुर्विदिता भवती ॥ १२ ।
स्वरगीतकसंहिततालकलाकृतिकारिणिकाभिहिता भवती।
विषयावगमार्पकवाक्परमा उपजीवकविश्वजना भवती ॥ १३ ।
अयि विवृतिका विदिता भवती अयि वादकरी विदिता भवती।
अयि शान्तिमती वरवीणिकया परिगीतपरेशगुणा भवती ॥ १४ ।
अयि शुद्धकसत्त्ववती भवती अयि पुस्तकधारिणिका भवती।
अयि शीलवती हरिवल्लभिका हिमचन्दनकुन्दनिभा भवती ॥ १५ ।
कुमुदाम्बुजसन्निभिका भवती तपसा परितप्ततनुर्भवती।
अयि रत्नकमालिकयाऽमलया हरिपूजनतत्परिका भवती ॥ १६ ।
तपसां फलदायिनिका भवती अयि सिद्धिविधायिनिका भवती।
अयि भूसुरपूगनुता भवती अयि भूसुरमौनहरा भवती ॥ १७ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जननी चतुराश्रमवर्णवतां जननी श्रुतिशास्त्रगिरां भवती ।
अयि सान्ध्यविधायकमन्त्रगिराम् अयि तन्त्रगिरां विदुषी भवती ॥ १८ ।
द्विजजातिसुरूपिणिका भवती जपरूपिणिका विदिता भवती ।
अयि तापसरूपधरा भवती द्विजतैजसरूपधरा भवती ॥ १९ ।
अयि पावनरूपधरा भवती सवितुः श्रुतरूपधरा भवती ।
निजगायकपालनतत्परिका विधिवल्लभिका विदिता भवती ॥ २० ।
अयि तीर्थकपावनपादयुगा स्फटिकाकृतिविग्रहिका भवती ।
परमा परनिर्वृतिरूपिणिका अयि शुद्धसनातनिका भवती ॥ २१ ।
परचिद्घनरूपिणिका भवती परनिर्वृतिदायिनिका भवती ।
परचिद्गतशक्तिरुमे भवती परशक्तिनियामिनिका भवती ॥ २२ ।
गिरिपालितविग्रहिका भवती गिरिशाश्रितविग्रहिका भवती ।
निजपादविपावितसंसृतिका कुलसन्ततिकारिणिका भवती ॥ २३ ।
असुपञ्चकचालिनिका भवती असुपञ्चकरूपिणिका भवती ।
असुपञ्चकतः प्रियका भवती तनुतां प्रसुतं गिरिजे भवती ॥ २४ ।
सुरसुन्दरिकाभ्यधिका भवती पतिसौभगमानिनिका भवती ।
गुरुगौरवयुक्ततरा भवती तनुतां प्रसुतं गिरिजे भवती ॥ २५ ।
पतिवामनिविष्टवपुर्भवती गुणतो महसः समिका भवती ।
परिगीतपरा वरभावयुता अयि सारसुरूपिणिका भवती ॥ २६ ।
परमादिपदाऽसि सनातनिका परनिर्वृतिरूपिणिका भवती ।
अयि मान्यतरा अयि धन्यतरा सुरपूजितपादयुगा भवती ॥ २७ ।
अयि रासरता अयि रासगता अयि रासजविग्रहिका भवती ।
अयि रासकमण्डलमण्डितिका अयि रासनियामिनिका भवती ॥ २८ ।
अयि रासनिवासनिवासिनिका सुरसापदसंविदिता भवती ।
अयि गोपिकवेषविधायिनिका सुरभीक्षयवासिनिका भवती ॥ २९ ।
परनिर्वृत्तिरूपिणिका भवती अयि तोषकहर्षयुता भवती ।
अयि निर्गुणिकाऽसि निराकृतिका अयि लेपविवर्जितिका भवती ॥ ३० ।
अयि आत्मसुरूपिणिका भवती अयि ईहिकया रहिता भवती ।
अभिमानविवर्जितिका भवती अयि भक्तदयाविवशा भवती ॥ ३१ ।
अयि वेदवचोऽनुसृतानुभवप्रतिभातवपुर्विदिता विबुधैः ।
अयि ईशसुरेन्द्रमुनीन्द्रगणैर्नहि दृष्टिविलोकितिका भवती ॥ ३२ ।
अयि वह्निविशुद्धवरांशुकिका वरभूषणभारभृता भवती ।
बहुकोटिकचन्द्रविभावरिका परिपुष्टककान्तिधरा भवती ॥ ३३ ।
अयि कृष्णपदाम्बुजभक्तियुताऽखिलभूतिविभूतिकरी भवती ।
वृषभानुसुता विदिता भवती वसुधापरिपावनिका भवती ॥ ३४ ।
विधिविष्णुशिवाद्यसुदृष्टचरा अजनाभकदृष्टचरा भवती ।
अयि यौवतरत्नकसारकृता अयि कृष्णमहोरसिगा भवती ॥ ३५ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नववारिधरावलिसम्भृतिके गगने चपला चपला भवती।
विधिना तपसाऽपरिदृष्टचरा तुलसीवनदृष्टचरा भवती ॥ ३६ ।
अयि देवि पवित्रितजह्नुकुले करुणावरुणालयमानसिके।
वरुणालयवर्त्मनि धाविनिके प्रदिश प्रसुतं गिरिराजसुते ॥ ३७ ।
अयि लोकपलोकविपाविनिके अयि वैष्णवविग्रहसम्भविके।
द्रवरूपिणि देवि सनातनिके प्रदिश प्रसुतं गिरिराजसुते ॥ ३८ ।
अयि पापिकपापविदाहिनिके ज्वलदग्निसुरूपिणि शम्भुधृते।
सुखशीतलिके वरनिर्वृतिदे प्रदिश प्रसुतं गिरिराजसुते ॥ ३९ ।
सुरभीक्षयवर्त्मविधायिनिके चलवीचिचयाहितपद्धतिके ।
अभिधावदमानविमानगतप्रविशं सितकीर्तिवितानवरे ॥ ४० ।
अयि तीर्थविपाविनिका भवती अयि सिन्धुविपाविनिका भवती।
शिवमौलिजटावरमेरुगता शुचिमौक्तिकमाल्यवपुर्भवती ॥ ४१ ।
अयि तापससङ्घनुता भवती अयि तापससिद्धिकरी भवती।
अयि चन्द्रकपद्मकदोहनिभा सुचिसत्त्ववपुर्विदिता भवती ॥ ४२ ।
अयि निर्मलिका निरहंकृतिका उरगाशनशायिनिका भवती।
अयि साधुजनादृतचारुपदा अयि साध्विसतां गतिदा भवती ॥ ४३ ।
प्रकृतेर्विपुलांशभवा भवती तुलसीपदसंविदिता भवती।
गरुडध्वजकामिनिका भवती अयि विष्णुविभूषिणिका भवती ॥ ४४ ।
अयि विष्णुपदाब्जगता भवती तपसः फलदायिनिका भवती।
अयि मानसपूरणिका भवती अयि पूजनभावगता भवती ॥ ४५ ।
अयि पुष्पकदम्बकसारतरा अयि पावनिका अयि पुण्यददा।
अयि दर्शनधारणतस्त्वरया वरनिर्वृतिदायिनिका भवती ॥ ४६ ।
कलिकालिककालुषशुष्कदवेन्धनदाहपराऽनलिका भवती।
पदपद्मपरागनिपातसुपूतवसुन्धरिका विदिता भवती ॥ ४७ ।
अयि तीर्थविकाङ्क्षितदर्शनिका अयि कर्मफलप्रदिका भवती।
अयि मोक्षविधायिनिका भवती अयि कामविधायिनिका भवती ॥ ४८ ।
अयि कल्पकपादपरूपिणिका परदेवतिका विदिता भवती।
अयि भारतवर्षगता सुलभा तुलसीतरुरूपिणिका भवती ॥ ४९ ।
अयि कश्यपमानससम्भविका शिवशङ्करशिष्यधरा भवती।
परबोधविशारदिका भवती अयि नागपतेर्भगिनी भवती ॥ ५० ।
अयि नागसुपूजितपादयुगा अयि नागनियामिनिका भवती।
अयि नागसुता सुरसुन्दरिका अयि नागकदाहिनिका भवती ॥ ५१ ।
अयि नागकदम्बकसंवृतिका अयि नागविभूषणिका भवती।
अयि नागकवृन्दकवन्दितिका अयि सिद्धकयोगिनिका भवती ॥ ५२ ।
अयि नागकशायिनिका भवती अयि वामनरूपिणिका भवती।
अयि नागकशायिनिका भवती अयि वामनपूजनिका भवती ॥ ५३ ।
अयि वामनभक्तियुता भवती अयि वामनपूजनिका भवती ॥ ५३ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि तापसरूपधरा भवती तपसां फलदायिनिका भवती।
तपसः शुचिरूपवती भवती तनुतां प्रसुतं जरती भवती ॥ ५४।
गुणलक्षणवर्षतपस्विनिका परदैवतरूपिणिका भवती।
सकलागममन्त्रनियामिनिका द्विजवर्चससञ्ज्वलिता भवती ॥ ५५।
अयि तापसवृन्दनुता भवती परतः परभावनिका भवती।
हरिरूपव्रतः किलकारुमुनेर्वरकव्रतिका विदिता भवती ॥ ५६।
वरतापसकास्तिकमातृतयाऽभिहिता वरदायिनिका भवती।
सुखाहिनिका विदिता भवती वरषष्ठिकया प्रथिता भवती ॥ ५७।
अयि मातृकदम्बकपूज्यतमा सुतसन्ततिदायिनिका भवती।
त्रिजगद्जननी विदिता भवती सतिका व्रतिकाऽभिहिता भवती ॥ ५८।
प्रकृतेः खलु षष्ठविभागवती शिशुपालनतत्परिका भवती।
परमा ननु वार्धकरूपवती अयि योगिनिका प्रथिता भवती ॥ ५९।
रविभासिकपूजनिका भवती सकलालयपूजनिका भवती।
प्रसवालयपूजनिका भवती शिशुषष्ठदिनार्चनिका भवती ॥ ६०।
अयि एककविंशदिनार्चनिका कलिमद्रकहेतुवरा भवती।
मुनिभिर्मनुभिर्नमिता परमा अयि नित्यनिकामवती भवती ॥ ६१।
अयि मातृवरा दयिका भवती अयि सन्ततरक्षिणिका भवती।
जलगा स्थलगा भुवरालयगा शिशुसद्मगता विदिता भवती ॥ ६२।
प्रकृतेः परमांशकरूपवती अयि मङ्गलचण्डि शुभा भवती।
प्रकृतेर्मुखसम्भविका भवती अखिलानघमङ्गलदा भवती ॥ ६३।
अयि मङ्गलिका शुचिसर्गविधौ अयि कोपवती प्रलये भवती।
अयि मङ्गलचण्डिकयाऽभिहिता प्रतिमङ्गलपूजितिका भवती ॥ ६४।
अयि पुत्रकपौत्रविभूतियशोऽखिलमङ्गलदायिनिका भवती।
धनदायिनिका परितुष्टतराऽखिलवाञ्छितदायिनिका भवती ॥ ६५।
प्रकृतेः परमांशकरूपवती कमलेक्षणिका कथिता भवती।
अयि रोषवती जगतः प्रलये ननु शक्ततमा विदिता भवती ॥ ६६।
अयि दुर्गतिदारिणिका निटिलात्प्रभवा गुणतः समिका भवती।
अयि तैजससाम्ययुता भवती अयि कालिकपालिनिका भवती ॥ ६७।
अयि शुम्भनिशुम्भविमर्दनिके अयि कोटिरविप्रतिमा भवती।
अयि हृष्टतरा अयि पुष्टतरा अयि जाज्वलविग्रहिका भवती ॥ ६८।
अखिलाद्भुतशक्तिवरा भवती परतः परिका प्रबला भवती।
अयि सर्वकसिद्धिविधायिनिका परमा ननु योगिनिका भवती ॥ ६९।
अयि वामनभक्तियुता भवती अयि वामनतुल्यगुणा भवती।
अयि वामनतैजससाम्ययुता अयि वामनविक्रमिका भवती ॥ ७०।
अयि कृष्णकभावनिका भवती अयि कृष्णकवर्णयुता भवती।
अयि निःश्वसितानलतः प्रलयं परिकर्तुमहोक्षभिका भवती ॥ ७१।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

असुरैः समराङ्गणखेलनिका रणशिक्षकतोपगता भवती ।
पुरुषार्थचतुष्टयदायिनिका चतुराननपूजितिका भवती ॥ ७२ ।
विधिविष्णुमहेशसुरेशनुता मुनिभिर्मनुभिर्नरकैर्विनुता ।
प्रकृतेः परमांशकरूपवती वसुधारिणिका विदिता भवती ॥ ७३ ।
चरकाचरकालयरूपिणिका बहुसस्ययुता विदिता भवती ।
अयि रत्नखनिः प्रथिता भवती अयि रत्नकगर्भवती भवती ॥ ७४ ।
अयि सर्वकरत्नखनी निलया प्रजिका प्रजिकेशनुता भवती ।
अयि पूजितवन्दितपादयुगा सकलाश्रयरूपिणिका भवती ॥ ७५ ।
अयि सर्वसमृद्धिविधायिनिका अयि सर्गविधायिनिका भवती ।
स्मृतिकारिणिका स्मृतिरूपिणिका कुलसन्ततिकारिणिका भवती ॥७६।
अयि पावितवामहुताशभुजा सुरहव्यवहप्रियका भवती ।
हविराशितपोषितदेवकुला कुलसन्ततिकारिणिका भवती ॥ ७७ ।
अयि कव्यहरा विदिता भवती अयि पितृमनोहरिका भवती ।
स्वधयाऽभिधया विदिता भवती कुलसन्ततिकारिणिका भवती ॥ ७८ ।
अयि भूषितवामकयज्ञभुजा अयि यज्ञकवल्लभिका भवती ।
अयि दीक्षिकयाऽभिधयाऽभिहिता अयि दक्षिणिका विदिता भवती ॥७९।
अयि पावनकासनवामगता अयि दानफलप्रदिका भवती ।
अयि मङ्गलकारकना भवती कुलसन्ततिकारिणिका भवती ॥ ८० ।
गणनायकवल्लभिका भवती अयि पुष्टिपदाभिहिता भवती ।
वरयोषितसर्वकुला भवती कुलसन्ततिकारिणिका भवती ॥ ८१ ।
धरणीभृदनन्तमनोहरिका अयि तुष्टिपदाभिहिता भवती ।
जगतः परितुष्टिविधायिनिका कुलसन्ततिकारिणिका भवती ॥ ८२ ।
अयि सम्पदसिश्रुतनामधरा बहुमङ्गलकारिणिका भवती ।
अयि शङ्करमानसमोदिनिका कुलसन्ततिकारिणिका भवती ॥ ८३ ।
अयि कापिलवामविभूषिणिका धृतिकापदसंविदिता भवती ।
अयि धैर्यविधायिनिका भवती कुलसन्ततिकारिणिका भवती ॥ ८४ ।
अयि सत्यकवामगता भवती सतिकापदसंविदिता भवती ।
अयि मुक्तसुपूजितपादयुगा कुलसन्ततिकारिणिका भवती ॥ ८५ ।
अयि बान्धवसङ्करी भवती बहुवैभवकारिणिका भवती ।
अयि सर्वविपद्विनिवारिणिका कुलसन्ततिकारिणिका भवती ॥ ८६ ।
अयि मोहमहासनगा भवती दयिकापदसंविदिता भवती ।
अयि साध्वि जगत्प्रियका भवती कुलसन्ततिकारिणिका भवती ॥८७।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि पुण्यकवामगता भवती अयि पुण्यकदायिनिका भवती ।
प्रतितिष्ठति ते कृपया कृपणः कुलसन्ततिकारिणिका भवती ॥ ८८ ।
सुकृतार्धकवामगता भवती अयि कीर्तिपदप्रथिता भवती ।
अयि धन्यजनैः परिपूजितिका कुलसन्ततिकारिणिका भवती ॥ ८९ ।
जगतीजनजीवनिका भवती क्रियकापदसंविदिता भवती ।
अयि उद्यमवामगता भवती कुलसन्ततिकारिणिका भवती ॥ ९० ।
अयि पापपरार्धगता भवती जगतीविधिविघ्नकरी भवती ।
अयि धूर्तकवृन्दकवन्दितिका अनृतादिपदाभिहिता भवती ॥ ९१ ।
अयि शीलसमासनगा भवती अयि शान्तिपदाभिहिता भवती ।
त्रपयाऽभिधयाऽभिहिता भवती कुलसन्ततिकारिणिका भवती ॥ ९२ ।
अयि बोधसमासनगा भवती अयि बुद्धिपदाभिहिता भवती ।
अयि मेधिकयाऽभिधयाऽभिहिता धृतिकापदसंविदिता भवती ॥ ९३ ।
अयि मूर्तिपदाभिहिता भवती अयि कान्तिपदाभिहिता भवती ।
अयि धर्मसमासनगा भवती अयि धर्ममनोहरिका भवती ॥ ९४ ।
अयि विष्णुसमाश्रयिका भवती अयि विश्वविभूषिणिका भवती ।
अयि लक्ष्मिशुभासतिका भवती कुलसन्ततिकारिणिका भवती ॥ ९५ ।
अयि धन्यतरा अयि मान्यतरा सुरपूजितपादयुगा भवती ।
अयि मूर्तिमती कमला भवती कुलसन्ततिकारिणिका भवती ॥ ९६ ।
प्रलयानलसम्भवरुद्रमनोहरिकापदसंविदिता भवती ।
अयि सुप्तिपदाभिहिता भवती अयि सिद्धकयोगिनिका भवती ॥ ९७ ।
अयि सन्धिपदाभिहिता भवती अयि रात्रिपदाभिहिता भवती ।
अयि वासरिकापदसंविदिता अयि कालमनोहरिका भवती ॥ ९८ ।
क्षुधिकापदसंविदिता भवती तृषिकापदसंविदिता भवती ।
अयि लोभमनोहरिका भवती कुलसन्ततिकारिणिका भवती ॥ ९९ ।
अयि धन्यतरा अयि मान्यतरा अयि पूज्यतरा विदिता भवती ।
अयि वेदविगीतगुणा भवती कुलसन्ततिकारिणिका भवती ॥ १०० ।
प्रभिकापदसंविदिता भवती जगतीजनजीविनिका भवती ।
अयि दाहिकयाऽभिधयाऽभिहिता विधिसर्गविधौ विदिता भवती ॥ १०१ ।
अयि कालसुता विदिता भवती अयि मृत्युपदाभिहिता भवती ।
जरिकापदसंविदिता भवती अयि सञ्ज्वरसम्प्रियका भवती ॥ १०२ ।
अयि सुप्तिपदाभिहिता भवती अयि तन्द्रिपदाभिहिता भवती ।
अयि हृष्टिपदाभिहिता भवती सुखसम्प्रियका विदिता भवती ॥ १०३ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वरवीरविरागमनोहरिका अयि भक्तिपदाभिहिता भवती ।
गुरुवेदवचःप्रतिमानिनिका अयि साधुजनैर्विनुता भवती ॥ १०४ ।
अदितिःसुरमातृवरा भवती श्रुतिसंस्तुतपादयुगा भवती ।
सुरभी सुरभीकुलभाविनिका कुलसन्ततिकारिणिका भवती ॥ १०५ ।
इन्द्रनीलमणिरम्यसानुके नीलभूभृतिकृतास्पदे शिवे ।
पौत्रसन्ततिमुदारदर्शने मातरुद्दिश दयावलोकनैः ॥ १०६ ।
इत्येतदर्तिनिर्विण्णरघुनाथमुखोद्गतम् ।
सन्ततिस्तवकं पुष्पस्तबकप्रतिकञ्चुकम् ॥ १०७ ।
आवर्तयति यः शक्रहक्संख्यामितमादरात् ।
पुत्रपौत्रानुवृत्तिः स्यात् तस्य यावत् स्थिरा धरा ॥ १०८ ।

इति श्रीब्रह्मीभूतकाशीनाथतनयसौभद्रेयरघुनाथकृतौ
सन्ततिस्तवे चतुर्थं शतकम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## पञ्चमं शतकम्

अयि कश्यपवामगता भवती दितिकापदसंविदिता भवती।
अयि मङ्गलमारुतकारिणिका कुलसन्ततिकारिणिका भवती॥ १।
अयि कश्यपमानसमादिनिका अयि काद्रवकप्रसुका भवती।
गरुडारुणकारिणिका भवती कुलसन्ततिकारिणिका भवती॥ २।
अयि चन्द्रमनोहरिका भवती अयि रोहिणिका विदिता भवती।
अयि संज्ञिकयाऽभिधयाऽभिहिता रविकामिनिका कथिता भवती॥ ३।
शतरूपिणिका मनुमानसगा मनुवंशविसारिणिका भवती।
शचिका सतिकापदसंविदिता शतयागकगेहनिका भवती॥ ४।
गुरुमानसगा गुरुवामगता गुरुगौरवकारिणिका भवती।
अयि तारिकयाऽभिधयाऽभिहिता कुलसन्ततिकारिणिका भवती॥ ५।
अयि शक्तिसुताविदिता भवती पतिभक्तिपरायिणिका भवती।
अयि देवि वशिष्ठमनोहरिका कुलसन्ततिकारिणिका भवती॥ ६।
अहला मुनिगौतमवामगता तपसा परिपूततरा भवती।
अनसूयिकयाऽभिधयाऽभिहिता अयि अत्रिमनोहरिका भवती॥ ७।
अयि कर्दममोदकरी भवती अयि मानविकाऽभिहिता भवती।
कपिलप्रसुका विदिता भवती अयि देवकहूतिपदा भवती॥ ८।
अयि दक्षमनोहरिका भवती प्रसुतिः प्रसवे प्रथिता भवती।
जगतीपरिपूजितपादयुगा कुलसन्ततिकारिणिका भवती॥ ९।
पितृमानससम्भविका भवती हिमशेखरमादनिका भवती।
अयि पार्वतिका प्रसुका भवती कुलसन्ततिकारिणिका भवती॥ १०।
अयि लोपिकयाऽभिधयाऽभिहिता अयि मुद्रिकया विदिता भवती।
कलशीसुतमानसमादिनिका कुलसन्ततिकारिणिका भवती॥ ११।
अयि धर्मसुता विदिता भवती अयि भीमसुता विदिता भवती।
कपिकेतनपुत्रवती भवती कुलसन्ततिकारिणिका भवती॥ १२।
अयि गुह्यकनाथमनोहरिका वरुणाशयतोषिणिका भवती।
अयि विन्ध्यवरावलिका भवती वलिमानसमादिनिका भवती॥ १३।
दमयन्तिकयाऽभिधयाऽभिहिता अयि कान्ततरा विदिता भवती।
अयि नन्दयशःपरिवर्धिनिका अयि देवकसम्भविका भवती॥ १४।
धृतराष्ट्रमनोहरिका भवती पतिदैवतयौवतगा भवती।
द्रुपदान्वयसम्भविका भवती कुलसन्ततिकारिणिका भवती॥ १५।
शिवितोकपदाभिहिता भवती अयि सत्यवती विदिता भवती।
अयि मानविकाजननी भवती वृषभानुमनोहरिका भवती॥ १६।
अयि मन्दकमध्यमिका भवती अयि कोसलराजसुता भवती।
वसुदेवसुता वरभद्रपदा अयि कौरविका विदिता भवती॥ १७।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि रेवतिकाऽभिहिता भवती अयि सत्यपदाभिहिता भवती ।
अयि भासिकयाऽभिधयाभिहिता अयि लक्ष्मणिकाऽभिहिता भवती ।१८।
यमुनापरनामनुता भवती अयि जाम्बवती विदिता भवती ।
अयि नाग्नजिती हरिवल्लभिका अयि रुक्मिणिकाऽभिहिता भवती ।।१९।
अयि मित्रकविन्दिकयाऽभिधयाऽभिहिता हरिवामगता भवती ।
अयि लक्ष्मणिकाऽप्यपरा भवती जनकान्वयसम्भविका भवती ।। २० ।
अयि योजनगन्धवती भवती अयि कालकवर्णवती भवती ।
अयि सत्यवती विदिता भवती कुलसन्ततिकारिणिका भवती ।। २१ ।
अयि बाणसुताऽभिहिता भवती उषिकापदसंविदिता भवती ।
अयि चित्रकलेखिनिका भवती प्रभिकावतिकाप्रथिता भवती ।। २२ ।
अयि भानुमती विदिता भवती अयि मायिनिका विदिता भवती ।
अयि रेणुकयाऽभिधयाऽभिहिता भृगुमातृवराभिहिता भवती ।। २३ ।
अयि रोहिणिका बलरामसुता वसुदेवमनोहरिका भवती ।
अयि गोकुलवासरता भवती प्रकृतेः परमांशवती भवती ।। २४ ।
वसुदेवसुता विदिता भवती हरिसोदरिका विदिता भवती ।
अयि अर्चिकयाऽभिधयाऽभिहिता प्रकृतेः परमांशवती भवती ।। २५ ।
अयि विन्ध्यविभूषिणिका भवती अयि कंसविनाशिनिका भवती ।
वरतोषितभक्तकुला भवती वरवाञ्छितदायिनिका भवती ।। २६ ।
सुरथार्चितपादयुगा भवती अयि दुर्गतिदारिणिका भवती ।
अयि रामसमर्चितपादयुगा अयि रावणरात्रिणिका भवती ।। २७ ।
अयि दक्षसुताऽभिहिता भवती सतिका व्रतिकाऽभिहिता भवती ।
अयि दारितदानवदैत्यकुला पतिभक्तिपरायणिका भवती ।। २८ ।
अयि हैमवती विदिता भवती वृषवाहनकप्रियका भवती ।
गणनाथसुता प्रथिता भवती अयि कार्तिकमातृवरा भवती ।। २९ ।
कमला कमलाकरमध्यगता कमलाश्रितपादयुगा भवती ।
अयि मङ्गलपूजितपादयुगा अयि मङ्गलभूपनुता भवती ।। ३० ।
अयि अश्वपतेस्तनया भवती तदुपासितपादयुगा भवती ।
सवितुः प्रसवे सहकारिणिका भवकारिणिका विदिता भवती ।। ३१ ।
विधिपूजितपादयुगा भवती अयि देवि सरस्वतिका भवती ।
अयि मानवमौनकदेवनुता वरगौरविसारिणिका भवती ।। ३२ ।
सुरभीक्षयवासरता भवती अयि रासकमण्डलगा भवती ।
अयि राधिकयाऽभिधयाऽभिहिता हरिवल्लभिका विदिता भवती ।।३३।
अयि कार्तिकमासिकपूर्णतिथिप्रभवोत्सवपूजितिका भवती ।
अयि गोपसमर्चितपादयुगा अयि बालकवृन्दनुता भवती ।। ३४ ।
अयि गोगणकार्चितपादयुगा सुरभीपरिषिक्तपदा भवती ।
विधिदैवतमौनकदम्बनुता हरिमानसमोदिनिका भवती ।। ३५ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि मङ्गलमङ्गलमोदयुता अयि मङ्गलदायिनिका भवती।
अयि मङ्गलकारिणिका भवती कुलसन्ततिकारिणिका भवती ॥ ३६ ।
तुलसीवनवासरता भवती अयि कृष्णमनोहरिका भवती।
अयि शङ्करशिष्यसुयज्ञनुता अयि भारतसंविदिता भवती ॥ ३७ ।
अयि बोधवती विदिता भवती परमर्द्धिपदाभिहिता भवती ।
अयि सम्पदिकापदसंविदिता बलकीर्तिविधायिनिका भवती ॥ ३८ ।
अयि काममहाश्रयिका भवती कमनीयतरा विदिता भवती ।
अयि चारुकुशेशयकान्तियुता कुलसन्ततिकारिणिका भवती ॥ ३९ ।
अयि चन्द्रकबिम्बविनिन्दकवक्त्रवरावरवस्त्रधरा भवती ।
कदलीतरुकाण्डविनिन्दकपादपराकृतदण्डयुगा भवती ॥ ४० ।
अयि माफलवृत्तकुचद्वयिका अयि पुष्पकदम्बवती भवती ।
परमाणुपुरस्कृतमध्यमिका अयि कृष्णमनोहरिका भवती ॥ ४१ ।
अयि सुन्दरिका अयि शान्ततरा अयि सस्मितवक्त्रवरा भवती ।
अयि वह्निविशुद्धवरांशुकिका अयि वक्रविलोचनिका भवती ॥ ४२ ।
अयि रत्नविभूषणिका भवती अयि रत्नकहारवती भवती ।
अयि भालगचन्दनबिन्दुमती कबरीवरभारभृता भवती ॥ ४३ ।
गजराजगतिर्विदिता भवती मृगराजकटिः प्रथिता भवती ।
अयि कोटिकचन्द्रकचन्द्रिकया समतैजसभारभृता भवती ॥ ४४ ।
परिपूर्णतमा प्रकृतिर्भवती त्रिगुणाऽखिलबीजवती भवती ।
अयि तप्तसुवर्णरुचिर्भवती रविकोटिसमप्रभिका भवती ॥ ४५ ।
स्मितशोभितवक्त्रवरा भवती वरबाहुसहस्रवती भवती ।
विविधायुधपाशधरा भवती गुणसम्मितलोचनिका भवती ॥ ४६ ।
अयि वह्निविशुद्धवरांशुकिका अयि रत्नविभूषणिका भवती ।
अयि सर्वविभूतिविधायिनिका अयि कृष्णरतिप्रदिका भवती ॥ ४७ ।
अयि मोक्षविधायिनिका भवती सुखदायिनिका विदिता भवती ।
अयि नाकविभूतिवितारिणिका कुलसन्ततिकारिणिका भवती ॥ ४८ ।
गृहसम्पदये गृहिणां भवती दहनाश्रयिका दहना भवती ।
अयि तापसगा तपरूपिणिका वरभूपगता रमिका भवती ॥ ४९ ।
अयि भानुगता प्रभिका भवती अयि चन्द्रगता शुभिका भवती ।
अयि पद्मगता शुचिशोभनिका समशक्तिपदा हरिगा भवती ॥ ५० ।
अयि चेतनशक्तिरहो भवती अयि चेतनचेतनिका भवती ।
जगतीगतशक्तिरये भवती जगतीजनजीवनिका भवती ॥ ५१ ।
अयि संसृतिकल्पलता भवती अयि शाश्वतिकस्थितिका भवती ।
विधिबुद्धिपदाऽभिहिता भवती फलरूपिणिका विदिता भवती ॥ ५२ ।
क्षुधिका तृषिकाऽभिहिता भवती दयिकापदसंविदिता भवती ।
अयि सुप्तिपदप्रथिता भवती अयि तन्द्रिपदप्रमिता भवती ॥ ५३ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षभिका क्षभिकागतजीवगता मतिकापदसंविदिता भवती ।
अयि शान्तसुरूपवती भवती त्रपिका युवतीगतिका भवती ॥ ५४ ।
अयि तुष्टिपदाभिहिता भवती अयि पुष्टिपदाभिहिता भवती ।
विविधभ्रमरूपधरा भवती अयि कान्तिपदप्रमिता भवती ॥ ५५ ।
जगदीशपुरःस्थितिका भवती जगदीशनिनादिनिका भवती ।
अयि सिंहविभूषितरत्नवरासनगा वरवाञ्छितदा भवती ॥ ५६ ।
गणनाथविधायिनिका भवती अयि दुर्गतिदारिणिका भवती ।
अयि राधिकयाऽभिधयाऽभिहिता कमलापदसंविदिता भवती ॥ ५७ ।
शुचिशुक्लसरस्वतिका भवती जडचेतनकारिणिका भवती ।
सवितुः प्रसवे सहकारिणिका अयि सर्गविधायिनिका भवती ॥ ५८ ।
अमृतोपमवृत्तवरा भवती परमाद्भुतशक्तिभृता भवती ।
अयि सर्वसुमङ्गलकारिणिका वरदायिनिका विदिता भवती ॥ ५९ ।
अयि जाह्नविका विदिता भवती तुलसीपदसंविदिता भवती ।
अयि कालिकयाऽभिधयाऽभिहिता अयि देवि वसुन्धरिका भवती ॥ ६० ।
अयि सुप्तिपदाभिहिता भवती मनसापदसंविदिता भवती ।
अयि मङ्गलचण्डिकयाऽभिधयाऽभिहिता कुलकारिणिका भवती ॥ ६१ ।
स्त्रधिकापदसंविदिता भवती अयि पितृमनोहरिका भवती ।
अयि षष्ठिकयाऽभिधयाऽभिहिता सुरहव्यवहा विदिता भवती ॥ ६२ ।
अयि दक्षिणिका विदिता भवती अयि रक्षिणिका विदिता भवती ।
अयि यक्षिणिकाचितिपादयुगा क्रतुसाक्षिणिका विदिता भवती ॥ ६३ ।
अयि देवि सरस्वतिका भवती हरिशक्तिमुखप्रभवा भवती ।
अयि कृष्णसमर्चितपादयुगा जडचेतनकारिणिका भवती ॥ ६४ ।
अयि भारतिका विदिता भवती अयि देवि सरस्वतिका भवती ।
अयि शारदिकापदसंविदिता अयि केसरिवाहनिका भवती ॥ ६५ ।
अयि संसृतिसंविदिता भवती अयि वागधिदैवतिका भवती ।
अयि देवि कुमारिकयाऽभिधयाऽभिहिता वरदायिनिका भवती ॥ ६६ ।
अयि बुद्धिविधायिनिका भवती अयि विभ्रमहारिणिका भवती ।
अयि चन्द्रकघण्टिकयाऽभिधयाऽभिहिता भुवनेश्वरिका भवती ॥ ६७ ।
अयि चन्दनलिप्तवपुर्भवती अयि रत्नकभूषणिका भवती ।
अयि रत्नसमर्पितपादयुगा अयि रत्नकगर्भवती भवती ॥ ६८ ।
अयि रत्नपयोधिगता भवती वसुधा वसुदा विदिता भवती ॥ ६९ ।
अयि वह्निविशुद्धवरांशुकिका अयि सस्मितवन्दितिका भवती ॥ ७० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जय देवि जलाश्रयिका भवती जलशीलवपुर्जलदा भवती ।
क्रतुकोलकवामगता भवती जय देवि जयावहिका भवती ॥ ७१ ।

अयि मङ्गलरूपिणिका भवती अयि मङ्गलदायिनिका भवती ।
अयि मङ्गलभूतिकरी भवती अयि मङ्गलकेश्वरिका भवती ॥ ७२ ।

अयि सर्वविधारिणिका भवती अयि सर्वविबोधवती भवती ।
अयि सर्वसमुद्भवशक्तिमती अयि सर्वमनोरथदा भवती ॥ ७३ ।

अयि पुण्यवती विदिता भवती अयि पुण्यविधायिनिका भवती ।
अयि देवि सनातनिका भवती अयि पुण्यजनाश्रयिका भवती ॥ ७४ ।

शरदिन्दुनिभाननिका भवती सितपङ्कजवर्णवती भवती ।
अयि विष्णुविपूजितपादयुगा पृथिवीपदसम्प्रथिता भवती ॥ ७५ ।

समसस्यवरालयिका भवती समसस्यवराढ्यतरा भवती ।
समसस्यवितारिणिका भवती समसस्यसुरूपिणिका भवती ॥ ७६ ।

अयि भूमिपदाभिहिता भवती अयि भूपतिजीवनिभा भवती ।
धरणीप्रतिपालपरायणिका धरणीपदसंविदिता भवती ॥ ७७ ।

अयि भूमिविभाविनिका भवती अयि भूमिपसौख्यकरा भवती ।
अयि पातकपुञ्जहरा भवती स्तवनेन वने प्रथिता भवती ॥ ७८ ।

अयि सर्वविभाविनिका भवती अयि भूमिपदाभिहिता भवती ।
अयि कश्यपतोकवरा भवती अयि कश्यपिकाऽभिहिता भवती ॥ ७९ ।

अचलापदसंविदिता भवती चलनच्युतिरूपवती भवती ।
अयि विश्वविधारिणिका भवती अयि विश्वभरापदिका भवती ॥ ८० ।

सितपङ्कजवर्णवती भवती अयि पापविनाशिनिका भवती ।
अयि गङ्गिकयाऽभिधयाऽभिहिता हरिविग्रहसम्भविका भवती ॥ ८१ ।

अयि कृष्णकतुल्यवपुर्भवती परमा सतिका विदिता भवती ।
अयि वह्निविशुद्धवरांशुकिका अयि रत्नविभूषणिका भवती ॥ ८२ ।

शरदिन्दुशताभविभा भवती स्मितशोभितवक्त्रवरा भवती ।
अयि सुस्थिरयौवनिका भवती वसुदेवसुतप्रियका भवती ॥ ८३ ।

अयि शान्ततरा सुभगा भवती कबरीवरभारभृता भवती ।
अयि मालतिका वरमाल्ययुता भ्रमरावलिका वलिता भवती ॥ ८४ ।

अयि सिन्दुरबिन्दुमती निटिले अयि चन्दनबिन्दुमती भवती ।
वरगण्डविनिर्मितपत्रवरा मृगनाभिकगन्धवती भवती ॥ ८५ ।

अधरोष्ठविनिन्दितबिम्बफला सकटाक्षविलोचनिका भवती ।
द्विजपङ्क्तिविनिन्दितमौक्तिकहारमनोहरकण्ठवरा भवती ॥ ८६ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि माफलघोरकठोरकुचद्वयभारमनोहरिका भवती ।
स्मितशोभितवक्त्रवरा भवती कठिनोरुनितम्बवती भवती ॥ ८७ ।
कदलीवरकाण्डविनिन्दकमूरुयुगं रुचिरं दधती भवती ।
स्थलपद्मविभापरिमोषकपादसयावककुङ्कुमिका भवती ॥ ८८ ।
सुरभूपतिमूर्धजमाल्यविनिःसृतपुष्परजःकणिकारुणितम् ।
सुरसिद्धमुनीन्द्रतपस्विकदम्बकमौलिमिलद्भ्रमराकलितम् ॥ ८९ ।
चरणं तव देवि दधे शिरसा वरनिर्वृत्तिकामुकमुक्तिकरम् ।
अयि कामिकदम्बकभोगकरं कुलसन्ततिकारणकारणकम् ॥ ९० ।
वरदायिनिका विदिता भवती वरणीयवपुर्विदिता भवती ।
वरदैवतिका विदिता भवती अयि भक्तदयाकरिका भवती ॥ ९१ ।
अयि विष्णुवरप्रदिका भवती अयि विष्णुपदीविदिता भवती ।
सतिका व्रतिका विदिता भवती कुलसन्ततिकारिणिका भवती ॥ ९२ ।
हरगीतकमुग्धहरिप्रियकाङ्गसमुद्भविका विदिता भवती ।
हरिगात्रसमुद्भविका भवती द्रवरूपिणिकाऽभिहिता भवती ॥ ९३ ।
सुरभीक्षयरासकमण्डलके अयि सर्गपुरोभविका भवती ।
अयि शंकरसंनिधिगा भवती द्रवरूपिणिका विदिता भवती ॥ ९४ ।
वृषभानुसुता ललितोत्सवके शुचिसेवकगोपयुते महिते ।
अयि कार्तिकपूर्णतिथौ प्रकटा द्रवरूपिणिका विदिता भवती ॥ ९५ ।
अयि कोटिकयोजनदीर्घतरा सुरभीक्षयसंवरिका भवती ।
द्रवरुपिणिका विदिता भवती कुलसन्ततिकारिणिका भवती ॥ ९६ ।
अयि षष्टिकलक्षकयोजनगा अयि दैर्घ्यचतुर्गुणिका भवती ।
अयि विष्णुनिवासगता भवती द्रवरूपिणिका विदिता भवती ॥ ९७ ।
गुणपङ्क्तिकलक्षकयोजनगा अयि दैर्घ्यकपञ्चगुणा भवति ।
विधिलोकगताप्रथिता भवती द्रवरूपिणिका विदिता भवती ॥ ९८ ।
गुणपङ्क्तिकलक्षकयोजनगा अयि दैर्घ्यचतुर्गुणिका भवती ।
शिवलोकनिवासिनीका भवती द्रवरूपिणिका विदिता भवती ॥ ९९ ।
ध्रुवलोकगता प्रमिता भवती अयि लक्षकयोजनगा भवती ।
अयि दैर्घ्यकसप्तगुणा भवती द्रवरूपिणिका विदिता भवती ॥ १०० ।
अयि चन्दिरमन्दिरगा भवती रविमण्डलमध्यगता भवती ।
तपसि प्रथिते महती भवती जनलोकगता विदिता भवती ॥ १०१ ।
महसि प्रथिते महती भवती महनीयतरा विदिता भवती ।
रजताद्रिगता हिमवाहिनिका द्रवरूपिणिका विदिता भवती ॥ १०२ ।
अयि माघवने भवनेऽभिहिता अयि मन्दसमञ्जनिका भवती ।
अयि भोगिनिवासगता भवती अयि भोगवती विदिता भवती ॥ १०३


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि जह्नुसुता विदिता भवती अयि सागरतारिणिका भवती ।
क्षितिगाऽलकनन्दिकयाऽभिधयाऽभिहिता द्रवरूपिणिका भवती ॥ १०४ ।

अयि सौरभदोहसमा कृतके अयि शारदचन्द्रनिभोत्थितिके ।
अयि चन्दनमाविशये भवती कलिकालगता जलमा भवती ॥ १०५ ।

कुलपाविनिका विदिता भवती कुलतारिणिका विदिता भवती ।
शिवशंकरमूर्धगता भवती कुलसन्ततिकारिणिका भवती ॥ १०६ ।

इन्द्रनीलमणिरम्यसानुके नीलभूभृतिकृतास्पदे शिवे ।
पौत्रगो युगमुदारदर्शने मातरुद्दिश दयावलोकनैः ॥ १०७ ।

इत्येतदतिनिर्विण्णरघुनाथमुखोद्गतम् ।
सन्ततिस्तबकपुष्पस्तबकप्रतिकञ्चुकम् ॥ १०८ ।
आवर्तयति यः शक्रदृक्सङ्ख्यामितमादरात् ।
पुत्रपौत्रानुवृत्तिः स्यात्तस्य यावत् स्थिरा धरा ॥ १०९ ।

इति श्रीब्रह्मीभूतकाशीनाथतनयसौभद्रेयरघुनाथकृतौ
सन्ततिस्तवे पञ्चमं शतकम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## षष्ठं शतकम्

अयि विष्णुपदाब्जभवा भवती विधिरम्यकमण्डलुगा भवती।
हरहर्षिणिका हरितर्षिणिका कुलसन्ततिकारिणिका भवती॥ १।
द्रवरूपिणिका द्रवदैवतिका वृषभानुसुताङ्गभवा भवती।
हरिगात्रसमुद्भविका भवती हरिमानविका विदिता भवती॥ २।
अयि रूपविधर्षितयौवतिका नवयौवनिका विदिता भवती।
विविधाभरणाऽमरणा भवती शरणागतसाधुतरा भवती॥ ३।
अयि शारदमध्यदिनाब्जमुखी अयि सस्मितवक्त्रवरा भवती।
सुमनोहरिका द्रुतकाञ्चनभा अयि शारदचन्द्रविभा भवती॥ ४।
अयि चिक्कणकप्रभिका भवती अयि चिक्कणिका विदिता भवती।
अयि शुद्धकसत्त्वकरूपिणिका कुलसन्ततिकारिणिका भवती॥ ५।
अयि पीनकठोरनितम्बवती सुनितम्बयुगन्धरिका भवती।
कठिनस्तनयुग्मवती भवती अयि वक्त्रकटाक्षवती भवती॥ ६।
अयि वङ्किमकाश्रितमूर्धजभारभृता वरकङ्कतिका भवती।
अयि मालतिका वरमाल्ययुता अयि सिन्दुरबिन्दुमती भवती॥ ७।
अयि चन्दनबिन्दुमती भवती मृगनाभिकबिन्दुमती भवती।
अयि देवि मनोरमगण्डयुगा अयि बिम्बफलाधरिका भवती॥ ८।
अयि दाडिमबीजकदन्तकपङ्क्तिसमुज्ज्वलिका विदिता भवती।
अयि वह्निविशुद्धवरांशुकिका अयि कृष्णसमीपगता भवती॥ ९।
अयि कामवती विदिता भवती अयि शीलवती विदिता भवती।
त्रपयापरयाऽवनता भवती अयि कृष्णविलोकनिका भवती॥ १०।
प्रभुरूपविमूर्च्छितिका भवती पुलकाङ्कितविग्रहिका भवती।
वदनद्युतिनिर्जितफुल्लसुमा नवसङ्गमलालसिका भवती॥ ११।
अयि चन्द्रककोटिसमप्रभया अयि राधिकया विदिता भवती।
अयि कोपसुरत्नमुखाब्जिकयाऽरुणपङ्कजलोचनया भवती॥ १२।
अयि पीतकचम्पकवर्णिकया बहुवज्रविभूषणया भवती।
वररत्नविभूषितवह्निविशुद्धवरांशुकनीविभृता भवती॥ १३।
स्थलपद्मकमापरिमोषककोमलरञ्जितरक्तपदा भवती।
अयि भीततरा हरिहृत्कमले हरिदत्तवराभयिका भवती॥ १४।
विरजापदसंविदिता भवती अयि चन्दनकाननगा भवती।
नदिकावररूपधरा भवती अयि कोटिकयोजनगा भवती॥ १५।
अयि दैर्घ्यंचतुर्गुणिका भवती हरिकीर्तिसुरूपवती भवती।
बहुशो हरिहूतपदा भवती अयि तोयसमुत्थितिका भवती॥ १६।
बहुभूषणमूर्तिमती भवती अयि सिद्धकयोगिनिका भवती।
हरिवीर्यधरा विदिता भवती अयि सप्तसमुद्रसुता भवती॥ १७।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शुभिकापदसंविदिता भवती अयि गोपकुलप्रभवा भवती ।
भयचन्द्रकमण्डलमध्यगता अयि तैजसरूपधरा भवती ॥ १८ ।

अयि रत्नगता विदिता भवती अयि हेमगता मणिगा भवती ।
वरयौवतवक्त्रगता भवती अयि राजनिकायगता भवती ॥ १९ ।

अयि पल्लवपुष्पगता भवती परिपक्वफलाधिगता भवती ।
अयि सस्यगता विदिता भवती नृपनिर्जरगेहगता भवती ॥ २० ।

अयि नूतनपत्रगता भवती अयि सौरभदोहगता भवती ।
प्रभिकापदसंविदिता भवती अयि गोपकुलप्रभवा भवती ॥ २१ ।

तुलसीवनमध्यगता भवती रविमण्डलमध्यगता भवती ।
अयि लोचनमध्यगता भवती अयि पावकमध्यगता भवती ॥ २२ ।

अयि यक्षकनिर्जरनागगता नरसिंहगता विदिता भवती ।
अयि वैष्णवतापसमौनगता वरविप्रगताभिहिता भवती ॥ २३ ।

पतिपुत्रवती युवतीगतिका यशसा विदिते विदिता भवती ।
अयि तैजससङ्गगता भवतो कुलसन्ततिकारिणिका भवती ॥ २४ ।

अयि शान्तिपदाभिहिता भवती अयि गोपकुलप्रभवा भवती ।
अयि रासकमण्डलगा भवती मधुपुष्पकविस्तरगा भवती ॥ २५ ।

अयि विश्ववनीस्थितिका भवती अयि पङ्कजसम्भवगा भवती ।
कमला हृदयाब्जगता भवती अयि वैष्णवशाक्तगता भवती ॥ २६ ।

अयि तापसधर्मगता भवती अयि धार्मिकपौरुषगा भवती ।
वरनिर्वृत्तिसाधनिका भवती कुलसन्ततिकारिणिका भवती ॥ २७ ।

क्षभिकापदसंविदिता भवती अयि गोपकुलप्रभवा भवती ।
हरिसङ्गमसंशुभिका भवती कुलसन्ततिकारिणिका भवती ॥ २८ ।

क्षमिका गतिका विदिता भवती अयि विष्णुगताऽभिहिता भवती ।
अयि वैष्णवधार्मिकधर्मगता अयि दुर्बलगा विदिता भवती ॥ २९ ।

अयि निर्जरतापसगा भवती बुधमानसगा प्रमिता भवती ।
अयि रोषनिवारिणिका भवती कुलसन्ततिकारिणिका भवती ॥ ३० ।

अयि रामरमाविदिता भवती जनकान्वयजाऽभिहिता भवती ।
अयि वेदवती विदिता भवती द्रुपदान्वयसम्भविका भवती ॥ ३१ ।

अयि नाकरमा विदिता भवती गुणहायनिका विदिता भवती ।
अयि शङ्करदत्तवरा भवती अयि पञ्चपतिर्विदिता भवती ॥ ३२ ।

रसनाग्रगवेदवती भवती कमलावरमूर्तिगता भवती ।
अघनाशनवृत्तवरा भवती कुलसन्ततिकारिणिका भवती ॥ ३३ ।

सुकृतध्वजसम्भविका भवती अयि माधविका प्रभवा भवती ।
अयि पद्मिनिका विदिता भवती अयि शारदचन्द्रमुखी भवती ॥ ३४ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि शारदपङ्कजलोचनिका अयि बिम्बफलाधरिका भवती।
करपल्लवपादतलारुणिका नतनाभिमनोरमिका भवती ॥ ३५ ।
तदधस्त्रिवलीकलिता भवती सुनितम्बयुगन्धरिका भवती।
अयि शीतसुखोष्णवपुर्भवती अयि ग्रीष्मकशीतलिका भवती ॥ ३६ ।
अयि कृष्णसुकेशवती भवती वटमण्डलचारुतरा भवती।
अयि पीतकचम्पकवर्णवती अयि सौन्दरसुन्दरिका भवती ॥ ३७ ।
तुलसीपदसंविदिता भवती बदरीवनतापसिका भवती।
हरिकामिनिका मनसा भवती फलतोयवराशनिका भवती ॥ ३८ ।
तपकर्तृकपञ्चतपा भवती हिमतोयगता शिशिरे भवती।
अयि वारिदवृन्दपयोधरिका अयि वार्षिकमासगता भवती ॥ ३९ ।
अयि पत्रसमाशवती भवती अयि वायुसमाशवती भवती।
अयि तापसगीतगुणा भवती कृशकोदरिका प्रमिता भवती ॥ ४० ।
अयुताब्दनिराकृतभोजनिका अयि लक्ष्यविवर्जितिका भवती।
अयि एकपदाश्रितभूमितला कमलोद्भवदृष्टचरा भवती ॥ ४१ ।
सुरभीक्षयवासवती भवती अयि गोपकुलप्रभवा भवती।
हरिवल्लभिका हरिकिङ्करिका हरिवामकला विदिता भवती ॥ ४२ ।
हरिसख्यवती विदिता भवती हरिरासरता विदिता भवती।
हरिकामिनिका विदिता भवती अयि मूर्च्छितमानसिका भवती ॥ ४३ ।
तरुरूपिणिका विदिता भवती अयि विश्वविपाविनिका भवती।
अयि पूततरा कुसुमेषु वरा हरिजीवितरूपधरा भवती ॥ ४४ ।
अयि लक्ष्मि सरस्वतिका भवती अयि दुर्गमदारिणिका भवती।
अयि सौरि शुभे वृषभानुसुता कुलसन्ततिकारिणिका भवती ॥ ४५ ।
शतरूपिणिका मनुमोहिनिका अयि देवकहूतिपदा भवती।
स्वधयाऽभिधयाऽभिहिता भवती अयि पावककामिनिका भवती ॥ ४६ ।
अयि दक्षिणिका क्रतुपूरणिका प्रतिबिम्बवता विदिता भवती।
अयि रोहिणिका शशिकामिनिका भुवनेश्वरगेहिनिका भवती ॥ ४७ ।
शचिकापदसंविदिता भवती दितिकापदसंविदिता भवती।
अदितिर्दनुजारिसुता भवती कुलसन्ततिकारिणिका भवती ॥ ४८ ।
अयि किन्नरकेशमनोहरिका कलसीसुतगेहिनिका भवती।
अयि अत्रिकुलोद्भवकारिणिका कुलसन्ततिकारिणिका भवती ॥ ४९ ।
अयि कोटविका विदिता भवती तुलसोपदसंविदिता भवती।
अयि देवि अरुन्धतिका भवती कुलसन्ततिकारिणिका भवती ॥ ५० ।
अयि गौतमवंशविरोपिणिका हिमभूधरकामिनिका भवती।
अयि तारकयाऽभिधयाऽभिहिता अयि मन्दकमध्यमिका भवती ॥ ५१ ।
अयि विष्णुपदी विदिता भवती अयि वेदवती विदिता भवती।
दमयन्तिनलान्वयवर्धिनिका मनसा पदसंविदिता भवती ॥ ५२ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि पुष्टिपदाभिहिता भवती अयि तुष्टिपदाभिहिता भवती।
स्मृतिरूपिणिका मतिका महती अयि देवि वसुन्धरिका भवती ॥ ५३ ।
अयि कालकरालतरा भवती अयि षष्ठिधनान्वयदा भवती।
अयि मङ्गलचण्डिसुमङ्गलिका कुलसन्ततिकारिणिका भवती ॥ ५४ ।
अयि धर्मनितम्बवती भवती अयि मूर्तिपदाभिहिता भवती।
अयि शान्तिपदाभिहिता भवती अयि कान्तिपदाभिहिता भवती ॥ ५५ ।
परिका क्षमिका विदिता भवती अयि सुप्तिपदाभिहिता भवती।
अयि तन्द्रिपदाभिहिता भवती क्षुधिका तृषिका विदिता भवती ॥ ५६ ।
पवनान्वयवर्धिनिका भवती जगतीहितकारिणिका भवती।
यजमानवराभयदा भवती कुलसन्ततिकारिणिका भवती ॥ ५७ ।
अयि देवि विरागमनोहरिका शुभकर्मविधायिनिका भवती।
दिनयामिनिका वरसन्धिगता मुनिसङ्घसमर्चितिका भवती ॥ ५८ ।
अयि देवि विभावरिका भवती अयि वासरमानिनिका भवती।
अयि सम्पदिका धृतिका भवती अयि कीर्तिपदाभिहिता भवती ॥ ५९ ।
कृतिरूपिणिका विदिता भवती शुभिका जगतीप्रथिता भवती।
प्रभिकाऽखिलतैजसगा भवती शिविका शिविकारिणिका भवती ॥ ६० ।
अयि अट्टकहासवती भवती अयि उग्ररदा विदिता भवती।
अयि उग्रकदण्डवती भवती अयि कोटविका विदिता भवती ॥ ६१ ।
अयि योगिनिका विदिता भवती अयि डाकिनिका विदिता भवती।
अयि सिंहनिनादवती भवती अमरारिविदारिणिका भवती ॥ ६२ ।
अयि दाहनबाणवती भवती अयि वारुणपाशवती भवती।
अयि देवि महेश्वरकास्त्रवती अयि वैष्णवकास्त्रवती भवती ॥ ६३ ।
अयि पद्मजकास्त्रवती भवती अयि पाशुपतास्त्रवती भवती।
अयि खड्गवती विदिता भवती अयि शूलवती विदिता भवती ॥ ६४ ।
श्रुतिमातृतया विदिता भवती सवितुर्वरभर्गवती भवती ।
अयि तापितकाञ्चनवर्णवती ज्वलदग्निसमानरुचिर्भवती ॥ ६५ ।
अयि वार्षिकवासरमध्यगभानुसहस्रविभाभृतिका भवती ।
स्मितशोभितवक्त्रवरा भवती मणिहीरकभूषणिका भवती ॥ ६६ ।
अयि वह्निविशुद्धवरांशुकिका अयि भक्तवशंवदिका भवती।
सुखदा परमुक्तिविधायिनिका विधिमानसमादनिका भवती ॥ ६७ ।
अयि शान्ततरा विदिता भवती अयि कान्ततरा विदिता भवती।
अयि सर्वकसम्पदिका भवती अयि सर्वकदायिनिका भवती ॥ ६८ ।
अयि वेदनियामिनिका भवती अयि वेदसुरूपवती भवती।
अयि वेदकबीजवती भवती अयि वेदविधायिनिका भवती ॥ ६९ ।
अयि कृष्णकसव्यवहप्रभवा अयि रासकमण्डलगा भवती।
अयि सुन्दरिका अतसीरुचिका वटमण्डलिका विदिता भवती ॥ ७० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रविवार्षिककायवती भवती अयि सुस्थिरयौवनिका भवती ।
सितचम्पकवर्णवती भवती सुखदृश्यमनोहरिका भवती ॥ ७१ ।
अयि शारदपार्वणकोटिविधुप्रभया परिछिन्नमुखी भवती ।
अयि शारदमध्यदिनाब्जविभा परिमोचनलोचनिका भवती ॥ ७२ ।
परिपूर्णतमा कमला भवती अयि शुद्धकसत्त्ववती भवती ।
अयि सर्वकसौभगसंयुत्तिका रमणीगणमूर्धगता भवती ॥ ७३ ।
अयि नाकगता असि नाकरमा अयि शक्रसमृद्धिरहो भवती ।
अयि भूमितलेऽखिलनागरमा अयि राजसुराजरमा भवती ॥ ७४ ।
गृहिणां गृहकेषु रमा भवती गृहिणां वरसम्पदिका भवती ।
अयि सर्वकमङ्गलमङ्गलिका सुरभिःसुरभिप्रसवा भवती ॥ ७५ ।
अयि दक्षिणिका क्रतुकामिनिका यजमानफलप्रदिका भवती ।
अयि पद्मिनिका सुरमा भवती अयि दुग्धपयोधिसुता भवती ॥ ७६ ।
शुभिका शरदिन्दुगता भवती प्रभिका रविमण्डलगा भवती ।
अयि रत्नविभूषणगा भवती फलगा जलगा नृपजा भवती ॥ ७७ ।
नृपकामिनिका सुगता भवती सुरकामिनिका सुगता भवती ।
गृहकामिनिकाऽखिलसस्यगता वरवस्त्रगता विदिता भवती ॥ ७८ ।
अयि संस्कृतचत्त्वरगा भवती सुरमूर्तिगता प्रमिता भवती ।
अयि मङ्गलकुम्भगता भवती मणिमौक्तिकमाल्यगता भवती ॥ ७९ ।
अयि देवि मनोहरिका भवती मणिवासवहीरगता भवती ।
अयि दोहगता वरचन्दनगा तरुपल्लवगा विदिता भवती ॥ ८० ।
अयि देवि सहस्रदलाब्जगता अयि कर्णिकवासरता भवती ।
अयि शारदपार्वणकोटिविधुप्रभिका परिमुष्टिकरा भवती ॥ ८१ ।
निजतैजससञ्ज्वलिता भवती सुखदृश्यमनोहरिका भवती ।
द्रुतकाञ्चनवर्णवती भवती अयि मूर्तिमती सतिका भवती ॥ ८२ ।
अयि रत्नविभूषणिका भवती अयि पीतकवाससिका भवती ।
स्मितशोभितवक्त्रवती भवती प्रसदाननिकेन्दुमुखी भवती ॥ ८३ ।
अयि सुस्थिरयौवनिका भवती अयि यौवतगौणयुता भवती ।
अयि सर्वसमृद्धिविधायिनिका महती कमला विमला भवती ॥ ८४ ।
अयि रत्नकवासवसारविनिर्मितवायुविमानगता भवती ।
प्रभया जगतीस्तरिका भवती अयि देवि वरप्रदिका भवती ॥ ८५ ।
सितचम्पकवर्णवती भवती अयि रत्नकभूषणिका भवती ।
स्मितशोभितवक्त्रवरा भवती निजभक्तदयाकुलिका भवती ॥ ८६ ।
अयि कोटिकचन्द्रसमप्रभिका अयि रत्नकमाल्यधरा भवती ।
जगतः प्रसुका विदिता भवती कुलसन्ततिकारिणिका भवती ॥ ८७ ।
कमलालयवासिनिका भवती अयि नारनिकेतनिका भवती ।
अयि कृष्णकवल्लभिका भवती महती रमिका विदिता भवती ॥ ८८ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि पद्मदलेक्षणिका भवती अयि पद्ममुखी विदिता भवती।
अयि पद्मवरासनिका भवती अयि पद्मिनिका विदिता भवती ॥ ८९।
अयि वैष्णविका विदिता भवती अयि सर्वकसम्पदिका भवती।
अयि सर्वकपूजितपादयुगा हरिभक्तिविधायिनिका भवती ॥ ९०।
अयि हर्षविधायिनिका भवती अयि कृष्णनियामिनिका भवती।
अयि कृष्णकवक्षसि संस्थितिका अयि रत्नरमा विदिता भवती ॥ ९१।
अयि शोभनिका विदिता भवती अयि वृद्धिपदाभिहिता भवती।
अयि सम्पदधिष्ठितिकारिणिका अयि वृद्धिविधायिनिका भवती ॥ ९२।
अयि वैष्णवलोकगता भवती महती कमला विदिता भवती।
अयि दुग्धपयोधिगता भवती रमिकापदसंविदिता भवती ॥ ९३।
अयि नाकगता रमिका भवती अयि वासवगेहगता भवती।
नृपहर्म्यगता रमिका भवती गृहिणां गृहगा रमिका भवती ॥ ९४।
अयि गेहगता गृहदेवतिका सुरभिः किल सागरजा भवती।
अयि दक्षिणिका क्रतुकामिनिका अदितिः सुरमातृवरा भवती ॥ ९५।
कमला कमलालयिका भवती सुरहव्यवहा विदिता भवती।
पितृकव्यवहा स्वधिका भवती कुलसन्ततिकारिणिका भवती ॥ ९६।
अयि वैष्णवरूपधरा भवती अयि सर्वविधारिणिका भवती।
अयि वैष्णवशक्तिवरा भवती वसुधारिणिका विदिता भवती ॥ ९७।
अयि शुद्धकसत्त्ववती भवती हरिपादपरायणिका भवती।
अयि रोषविवर्जितमानसिका वरदा शुभशारदिका भवती ॥ ९८।
परमार्थविधायिनिका भवती हरिदास्यविधायिनिका भवती।
परमातृतया विदिता भवती जगतीजनजीवनिका भवती ॥ ९९।
अयि सर्वकबान्धवरूपिणिका वरवैरिविदारिणिका भवती ।
पुरुषार्थचतुष्टयकारिणिका कुलसन्ततिकारिणिका भवती ॥ १००।
इन्द्रनीलमणिरम्यसानुके नीलभूभृतिकृतास्पदे शिवे।
पौत्रगोयुगमुदारदर्शने मातरुद्दिश दयाऽवलोकनैः ॥ १०१।

इत्येतदतिनिर्विण्णरघुनाथमुखोद्गतम् ।
सन्ततिस्तवकं पुष्पस्तवकप्रतिकञ्चुकम् ॥ १०२।
आवर्तयति यः शक्रदृक्सङ्ख्यामितमादरात्।
पुत्रपौत्रानुवृत्तिः स्यात्तस्य यावत् स्थिरा धरा॥ १०३।

इति श्रीब्रह्मीभूतकाशीनाथतनयसौभद्रेयरघुनाथकृतौ
सन्ततिस्तवे षष्ठं शतकम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## सप्तमं शतकम्

अयि शक्तिपदाभिहिता भवती क्रियकापदिका विदिता भवती ।
अयि देवि सुवाहिकयाऽभिधयाऽभिहिता कुलकारिणिका भवती ॥ १ ॥
दहनप्रियकाऽभिहिता भवती अयि कालविधायिनिका भवती ।
परिपाककरी विदिता भवती ध्रुविका अयि नारगतिर्भवती ॥ २ ॥
अयि दाहिकयाऽभिधयाऽभिहिता दहनक्षमिका विदिता भवती ।
अयि वह्निहृदब्जशया भवती अयि तुष्टिविधायिनिका भवती ॥ ३ ॥
भवसारतरा विदिता भवती भववारिधितारिणिका भवती ।
सुरजीवनदायिनिका भवती सुरपोषणकारिणिका भवती ॥ ४ ॥
अयि देवि मनोहरिका भवती अयि रूपसुयौवनिका भवती ।
शतचन्द्रनिभाननिका भवती अयि वेदवती विदिता भवती ॥ ५ ॥
अयि गौणवती विदिता भवती अतिरूपवती विदिता भवती ।
सतिका व्रतिका विदिता भवती सितचम्पकवर्णवती भवती ॥ ६ ॥
अयि रत्नविभूषणिका भवती अयि शुद्धकसत्त्ववती भवती ।
प्रकृतेरपि अंशवती भवती अयि सस्मितवक्त्रवरा भवती ॥ ७ ॥
वरदायिनिका शुभिका भवती स्वधिकापदिका विदिता भवती ।
शतपद्मपदाश्रितपादयुगा वरलक्षणसंयुतिका भवती ॥ ८ ॥
अयि पद्ममुखी विदिता भवती अयि पद्मजनुर्विदिता भवती ।
अयि पद्मविलोचनिका भवती अयि पद्मकरा कमला भवती ॥ ९ ॥
विधिमानससम्भविका भवती अयि सुस्थिरयौवनिका भवती ।
पितृदेवगणैः परिपूज्यपदा पितृकर्मफलप्रदिका भवती ॥ १० ॥
अयि पित्रसुतुल्यतरा भवती द्विजजीवनरूपिणिका भवती ।
पितृकर्मविधेरधिदैवतिका पितृकर्मफलप्रदिका भवती ॥ ११ ॥
अयि शाश्वतिकाऽभिहिता भवती अयि सत्यतरा प्रमिता भवती ।
अयि पुण्यवपुर्विदिता भवती अयि सुव्रतिका प्रथिता भवती ॥ १२ ॥
अयि सर्गविधौ प्रकटीकृतिका प्रलये प्रलयीकृतिका भवती ।
अयि वायुविमादिनिका भवती अयि हव्यवहा सुनिभा भवती ॥ १३ ॥
स्वधिकापदसंविदिता भवती अयि दक्षिणिकाऽभिहिता भवती ।
अयि गोपकराजसुता भवती सुरभिक्षयलोकगता भवती ।
अयि शीलवती विदिता भवती हरिवल्लभिकाऽभिहिता भवती ॥ १४ ॥
वृषभानुसुतावरिका भवती सहगामिनिका विदिता भवती ।
अयि धन्यतरा अयि मान्यतरा अयि दृष्टिमनोहरिका भवती ॥ १५ ॥
अतिसुन्दरिकाऽवगता भवती अयि यौवतसौभगिका भवती ।
सुदती सतिका व्रतिका भवती अयि वेदवती विदिता भवती ॥ १६ ॥
अयि यौवतगौणवती भवती अतिरूपवती विदिता भवती ।
कलिकाकुलिका विदिता भवती अयि कोमलगात्रवरा भवती ॥ १७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि कान्ततराऽभिहिता भवती अयि पद्मविलोचनिका भवती ।
सुनितम्बवती विदिता भवती अयि सुस्तनिका विदिता भवती ॥ १८ ।
अयि नीलमणिप्रभिका भवती वटमण्डलमण्डलिका भवती ॥ १९ ।
स्मितशोभितवक्त्रवरा भवती अयि रत्नविभूषणिका भवती ।
सितचम्पकवर्णवती भवती अयि बिम्बफलाधरिका भवती ॥ २० ।
मृगलोचनिका विदिता भवती अयि कामविधौ निपुणा भवती ।
वरकामिनिका वरहंसगता अयि भावरताऽवगता भवती ॥ २१ ।
रसभावविदा विदिता भवती अयि कृष्णककामिनिका भवती ।
अयि रासगता रसिका भवती रसकोत्सुकिका प्रथिता भवती ॥ २२ ।
द्रुतकाञ्चनवर्णवती भवती विधुकोटिसमप्रभिका भवती ।
कमनीयतरा विदिता भवती अयि सुन्दरिकाऽभिहिता भवती ॥ २३ ।
सुमनोहरिका प्रथिता भवती कमलास्यवती विदिता भवती ।
अयि कोमलगात्रवरा भवती कमलायतलोचनिका भवती ॥ २४ ।
कमलासनपूज्यतरा भवती कमलाङ्गसमुद्भविका भवती ।
अयि वह्निविशुद्धवरांशुकिका अयि बिम्बफलाधरिका भवती ॥ २५ ।
सुदती सतिका व्रतिका भवती अयि मालतमाल्यवती भवती ।
कबरीवरभारवती भवती स्मितशोभितवक्त्रवरा भवती ॥ २६ ।
अयि रत्नविभूषणिका भवती वरवेषवती विदिता भवती ।
शुचिवारिसुता रुचिरा भवती मुनिमानसमोहिनिका भवती ॥ २७ ।
मृगनाभिकबिन्दुमती भवती शुचिचन्दनचन्द्रवती भवती ।
अयि सिन्दुरबिन्दुमती भवती अलकाधरकोज्वलिका भवती ॥ २८ ।
अयि शस्तनितम्बवती भवती विपुलोच्चनितम्बकुचा भवती ।
स्मरदेवसमाश्रयरूपिणिका स्मरवाणनिपीडितिका भवती ॥ २९ ।
प्रकृतेर्वरषष्ठकभागवती अयि बालकपालिनिका भवती ।
अयि षष्ठिकयाऽभिधयाऽभिहिता अयि वैष्णवशक्तिवरा भवती ॥ ३० ।
अयि बालकदायिनिका भवती अयि मातृगणा विदिता भवती ।
अयि देवचमूः प्रमिता भवती अयि कार्त्तिकमादनिका भवती ॥ ३१ ।
असुसंघसमानमिता भवती अयि साध्वि शुचिव्रतिका भवती ।
अयि जीवनदायिनिका भवती अयि बालकमातृवरा भवती ॥ ३२ ।
अयि रक्षणकारिणिका भवती सततं शिशुपागवंशता भवती ।
अयि योगिनिका विदिता भवती अयि सिद्धिसुयोगनिका भवती ॥ ३३ ।
प्रियकव्रतवंशवहा भवती मणिराजविमानगता भवती ।
अयि मालिनिका सुतपालिनिका अयि देवि मनोहरिका भवती ॥ ३४ ।
कमनीयतरा विदिता भवती सितचम्पकवर्णवती भवती ।
सततस्थिरयौवनिका भवती स्मितचारुमुखाम्बुजिका भवती ॥ ३५ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि रत्नविभूषणिका भवती करुणामयिका विदिता भवती।
अयि योगजसिद्धिमती भवती अयि भक्तसमुद्धरिका भवती॥ ३६।
अयि सिद्धिपदाभिहिता भवती अयि शान्तिपदाभिहिता भवती।
शुभिका अयि देवचमूर्भवती वरदा सुतदा धनदा भवती॥ ३७।
सुखदा वरनिर्वृतिदा भवती अयि मायिनिका विदिता भवती।
अयि सिद्धकयोगिनिका भवती अयि सारतराऽभिहिता भवती॥ ३८।
अयि शारदिका कथिता भवती परदैवतशक्तिवरा भवती॥ ३९।
अयि बालकपालिनिका भवती अयि मङ्गलदायिनिका भवती।
अयि मङ्गलिका विदिता भवती शुभकर्मफलप्रदिका भवती॥ ४०।
अयि पूज्यतरा विदिता भवती अयि सिद्धतराभिहिता भवती।
प्रकृतेरसकांशकरूपिणिका कुलसन्ततिकारिणिका भवती॥ ४१।
निजभक्तविलोचनगा भवती अयि कार्त्तिकजीवनिभा भवती।
अयि शुद्धकसत्त्ववती भवती सुररक्षणकारिणिका भवती॥ ४२।
नरवन्दितपादवरा भवती अयि सृष्टिविहीनमना भवती।
अयि रिष्टिविहीनमना भवती धनदा जयदाऽवनिदा भवती॥ ४३।
अयि दारविधायिनिका भवती वरतोकविधायिनिका भवती।
अयि मानविधायिनिका भवती अयि धर्मविधायिनिका भवती॥ ४४।
अयि वेदविधायिनिका भवती अयि पूजितपादयुगा भवती।
अयि कीर्तिविधानविधायिनिका रिपुघातिनिका विदिता भवती॥ ४५।
महतीश्वरिकाऽभिहिता भवती अयि मङ्गलदायिनिका भवती।
अयि षष्ठिकयाऽभिधयाऽभिहिता कुलसन्ततिकारिणिका भवती॥ ४६।
अयि चण्डि सुदक्षतरा भवती अयि मङ्गलमङ्गलिका भवती।
अयि मङ्गलदक्षतरा भवती अयि मङ्गलभूपनुता भवती॥ ४७।
अयि मङ्गलभौमनुता भवती अयि मङ्गलचण्डितरा भवती।
अयि दुर्गमदैत्यविदारिणिकाऽपरमूर्तिधरा विदिता भवती॥ ४८।
प्रकृतिः परमेश्वरिका भवती करुणावरुणालयिका भवती।
अतिचाक्षुषविग्रहिका भवती अयि यौषितदैवतिका भवती॥ ४९।
अयि शङ्करपूजितपादयुगा परतः परिकाऽभिहिता भवती।
त्रिपुरस्य वधे त्रिपुरा भवती कुलसन्ततिकारिणिका भवती॥ ५०।
अयि षोडशवार्षिकरूपधरा अयि सुस्थिरयौवनिका भवती।
अयि बिम्बफलाधरिका भवती सुदती अयि शुद्धतरा भवती॥ ५१।
शतपद्मनिभाननिका भवती सितचम्पकवर्णवती भवती।
अयि नीलसरोजविलोचनिका जगतीजनधातृवरा भवती॥ ५२।
अयि सर्वसमृद्धिविधायिनिका भवसागरवाडविका भवती।
भवसंकटहारिणिका भवती मुदमङ्गलकारिणिका भवती॥ ५३।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुदमङ्गलदक्षतरा भवती मुदमङ्गलदायिनिका भवती।
शुभिकापदसंविदिता भवती अयि मङ्गलदक्षतरा भवती ॥ ५४।
अयि मङ्गलिकाऽभिहिता भवती अयि मङ्गलयोग्यतरा भवती।
अयि मङ्गलमङ्गलिका भवती अयि सज्जनमङ्गलदा भवती ॥ ५५।
अयि मङ्गलकालयिका भवती अयि पूज्यतरा प्रमिता भवती।
दिनमङ्गलपूजितपादयुगा अयि मङ्गलभूपनुता भवती ॥ ५६।
अयि मङ्गलयामिनिका भवती अयि मङ्गलमङ्गलिका भवती।
भवमङ्गलधारिणिका भवती कुलसन्ततिकारिणिका भवती ॥ ५७।
वरनिर्वृतिमङ्लदायिनिका भवसारतरा विदिता भवती।
अयि मङ्गलधारिणिका भवती विधिपारगता प्रमिता भवती ॥ ५८।
अयि देवि अभङ्गसुखप्रदिका प्रतिमङ्गलपूज्यतरा भवती।
अयि सर्वकमङ्गलिका भवती कुलसन्ततिकारिणिका भवती ॥ ५९।
मनसापदसंविदिता भवती अयि आस्तिकसौम्यसुता भवती।
अयि शक्रसमर्चितपादयुगा कुलसन्ततिकारिणिका भवती ॥ ६०।
सत्तिका प्रवराऽभिहिता भवती परतः परिका परमा भवती।
करुणावरुणालयिका भवती अयि शुद्धकसत्त्ववती भवती ॥ ६१।
अयि रिष्टिविवर्जितिका भवती अयि सृष्टिविवर्जितिका भवती।
भगिनीसुरसङ्गता भवती कुलसन्ततिकारिणिका भवती ॥ ६२।
क्षभिकापदसंविदिता भवती क्षभिकानुतगौणगणा भवती।
अयि सिद्धकयोगिनिका भवती मनसा सुरपूज्यपदा भवती ॥ ६३।
अयि गोगणकाधिनियामिनिका अयि गोगणकादिभवा भवती।
अयि गोगणसंप्रसवा भवती अयि गोगणकप्रथमा भवती ॥ ६४।
सुरभिक्षयलोकसमुद्भविका सुरभीवदसंविदिता भवती।
हरिसव्यवहप्रभवा भवती कुलसन्ततिकारिणिका भवती ॥ ६५।
अयि ऋद्धिविधायिनिका भवती अयि वृद्धिविधायिनिका भवती।
अयि मुक्तिविधायिनिका भवती कुलसन्ततिकारिणिका भवती ॥ ६६।
अयि सर्वमनोरथदायिनिका परमा कमला विदिता भवती।
वृषभानुसुतासखिका भवती कुलसन्ततिकारिणिका भवती ॥ ६७।
अयि गोगणमातृवरा भवती अयि कल्पलता त्रिदिता भवती।
अयि पायसदायिनिका भवती अयि बुद्धिविधायिनिका भवती ॥ ६८।
धनदायिनिका शुभिका भवती अयि भद्रतराऽभिहिता भवती।
अयि गोगणदायिनिका भवती कुलसन्ततिकारिणिका भवती ॥ ६९।
अयि कीर्तिविधायिनिका भवती यशसा सितभाविनिका भवती।
अयि धर्मविधायिनिका भवती कुलसन्ततिकारिणिका भवती ॥ ७०।
प्रकृतेरपि रूपिणिका भवती परसंविदये विदिता भवती।
जगती जननी समका सुगता समका सुनियामिनिका भवती ॥ ७१।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि जीवनियामिनिका भवती अयि मुक्तिविधायिनिका भवती ।
अयि कृष्णगता सुनियामिनिका अयि रासनियामिनिका भवती ॥ ७२ ।
सकलार्थविधायिनिका भवती वृषभानुसुता विदिता भवती ।
अयि राधिकयाऽभिधयाऽभिहिता कुलसन्ततिकारिणिका भवती ।७३ ।
महती खलु दैवतिका भवती अयि रासविधायिनिका भवती ।
सितचम्पकवर्णवती भवती शरदिन्दुसमानमुखा भवती ॥ ७४ ।
अयि कोटिनिशेशविभासवती शरदम्बुजलोचनिका भवती ।
अयि बिम्बफलाधरिका भवती पृथुकोच्चनितम्बवती भवती ॥ ७५ ।
रसनायुतरम्यनितम्बवती अयि कुन्दकदन्तवती भवती ।
अयि ओमकवाससंवृतिका अयि वह्निविशुद्धपटा भवती ॥ ७६ ।
स्मितशोभितवक्त्रवरा भवती करिकुम्भयुगस्तनिका भवती ।
रविसंख्यकवार्षिकरूपधरा अयि रत्नविभूषणिका भवती ॥ ७७ ।
रससिन्धुचलालहरी भवती अयि भक्तदयाकुलिका भवती ।
अयि माल्लिकमालतमाल्यधरा वरकेशविराजितिका भवती ॥ ७८ ।
सुकुमारतराङ्गलता भवती अयि सुस्थिरयौवनिका भवती ।
अयि रासकमण्डलमध्यगता वरकाभयहस्तवरा भवती ॥ ७९ ।
अयि सिंहवराननगा भवती अयि यौवतमण्डलगा भवती ।
अयि कृष्णमनोहरिका भवती श्रुतिबोधितरूपधरा भवती ॥ ८० ।
परमेश्वरिका विदिता भवती अयि अष्टदलाम्बुजगा भवती ।
अयि मूलसमर्चितपादयुगा कुलसन्ततिकारिणिका भवती ॥ ८१ ।
अयि अग्रगमाल्यवती भवती अयि कोणगमाधविका भवती ।
अयि रत्नकमालिकयाऽभिधयाऽभिहिता खलु दक्षिणगा भवती ॥८२ ।
निर्ऋतौ वरशीलवती भवती दलपश्चिमगेन्दुकला भवती ।
अयि उत्तरगा च परावतिका अनिले किल कल्पलता भवती ॥
अयि सुन्दरिका प्रियकारिणिका शिवकोणगता विदिता भवती ॥ ८३ ।
अयि देवि परेश्वरिका भवती अयि रासनियामिनिका भवती ।
अयि रासकमण्डलवासिनिका अयि कृष्णमनोहरिका भवती ॥ ८४ ।
त्रिजगद्जननी विदिता भवती करुणावरुणालयिका भवती ।
विधिविष्णुसमर्चितपादयुगा अयि देवि सरस्वतिका भवती ॥ ८५ ।
रविमण्डलगा विदिता भवती अयि शाङ्करिकाऽभिहिता भवती ।
अयि जह्नुसुता विदिता भवती कमलाव्रतिकाऽभिहिता भवती ॥८६ ।
अयि षष्ठिनरेशनुता भवती अयि मङ्गलचण्डिवरा भवती ।
तुलसीसतिका व्रतिका भवती कमला कमलालयगा भवती ॥ ८७ ।
अयि दुर्गमदैत्यविदारिणिका अयि सर्वकरूपिणिका भवती ।
प्रकृतिः परमार्थविधायिनिका करुणार्णविका विदिता भवती ॥ ८८ ।
भवसागरपारगता भवती भवकाननपारगता भवती ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवसागरपारविधायिनिका अयि भक्तसमुद्धरिका भवती ॥ ८९ ।
अयि सर्वनुता विदिता भवती अयि सर्वजनन्यसिता भवती ।
शिवशक्तिवराऽभिहिता भवती महनीयमहाद्भुतिका भवती ॥ ९० ।
अयि दुर्गमदैत्यविदारिणिका अयि दुर्गतिवारिणिका भवती ।
अयि सर्वसमर्चितपादयुगा शिवशक्तिरहो प्रवला भवती ॥ ९१ ।
अयि सर्वजनन्यसिता भवती महिषासुरमर्दिनिका भवती ।
अयि सर्वमनोऽधिनियामिनिका अयि सर्वनियामिनिका भवती ॥ ९२ ।
अयि दुर्गमसंकटघातिनिका दितिजाधमपातिनिका भवती ।
अयि दुर्गिकयाभिधयाऽभिहिता कुलसन्ततिकारिणिका भवती ॥ ९३ ।
अयि वैष्णवसेवितपादयुगा अयि शैवसमर्चितिका भवती ।
अयि सर्गविसर्गविधायिनिका स्थितिकारिणिका प्रकृतिर्भवती ॥ ९४ ।
अरिखड्गगदेषु धनुर्धरिका परिघाङ्कितपाणितला भवती ।
शितशूलभुशुण्डिधरा भवती अयि मूर्धकशङ्खधरा भवती ॥ ९५ ।
अयि कालकरालतरा भवती नयनत्रयसंविदिता भवती ।
बहुभूषणभूषितगात्रवरा अयि नीलगिरिप्रभिका भवती ॥ ९६ ।
दशपादमुखाम्बुजिका भवती मधुकैटभनाशिनिका भवती ।
वरदाऽभयदा विदिता भवती विधिपालिनिका प्रथिता भवती ॥ ९७ ।
अयि अक्षकमाल्यवती भवती अयि घोरपरश्वधिका भवती ।
गदिकेषुकवज्रधरा भवती अयि पद्मधनुर्मतिका भवती ॥ ९८ ।
अयि कुण्डिकयाऽञ्चितचारुकरा वरदण्डवती विदिता भवती ।
असिशक्तिमती विदिता भवती अयि चर्मवती विदिता भवती ॥ ९९ ।
अयि घण्टिकया शुभिका भवती अयि चक्रसुदर्शनिका भवती ।
अयि अम्बुजशूलकपाशकरा अयि पानकपात्रकरा भवती ॥ १०० ।
अरुणप्रभिकाऽभिहिता भवती अयि रक्तसरोजगता भवती ।
अयि अस्फुटबीजकरूपिणिका महिषासुरमर्दिनिका भवती ॥ १०१ ।
महती कमला विदिता भवती मुनिमानसगामिनिका भवती ।
सुरसंघविपद्विनिवारिणिका कुलकारिणिका विदिता भवती ॥ १०२ ।

इन्द्रनीलमणिरम्यसानुके नीलभूभृतिकृतास्पदे शिवे ।
पौत्रगोयुगमुदारदर्शने मातरुद्दिश दयावलोकनैः ॥ १०३ ।
इत्येतदतिनिर्विण्णरघुनाथमुखोद्गतम् ।
सन्ततिस्तबकं पुष्पस्तबकप्रतिकञ्चुकम् ॥ १०४ ।
आवर्तयति यः शक्रदृक्संख्यामितमादरात् ।
पुत्रपौत्रानुवृत्तिः स्यात्तस्य यावत् स्थिरा धरा ॥ १०५ ।

इति श्रीब्रह्मीभूतकाशीनाथतनयसौभद्रेयरघुनाथकृतौ
सन्ततिस्तवे सप्तमं शतकम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## अष्टमं शतकम्

चलमीनविलोचनिका भवती चलपद्मविलोचनिका भवती।
चलखञ्जनगञ्जनलोचनिका कुलसन्ततिकारिणिका भवती ॥ १ ।
अयि चक्रसुदर्शनिका भवती मुसलाञ्चितचारुकरा भवती।
अयि शूलकशंखकसीरधरा वरबाणधनुर्धरिका भवती ॥ २ ।
अयि घण्टिकया शुभिका भवती अयि कुन्दकसन्निभिका भवती ।
अयि शुम्भनिशुम्भविमर्दिनिका कुलसन्ततिकारिणिका भवती ॥ ३ ।
अयि वाग्भवबीजसुरूपिणिका अयि देवि सरस्वतिका भवती।
अयि सच्चिदसीमसुखैकरसा रसनाऽधरसन्निहिता भवती ॥ ४ ।
विधियौवतरूपधरा भवती हरियौवतरूपधरा भवती।
हरयौवतरूपधरा भवती वरयौवतचारुतरा भवती ॥ ५ ।
रसकोणकयन्त्रगता भवती त्रिषमास्त्रकयन्त्रगता भवती।
अयि अष्टदलाम्बुजयन्त्रगता अयि शालपुरस्थितिका भवती ॥ ६ ।
घटयन्त्रगता विदिता भवती प्रतिभा सुगता विदिता भवती ।
वरबाणकलिङ्गगता भवती रविसोमगता विदिता भवती ॥ ७ ।
अयि नन्दजनुर्विदिता भवती अयि रक्तरदा विदिता भवती ।
अयि शाकसुपालितपाल्यकुला अयि शाकभृता विदिता भवती ॥ ८ ।
अयि दुर्गमदारिणिका भवती अयि भीमशरीरवती भवती ।
भ्रमरी भ्रमरीवृत्तिका भवती अयि वैधसशक्तिवरा भवती ॥ ९ ।
अयि देवि महेश्वरिका भवती अयि कार्त्तिकमानसगा भवती ।
अयि वैष्णविका वरकोलवपुर्नरसिंहसमाकृतिका भवती ॥ १० ।
अयि शक्रसमाकृतिका भवती वरवज्रधरा विदिता भवती ।
अयि चण्डकमुण्डविनाशिनिका सुरपालिनिका विदिता भवती ॥ ११ ।
अयि वैष्णवशक्तिवरा भवती अयि चेतनिकाऽभिहिता भवती ।
अयि बुद्धिपदाऽभिहिता भवती अयि सुप्तिपदाभिहिता भवती ॥ १२ ।
क्षुधिकापदसंविदिता भवती प्रतिबिम्बपदाभिहिता भवती ।
परशक्तिपदाभिहिता भवती तृषिकापदसंविदिता भवती ॥ १३ ।
अयि शान्तिपदाभिहिता भवती अयि जातिपदाभिहिता भवती ।
त्रपिकापदसंविदिता भवती क्षमिकापदसंविदिता भवती ॥ १४ ।
अयि कीर्तिपदाभिहिता भवती कमलापदसंविदिता भवती ।
धृतिकापदसंविदिता भवती अयि वृत्तिपदाभिहिता भवती ॥ १५ ।
श्रुतिकास्मृतिकापदसंविदिता करुणापदसंविदिता भवती ।
अयि तुष्टिपदाभिहिता भवती अयि पुष्टिपदाभिहिता भवती ॥ १६ ।
अयि मातृतया विदिता भवती भ्रमिकापदसंविदिता भवती ।
दृढसर्गविधायिनिका भवती कुलसन्ततिकारिणिका भवती ॥ १७ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि मान्यतरा अयि पूज्यतरा जगतीजनधात्रितरा भवती ।
अयि देवि विशालविलोचनिका अयि सर्वहृदन्तरगा भवती ॥ १८ ।
अयि सर्वकमङ्गलमङ्लिका विधिकारिणिका विदिता भवती ।
हरिपालिनिका विदिता भवती अयि संहृतिकारिणिका भवती ॥ १९ ।
अयि शक्रनियामिनिका भवती अयि कालनियामिनिका भवती ।
अयि पाशिनियामिनिका भवती निधिनाथनियामिनिका भवती ॥ २० ।
हुतवाहनियामिनिका भवती अयि शेषनियामिनिका भवती ।
अयि नैर्ऋतवायुनियामिनिका अयि ईशनियामिनिका भवती ॥ २१ ।
अयि सर्वजगज्जननी भवती अयि सुस्थिरयौवनिका भवती ।
कुलवर्धनिका कुलकारिणिका कुलसन्ततिकारिणिका भवती ॥ २२ ।
अयि तारिणिका विदिता भवती प्रियकव्रतपुत्रनुता भवती ।
जलजाक्षि अनूपमिका भवती कुलसन्ततिकारिणिका भवती ॥ २३ ।
जगती जननी विदिता भवती ललिता परमेश्वरिका भवती ।
अयि तैजसिका सुदुरासदिकाऽखिलदेवमयीश्वरिका भवती ॥ २४ ।
भवरूपिणिका विदिता भवती महती भ्रमकारिणिका भवती ।
विधिविष्णुहरोद्भविका भवती जनमानसमोहिनिका भवती ॥ २५ ।
स्थितिकारिणिका विदिता भवती अयि कामविधायिनिका भवती ।
अयि सर्गविसर्गविधायिनिका अयि कालविभावरिका भवती ॥ २६ ।
बहुविभ्रमकारिणिका भवती दुरतिक्रमरूपधरा भवती ।
अयि विश्वविसर्गविधायिनिका कमलाकमलालयिका भवती ॥ २७ ।
भवरोहिणिका विदिता भवती परतः परिकाऽभिहिता भवती ।
निजभक्तकमोहविनाशिनिका कुलसन्ततिकारिणिका भवती ॥ २८ ।
अयि दैवतदैवतिका भवती जगतीजनधात्रितरा भवती ।
अयि भक्तवराशुविधायिनिका जगतीजनमोहिनिका भवती ॥ २९ ।
महती भ्रमकारिणिका भवती अयि नीरधिशायिनिका भवती ।
अयि कालविभावरिका भवती अयि देवि महानिशिका भवती ॥ ३० ।
अयि मोहविभावरिका भवती अयि देवि मदोत्कटिका भवती ।
विभुका वशगा विदिता भवती अयि मान्यतराऽभिहिता भवती ॥ ३१ ।
अयि देवि महासुखशेवधिका महनीयतराऽभिहिता भवती ।
अयि देवि महाजनमान्यतरा महिका बहुमायिनिका भवती ॥ ३२ ।
मधुमत्यभिधानवरा भवती परका परकेषुपरा भवती ।
त्रपिका परपुष्टिविधायिनिका परपुष्टिसुरूपिणिका भवती ॥ ३३ ।
क्षमिकापदसंविदिता भवती अयि कीर्तिपदाभिहिता भवती ।
अयि कान्तिपदाभिहिता भवती करुणावरुणालयिका भवती ॥ ३४ ।
कमनीयकविग्रहिका भवती जगतीजनवन्द्यपदा भवती ।
अयि बोधकसुप्तसुषुप्तिपदा परमा परमेश्वरिका भवती ॥ ३५ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परसौख्यपरायणिका भवती अयि एकपदाभिहिता भवती।
अयि एकसुरूपिणिका भवती परिकल्पितभेदवती भवती ॥ ३६ ।
अयि भिन्नवपुर्विदिता भवती त्रयिका त्रिकवर्गवती भवती।
अयि तुर्यपदाभिहिता भवती अयि तुर्यपदप्रगता भवती ॥ ३७ ।
अयि पञ्चकभूतवरेश्वरिका अयि पञ्चमिका विदिता भवती।
अयि षष्ठपरेश्वरिका भवती अयि षष्ठिकयाऽभिहिता भवती ॥ ३८ ।
अयि सप्तदिनेश्वरिका भवती अयि सप्तमिका विदिता भवती।
अयि सप्तकसप्तवरप्रदिका अयि अष्टमिकाऽभिहिता भवती ॥ ३९ ।
वसुनाथपदाभिहिता भवती नवकग्रहरूपिणिका भवती।
अयि देवि महेश्वरिका भवती नवरागकलाऽभिहिता भवती ॥ ४० ।
अयि रम्यकविग्रहिका भवती नवसङ्ख्यनवेश्वरिका भवती।
दशमी दशदिक्परिपूजितिका दशदिग्भववैभविका भवती ॥ ४१ ।
अयि एकदशा विदिता भवती अयि रुद्रनिषेवितिका भवती।
अयि रुद्रतिथिप्रियका भवती अयि रुद्रगणाधिपतिर्भवती ॥ ४२ ।
रविसम्मितचारुभुजा भवती रविसम्मितसत्तिथिका भवती।
रविजन्मविधायिनिका भवती कुलसन्ततिकारिणिका भवती ॥ ४३ ।
त्रिदशात्मतया विदिता भवती त्रिदशाख्यगणप्रियका भवती।
त्रिदशाभिधयाविदिता भवती अयि विश्वकदैवतिका भवती ॥ ४४ ।
अयि देवि चतुर्दशशक्रवरप्रदिका मनुमातृवरा भवती।
अयि पञ्चदशी विदिता भवती अयि पञ्चदशीतिथिका भवती ॥ ४५ ।
अयि षोडशिकाऽभिहिता भवती अयि षोडशचारुभुजा भवती।
अयि षोडशचन्द्रकलामयिका अयि तामसकोदयिका भवती ॥ ४६ ।
अयि निर्गुणिका विदिता भवती अयि देवनियामिनिका भवती।
अयि षोडशचन्द्रकभानुविभापरिभिन्नकलेवरिका भवती ॥ ४७ ।
अयि शम्भुजतैजसचारुमुखी यमजाद्भुतकेशवरा भवती।
अयि वैष्णवबाहुवरा भवती अयि चान्द्रमसस्तनिका भवती ॥ ४८ ।
अयि देवि महेन्द्रजमध्यमिका अयि वारुणकोरुवरा भवती।
अयि भौमनितम्बवती भवती अयि वैधसपादयुगा भवती ॥ ४९ ।
अयि मानवपादवराङ्गुलिका अयि ऐन्द्रकराङ्गुलिका भवती।
अयि कौत्सकवेरकनासिकिका प्रजिकापतिदन्तवरा भवती ॥ ५० ।
अयि पावकजातविलोचनिका अयि सान्ध्यकजभ्रुकुटी भवती।
अयि वातजकर्णवरा भवती कुलसन्ततिकारिणिका भवती ॥ ५१ ।
शिवशङ्करदत्तकशूलवरा हरिदत्तकचक्रवरा भवती।
अयि पाशिकदत्तकशङ्खधरा सुहुताशकशक्तिधरा भवती ॥ ५२ ।
अयि मारुतदत्तकचापधरा वरसायकशोभिकरा भवती।
अयि देवि महेन्द्रवितीर्णपविप्रतिशोभितचारुकरा भवती ॥ ५३ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वरघण्टकरा विदिता भवती अयि कालकदण्डवती भवती ।
अयि वैधसकाक्षकमाल्यधरा वरचारुकमण्डलुका भवती ॥ ५४ ।

रविदत्तकरम्भिकरम्बवती वररोमककूपवती भवती ।
अयि कालकदत्तकखड्गधरा अयि निर्मलचर्मधरा भवती ॥ ५५ ।

अयि नैरधनिर्मलहारधरा अजराम्बरधारिणिका भवती ।
अयि चौडमणिप्रतिभूषितिका कटकाङ्गदकुण्डलिका भवती ॥ ५६ ।

अयि निर्मलचन्द्रकखण्डधरा अयि नूपुरहारिपदा भवती ।
अयि कण्ठगभूषणिका भवती वरवारिधिसन्नुतिका भवती ॥ ५७ ।

अयि विश्वसुकर्मसमर्चितिका वरकोर्मिकया विदिता भवती ।
हिमभूधरदत्तसुवाहिनिका हरिवाहिनिका विदिता भवती ॥ ५८ ।

अयि शेषकदत्तकनागकहारविभूषितकण्ठवती भवती ।
निधिनाथवितीर्णसुरापरिपूर्णकपानकपात्रवती भवती ॥ ५९ ।

सकलामरतैजससंभृतिका विविधायुधरत्नवती भवती ।
महिषासुरमर्दिनिका भवती कुलसन्ततिकारिणिका भवती ॥ ६० ।

अयि देवि सरस्वतिका भवती अयि शुम्भनिशुम्भहरा भवती ।
सकलामरमौननुता भवती कुलसन्ततिकारिणिका भवती ॥ ६१ ।

अयि देवि निलिम्पनियामिनिका अयि भक्तकुलार्तिहरा भवती ।
अयि दानवकान्तकरूपिणिका अजरामरिकाऽनघिका भवती ॥ ६२ ।

अयि देवि महेश्वरिका भवती अयि भक्तिविलभ्यपदा भवती ।
अयि देवि महाबलविक्रमिका त्रिधिशङ्करगिणुवपुर्भवती ॥ ६३ ।

अयि देवि अनन्तकविक्रमिका स्थितिसर्गविधायिनिका भवती ।
अयि देवि विसर्गविधायिनिका अयि कान्तिवितारिणिका भवती ॥ ६४ ।

वरताण्डवतुष्टतरा भवती अयि मोदविधायिनिका भवती ।
अयि माधविका विदिता भवती कुलसन्ततिकारिणिका भवती ॥६५ ।

अयि देववरेश्वरिका करुणानिधिका विदिता भवती ।
अयि शुम्भनिशुम्भकभूतभया परपारवराम्बुधिका भवती ॥ ६६ ।

प्रणतार्तिविनाशिनिका भवती शरणागतरक्षिणिका भवती ।
निजभक्तकदक्षिणिका भवती कुलसन्ततिकारिणिका भवती ॥ ६७ ।

अयि कोशसमुद्भविका भवती सुरपूजितपादयुगा भवती ।
स्तवकप्रतितुष्टतरा भवती अयि उत्तमरूपिणिका भवती ॥ ६८ ।

अयि देवि दयामयिका भवती अयि लोकविमोहिनिका भवती ।
अयि देवि सुरालयसानुगता सुरवैरिविनाशिनिका भवती ॥ ६९ ।

अयि धूम्रत्रिलोचनपातिनिका अयि चण्डविनाशिनिका भवती ।
अयि रक्तकबीजविघातिनिका अयि मुण्डकमारिणिका भवती ॥ ७० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि शुम्भनिशुम्भनिशुम्भिनिका परिका परमेश्वरिका भवती।
भवसम्भवमोहनिवारिणिका भवमोहविधायिनिका भवती॥ ७१।

अयि देवि महेश्वरिका भवती परमा करुणालयिका भवती।
अयि वाग्भवकूटकतुष्टतरा अयि वाग्भववाच्यतरा भवती॥ ७२।

कलमापरबिन्दुकविग्रहिका कलमापरबिन्दुसुखा भवती।
अयि कामकभूपतिमोदिनिका अयि ईश्वरतोषिणिका भवती॥ ७३।

अयि मायिनिका विदिता भवती अयि मोदपरा विदिता भवती।
वरराज्यविधायिनिका भवती हरिभानुहरेन्द्रनुता भवती॥ ७४।

अयि भोगविवर्धिनिका भवती अयि भाग्यविवर्धिनिका भवती।
अयि भूमिविवर्धिनिका भवती कुलसन्ततिकारिणिका भवती॥ ७५।

अरुणासुरनाशिनिका भवती भ्रमरीपदसंविदिता भवती।
अविचिन्त्यवपुर्विदिता भवती अविभाव्यवपुर्विदिता भवती॥ ७६।

भुवनेश्वरिका विदिता भवती अयि हेममहेश्वरिका भवती।
परमेश्वरिका विदिता भवती भवमङ्गलकारिणिका भवती॥ ७७।

रविकोटिसमप्रभिका भवती स्मरकोटिकसुन्दरिका भवती।
अयि चित्रविलेपनिका भवती अयि चित्रकवाससिका भवती॥ ७८।

अयि चित्रकमाल्यधरा भवती विविधाभरणावरणा भवती।
अयि मुष्टिगतभ्रमरावलिका वरकाभयचारुकरा भवती॥ ७९।

अयि शान्ततरा विदिता भवती करुणामृतसागरिका भवती।
भ्रमरालिविराजितमाल्यधरा भ्रमरीगणसंवृतिका भवती॥ ८०।

वरयौवतवेषधरा भवती वरयौवतचारुतरा भवती।
श्रुतिशंसितरूपवती भवती सकलागमगीतगुणा भवती॥ ८१।

अयि सर्वमयी विदिता भवती अयि सर्वकरूपिणिका भवती।
अयि सर्वकमङ्गलरूपिणिका अयि सर्वबुधा विदिता भवती॥ ८२।

अयि सर्वजनन्यमिता भवती अयि सर्वमहेश्वरिका भवती।
शिवकारिणिका शिवरूपिणिका अयि विष्टरकश्रवसा भवती॥ ८३।

अयि सर्गविसर्गविकारिणिका स्थितिकारिणिका विदिता भवती।
अयि पद्मविलोचनिका भवती अयि सर्वविधारिणिका भवती॥ ८४।

अयि विश्वकतैजसवैबुधिका अयि सूत्रविराजपदा भवती।
विकृताकृतिका विदिता भवती अविकारिणिका विदिता भवती॥ ८५।

अयि दुर्गतिदारिणिका भवती जगदादिभवा विदिता भवती।
अयि दुष्टजनार्गलिका भवती अयि नीलसरस्वतिका भवती॥ ८६।

अयि देवि निरर्गलभर्गवती अयि पीतवराम्बरिका भवती।
अयि कालिकयाऽभिधयाऽभिहिता अयि उग्रविलोचनिका भवती। ८७।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि उग्रतरा विदिता भवती त्रिपुरे वरसुन्दरिका भवती।
अयि भैरविका विदिता भवती अयि देवि मतङ्गजिका भवती॥ ८८।

अयि धूमवती विदिता भवती छिदिगोचरशीर्षवरा भवती।
अयि पायससागरसम्भविका अयि शाकम्भरी विदिता भवती॥ ८९।

अयि शुम्भनिशुम्भविदारिणिका अयि वृत्रनिवर्हिणिका भवती।
अयि धूम्रविलोचनपातिनिका अयि रक्तकबीजहरा भवती॥ ९०।

अयि चण्डकमुण्डविनाशिनिका अयि दानवकान्तकरा भवती।
शिवकारिणिका शिवरूपिणिका विजयापदसंविदिता भवती॥ ९१।

अयि जह्नुमिहर्षिसुता भवती अयि शारदिका विदिता भवती।
विकचाननिका महिका भवती करुणापदसंविदिता भवती॥ ९२।

वरतैजसरूपिणिका भवती असुरूपिणिका विदिता भवती।
अतिशंसितरूपवती भवती अयि भूतकरूपवती भवती॥ ९३।

अयि विश्वतनुर्विदिता भवती करुणावरुणालयिका भवती।
अयि धर्मतनुर्विदिता भवती अयि देवतनुर्विदिता भवती॥ ९४।

परिबोधवती विदिता भवती निजगायकपालिनिका भवती।
वरदाऽभयदा विदिता भवती सवितुर्वरदैवतिका भवती॥ ९५।

अयि देवि सरस्वतिका भवती स्वधिका किल दक्षिणिका भवती।
हुतभुक्प्रियकापदसंविदिता सकलागमनेतिपदा भवती॥ ९६।

अयि सर्वचिदन्तरगा भवती परदैवतिका विदिता भवती।
भ्रमरैः परिवेष्टितिका भवती भ्रमरीपदसंविदिता भवती॥ ९७।

वरसद्गुणरत्नखनिर्भवती भुवनेश्वरिका विदिता भवती।
अयि मत्तककोकिलभाषिणिका वरदेशशिखामणिका भवती॥ ९८।

जपिकाकुसुमाभविभा भवती अयि देवि कुमारितरा भवती।
परमेश्वरिका विदिता भवती अयि रक्तसरोजगता भवती॥ ९९।

अयि रक्तकगन्धविलेपनिका अयि रक्तकमाल्यधरा भवती।
अयि रक्तकवाससिका भवती चतुराननिका विदिता भवती॥ १००।

अयि देवि चतुर्भुजिका भवती समदृष्टिरहो विदिता भवती।
स्रुवस्रुक्परिधारिणिका भवती अयि माल्यसुकुण्डिकिका भवती॥१०१।

अयि सर्वविभूषणभूषितिका अयि ऋक्श्रुतिभाषिणिका भवती।
अयि हंसकपत्रवती भवती अयि आहवनाग्निगता भवती॥ १०२।

अयि देवि चतुष्पदिका भवती अयि अष्टककुक्षिवरा भवती।
अयि सप्तकशीर्षवती भवती अयि देवि महेश्वरिका भवती॥ १०३।

अयि अग्निवराननिका भवती अयि रुद्रशिखा विदिता भवती।
अयि केशवचित्तचरा भवती कुलसन्ततिकारिणिका भवती॥ १०४।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इन्द्रनीलमणिरम्यसानुके नीलभूभृतिकृतास्पदे शिवे ।
पौत्रगोयुगमुदारर्शने मातरुद्दिश दयावलोकनैः ॥ १०५ ।

इत्येतदतिनिर्विण्णरघुनाथमुखोद्गतम् ।
सन्ततिस्तवकं पुष्पस्तबकप्रतिकञ्चुकम् ॥ १०६ ।

आवर्तयति यः शक्रदृक्सङ्ख्यामितमादरात् ।
पुत्रपौत्रानुवृत्तिः स्यात्तस्य यावत् स्थिरा धरा ॥ १०७ ।

इति श्रीब्रह्मीभूतकाशीनाथतनयसौभद्रेयरघुनाथकृतौ
सन्ततिस्तवे अष्टमं शतकम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## नवमं शतकम्

अयि वर्णकशक्तिरहो भवती अयि वामकदेवपदा भवती ।
प्रियकापदसंविदिता भवती अयि सत्यपदाभिहिता भवती ॥ १ ।
अयि विश्वपदाभिहिता भवती अयि गद्रपदाभिहिता भवती ।
अयि देवि विलासिनिका भवती प्रभिकावतिका विदिता भवती ॥२।
जपिकापदसंविदिता भवती अयि शान्तपदाभिहिता भवती ।
अयि कान्तपदाभिहिता भवती अयि देवि सरस्वतिका भवती ॥३ ।
अयि दुर्गिकयाऽभिधयाऽभिहिता अयि विद्रुमचारुपदा भवती ।
अयि देवि विशालपदा भवती अयि ईशपदाभिहिता भवती ॥ ४ ।
अयि वैभविका विदिता भवती विमलापदसंविदिता भवती ।
अयि देवि तमोऽपहरा भवती अयि सूक्ष्मपदाभिहिता भवती ॥ ५ ।
अयि विश्वकयोनिरहो भवती जयिकापदसंविदिता भवती ।
वशिकापदकाभिहिता भवती अयि पद्मनिकेतनिका भवती ॥ ६ ।
परिका शुभिका विदिता भवती अयि भद्रपदाभिहिता भवती ।
त्रिपदापदसंविदिता भवती श्रुतिविंशतिवर्णवती भवती ॥ ७ ।
अतसीसुमसन्निभवर्णवती अयि विद्रुमवर्णवती भवती ।
स्फटिकाकृतिवर्णवती भवती अयि पद्मकचारुरुचिर्भवती ॥ ८ ।
तरुणारुणसूतकवर्णवती अयि शङ्खकचन्द्रनिभा भवती ।
अयि कुन्दविभाऽपहरा भवती अयि पद्मकरागहरा भवती ॥ ९ ।
अयि विद्रुमपद्मदलाभविभा अयि मौक्तिकचारुतरा भवती ।
अयि शक्रकनीलमणिप्रभिका अयि कुङ्कुमकप्रभिका भवती ॥ १० ।
अयि अञ्जनगञ्जिनिका भवती अयि रक्तकवर्णवती भवती ।
अयि देवि विदूरभवप्रभिका मधुसन्निभवर्णवती भवती ॥ ११ ।
रजनीवरकुन्दकदुग्धनिभा रविकान्तिसमप्रभिका भवती ।
शुकपुच्छनिभप्रभिका भवती शतपत्रनिभप्रभिका भवती ॥ १२ ।
अयि केतकिकासुमसन्निभिका अयि माल्लिकसूनसमा भवती ।
करवीरकवर्णवती भवती कुलसन्ततिकारिणिका भवती ॥ १३ ।
हुतवाहकवर्णवती भवती अयि वैधसवर्णवती भवती ।
अयि सौम्यकवर्णवती भवती अयि ऐशकवर्णवती भवती ॥ १४ ।
सवितुर्वरवर्णवती भवतो अदितीसुतवर्णवती भवती ।
अयि गौरववर्णवती भवती भगदैवतवर्णवती भवती ॥ १५ ।
अयि मैत्रकवारुणवर्णवती गणनायकवर्णवती भवती ।
अयि अर्यमकेश्वरववर्णती सुरशिल्पिकवर्णवती भवती ॥ १६ ।
अयि पौष्णकवर्णवती भवती अयि वातकवर्णवती भवती ।
अयि शक्रहुताशकवर्णवती अयि वामकवर्णवती भवती ॥ १७ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि मैत्रकवारुणिदैवतिका अयि मातृकवर्णवती भवती ।
अयि वैश्वकदेवकवर्णवती अयि वैष्णववर्णवती भवती ॥ १८ ।

वसुदैवतवर्णवती भवती अयि रुद्रकवर्णवती भवती ।
अयि देवि कुबेरकवर्णवती अयि आश्विनवर्णवती भवती ॥ १९ ।
अयि मौक्तिकविद्रुमहेमकनोलसितच्छविभिर्वदनैर्विदिते ।
विषमाम्बकनीक्षणिके भवती तनुतां प्रसुतं गिरिराजसुते ॥ २० ।

अयि चन्द्रनिबद्धविदूरजभूषितमौलिवरे वरदाभयदे ।
अयि अङ्कुशचारुकशाधरिके अयि शुभ्रकपालगुणाढ्यकरे ॥ २१ ।
अयि शंखसुदर्शनचक्रधरे अरविन्दयुगाञ्चितहस्तवरे ।
निजगायकपालनिके भवती तनुतां प्रसुतं गिरिराजसुते ॥ २२ ।

सवितुर्वरदैवतिका भवती अयि वैधससंधिभवा भवती ।
अयि देवि सरस्वतिका भवती अयि पार्वतिका विदिता भवती ॥ २३ ।
अयि पावकि नीरशया भवती अयि यातुकधानि शिवा भवती ।
अयि यातुकधानभयङ्करिका पवमानविलासिनिका भवती ॥ २४ ।

अयि रुद्रसुरूपिणिका भवती अयि रौद्रतरा विदिता भवती ।
अयि रुद्रमनोहरिका भवती कुलसन्ततिकारिणिका भवती ॥ २५ ।

विधिमानसमादनिका भवती अयि वैष्णविका विदिता भवती ।
भुवनेश्वरिकाऽभिहिता भवती कुलसन्ततिकारिणिका भवती ॥ २६ ।

अयि आदिमशक्तिवरा भवती जगती जननी विदिता भवती ।
अयि सर्वगवैभविका भवती अयि देवि अनन्तपदा भवती ॥ २७ ।
दिनसंधिभवा विदिता भवती निजगायकपालिनिका भवती ।
सवितुर्वरदैवतिका भवती अयि देवि सरस्वतिका भवती ॥ २८ ।

अयि वैधसिका विदिता भवती अयि वैष्णविकाऽभिहिता भवती ।
अयि रुद्रमनोहरिका भवती अयि विद्रुमकान्तिमती भवती ॥ २९ ।
सितवर्णवती विदिता भवती अयि देवि सितेतरिका भवती ।
अयि बालवया विदिता भवती दिनमध्यगता युवती भवती ॥ ३० ।

अयि सायगता जरती भवती अयि हंसकपृष्ठगता भवती ।
गरुडाश्रितचारुपदा भवती वृषवाहिनिका विदिता भवती ॥ ३१ ।
अयि भूमिगता बहुमौननुता अयि ऋक्श्रुतिभाषिणिका भवती ।
अयि याजुषपाठरता भवती भुवरम्बरगा विदिता भवती ॥ ३२ ।

अयि सामकगायिनिका भवती शिवलोकगता विदिता भवती ।
अयि वैष्णवलोकनिवासिनिका अयि वैधसलोकगता भवती ॥ ३३ ।
अयि देवि सुरेष्टविधायिनिका शिवयोः करनेत्रभवा भवती ।
अयि अश्रुसमुद्भविका भवती श्रमबिन्दुसमुद्भविका भवती ॥ ३४ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि दुर्गिकयाऽभिधयाऽभिहिता दशधा प्रविभक्ततरा भवती ।
अयि हर्षविधायिनिका भवती अयि देवि वरेण्यपदा भवती ॥ ३५ ।
वरदापदसंविदिता भवती अयि देवि वरीयसिका भवती ।
वरवर्णिनिका विदिता भवती अयि देवि गरीयसिका भवती ॥ ३६ ।
वरयोग्यतरा विदिता भवती वरकारुहिका विदिता भवती ।
अयि नीलकजाह्नविका भवती कुलसन्ततिकारिणिका भवती ॥ ३७ ।
दिनसंधिभवा विदिता भवती अयि भुक्तिविधायिनिका भवती ।
अयि मुक्तिविधायिनिका भवती अयि भूमिभगीरथिका भवती॥ ३८ ।
अयि भोगवती विदिता भवती अयि काद्रवलोकगता भवती ।
अयि वाहिनिका विदिता भवती त्रिकलोकनिवासिनिका भवती । ३९ ।
अयि लोकविधारिणिका भवती अयि भूमिपदाभिहिता भवती ।
पवमानकशक्तिरये भवती भुवरम्बरगा विदिता भवती ॥ ४० ।
दितिजारिनिवासगता भवती अयि तैजसधामनिधिर्भवती ।
महरादिकलोकगता भवती महती खलु सिद्धिरये भवती ॥ ४१ ।
जनलोकगताजनिका भवती अयि सत्यवचा विदिता भवती ।
अयि सत्यकलोकगता भवती कुलसन्ततिकारिणिका भवती ॥ ४२ ।
तपसि श्रितिका अयि तापसिका कमला हरिधामगता भवती ।
निजगायकपालनिका भवती विधिलोकगता विदिता भवती ।। ४३ ।
अयि गौरिकयाऽभिधयाऽभिहिता शिवलोकगता विदिता भवती ।
हरनेमशरीरनिवासनिका कुलसन्ततिकारिणिका भवती ॥ ४४ ।
अहमः प्रकृतिर्विदिता भवती महतः प्रकृतिर्विदिता भवती ।
समगौणवती विदिता भवती शबलात्मसुरूपिणिका भवती ॥ ४५ ।
अयि तत्परिका विदिता भवती परिका किल शक्तिवरा भवती ।
परमा प्रकृतिर्विदिता भवती कुलसन्ततिकारिणिका भवती ॥ ४६ ।
अयि एषणिका विदिता भवती क्रियकापदसंविदिता भवती ।
अयि बोधसुरूपिणिका भवती भवसन्ततिकारिणिका भवती ॥ ४७ ।
अयि जाह्नविका विदिता भवती यमुनापदसंविदिता भवती ।
अयि देवि विपाशिकयाऽभिधयाऽभिहित जनजीवनिका भवती ॥ ४८ ।
अयि देवि सरस्वतिका भवती सरयूपदसंविदिता भवती ।
अयि देविकयाऽभिधयाऽभिहिता अयि सिन्धुपदाभिहिता भवती ॥ ४९ ।
अयि नर्मदिका विदिता भवती अयि देवि इरावतिका भवती ।
अयि गोदिकयाऽभिधयाऽभिहिता शतवाहिनिका विदिता भवती । ५० ।
अयि देवि कुबेरिकयाऽभिधयाऽभिहिता सुरलोकगता भवती ।
अयि कौशिकिका विदिता भवती अयि चन्द्रकभागवती भवती ॥ ५१ ।
अयि देवि सरस्वतिका भवती अयि गण्डकिका विदिता भवती ।
अयि देवि वितस्तिकयाऽभिधयाऽभिहिता किल तापिनिका भवती ॥५२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि तोयिकयाऽभिधयाऽभिहिता अयि गोमतिकाऽभिहिता भवती ।
अयि वेत्रवती विदिता भवती जनजीवनिका विदिता भवती ॥ ५३ ।
अयि पिङ्गलिकाऽभिहिता भवती इडिकापदसंविदिता भवती ।
अयि देवि सुषुम्निकयाऽभिधयाऽभिहिता जनतारिणिका भवती ॥ ५४ ।
अयि गान्धरिका विदिता भवती अयि देवि अलम्बुसिका भवती ।
कुहुकापदसंविदिता भवती अयि शङ्खिनिकाऽभिहिता भवती ॥ ५५ ।
अयि पूपिकया विदिता भवती अयि पूषिकयाऽभिहिता भवती ।
इभजिह्विकयाऽभिधयाऽभिहिता असुसङ्घविवाहिनिका भवती ॥ ५६ ।
हृदयाब्जगता असुशक्तिवरा अयि सुप्तिनियामिनिका भवती ।
अयि कण्ठगता विदिता भवती अयि तालुगता विदिता भवती ॥ ५७ ।
अयि देवि सदाधरिका भवती अयि विन्दुकमालिनिका भवती ।
अयि विन्दुगता विदिता भवती कुलसन्ततिकारिणिका भवती ॥ ५८ ।
अयि मूलगता विदिता भवती अयि कुण्डलिका विदिता भवती ।
अयि केशकमूलगता भवती अयि वैभविका विदिता भवती ॥ ५९ ।
शिखिकाशुभमध्यगता भवती शिखिकाग्रमनोन्मनिका भवती ।
अयि देवि रमादिनसंधिभवा भवभाविनिका विदिता भवती ॥ ६० ।
अयि देवि महाघविनाशिनिका वरसिद्धिविधायिनिका भवती ।
अयि भुक्तिविधायिनिका भवती अयि मुक्तिविधायिनिका भवती ६१ ।
समतीर्थतपोव्रतदानफलैः कृतजीवकजीवनिका भवती ।
अयि वित्तविधायिनिका भवती कुलसन्ततिकारिणिका भवती ॥ ६२ ।
अयि रक्तकरत्नवती भवती सितरत्नविभूषणिका भवती ।
अयि देवि हिरण्यविभूषणिका अयि नीलकरत्नवती भवती ॥ ६३ ।
धवलाम्बुजमाल्यवती भवती विषमाम्बकशोभिनिका भवती ।
अयि रक्तकवर्णवती भवती अयि रक्तनवाम्बुजिका भवती ॥ ६४ ।
मणिपूरविभूषणिका भवती अयि देवि कुमारितरा भवती ।
निजगायकपालिनिका भवती कमलासनिका विदिता भवती ॥ ६५ ।
करसंभृतकुण्डवराम्बुजिका अयि पद्मविलोचनिका भवती ।
वरमाल्यविधारिणिका भवती अयि हंसकवाहिनिका भवती ॥ ६६ ।
अविचिन्त्यसुलक्षणिका भवती अयि अस्फुटिकाऽभिहिता भवती ।
अयि अर्थकमातृमहेश्वरिका अमृतार्णवमध्यगता भवती ॥ ६७ ।
अजितापदसंविदिता भवती अपराजितिकाऽभिहिता भवती ।
अणिमादिगुणाश्रयिका भवती रविमण्डलगा विदिता भवती ॥ ६८ ।


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अजरा अयि देवि अजा भवती अपराश्रितधर्मवती भवती ।
अयि अक्षकसूत्रविधारिणिका कुलसन्ततिकारिणिका भवती ॥ ६९ ।

अधरा किल देवि धरा भवती हरिवर्णमुखा विदिता भवती ।
अयि देवि कषान्तक-वर्णवती अरिषट्कविभेदिनिका भवती ॥ ७० ।

अयि अञ्जनपर्वतसंनिभिका अयि अञ्जनपर्वतगा भवती ।
अदितिः किल देवसुता भवती अजपापदसंविदिता भवती ॥ ७१ ।

अरविन्दनिभेक्षणिका भवती अयि अन्तरबाह्यगता भवती ।
अमरारिविनाशिनिका भवती अयि अन्तरिकाऽभिहिता भवती ॥ ७२ ।

अजिकापदसंविदिता भवती अजकास्यनिवासवती भवती ।
अरविन्दनिभाननिका भवती अरिमण्डलमर्दिनिका भवती ॥ ७३ ।

अयि अर्थकदानविदा भवती असुरघ्नि कुहूपदिका भवती ।
अयि अर्धकमात्रिकयाऽभिधयाऽभिहिता कुलकारिणिका भवती ॥ ७४ ।

अरमाहरिका विदिता भवती अयि देवि अजार्चितिका भवती ।
अयि आदिभवा कमला भवती अयि आदिमशक्तिरहो भवती ॥ ७५ ।

अयि आकृतिकाऽभिहिता भवती अयि आयतकाननिका भवती ।
रविमार्गचरा विदिता भवती रविपूजितपादयुगा भवती ॥ ७६ ।

गुरुवर्तितसत्कृतिका भवती प्रथमामरिका विदिता भवती ।
अयि आदिममूर्तिनिवासिनिका हुतभुग्वरशक्तिरये भवती ॥ ७७ ।

अयि आसनवर्तिनिका भवती अयि देवि समर्चितिका भवती ।
अयि आश्रयकानिलया भवती अयि आश्रयिका विदिता भवती ॥ ७८ ।

गगनान्तनिवासिनिका भवती अयि आदिमवर्णयुता भवती ।
अयि आन्तरखाकृतिका भवती रविमण्डलगा विदिता भवती ॥ ७९ ।

अयि आन्तरतामसनाशिनिका अयि इन्दिरिका विदिता भवती ।
अयि इष्टवितारिणिका भवती अयि इष्टपदाऽभिहिता भवती ॥ ८० ।

कमलोद्भनिभेक्षणिका भवती अयि देवि इरावतिका भवती ।
अयि इन्द्रपदाऽभिहिता भवती अयि इन्द्रकजीविनिका भवती ॥ ८१ ।

अयि चन्द्रकरूपिणिका भवती अयि इक्षुधनुर्मतिका भवती ।
इषुसंहितिकारिणिका भवती कुलसन्ततिकारिणिका भवती ॥ ८२ ।

अयि इन्द्रकनीलसमाकृतिका इडिकापदसंविदिता भवती ।
अयि पिङ्गलिकाऽभिहिता भवती अयि शक्रविलोचनिका भवती ॥८३।

अयि ईश्वरिका विदिता भवती उमिका उषिकाऽभिहिता भवती ।
अयि एषणिकात्रयवर्जितिका उडुसंनिभिका विदिता भवती ॥ ८४ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि उर्वरुकाननिका भवती उडुभासवती प्रथिता भवती।
उडुमत्युडुपा विदिता भवती उडुमध्यगताऽभिहिता भवती ॥ ८५ ।
अयि उर्ध्विकयाऽभिधयाऽभिहिता अयि उर्ध्वकेशवती भवती।
अधरोर्ध्वगतिप्रविभेदिनिका अयि उर्ध्वकरप्रियका भवती ॥ ८६ ।

अयि देवि तरङ्गकमालिनिका अयि वाग्वरदायिनिका भवती।
अयि पुस्तकदायिनिका भवती ऋतकर्षिपदाऽभिहिता भवती ॥ ८७ ।
ऋषिदेवनमस्कृतिका भवती ऋतुमत्यभिधानवती भवती।
अयि ऋक्श्रुतिका विदिता भवती ऋहर्णत्रितरा विदिता भवती ॥ ८८ ।

ऋषिमण्डलचारिणिका भवती अयि ऋद्धिविधायिनिका भवती।
ऋजुमार्गगता विदिता भवती ऋजुधर्मवती विदिता भवती ॥ ८९ ।
ऋतुदायिनिका विदिता भवती अयि ऋक्श्रुतिवासवती भवती।
अयि लुप्तकधर्मविवर्तिनिका ऋजुकापदसंविदिता भवती ॥ ९० ।

अयि अष्टपदारिवरप्रभवा अयि लौतकदोषहरा भवती।
अयि एककवर्णवती भवती अयि एककनिष्ठतिका भवती ॥ ९१ ।
अयि एककमात्रिकयाऽभिधयाऽभिहिता अयि एकपदा भवती।
अयि वासविका विदिता भवती सितदिग्गजरोहिणिका भवती ॥ ९२ ।

इह लोकफलप्रदिका भवती परलोकफलप्रदिका भवती।
प्रणवाकृतिका विदिता भवती अयि ओषधिका विदिता भवती ॥ ९३ ।
अयि ओतसुरूपिणिका भवती अयि ओतनिवासिनिका भवती।
परिकौतनिवासिनिका भवती अयि और्वपदाभिहिता भवती ॥ ९४ ।

अयि औषधसम्पदिका भवती अयि सम्पदुपासनिका भवती।
अयि तत्फलदायिनिका भवती अयि अण्डकमध्यगता भवती ॥ ९५ ।
अयि चाः कृतिमन्त्रकरूपिणिका अयि कात्यकुलप्रभवा भवती।
अयि कालविभावरिका भवती अयि कामविलोचनिका भवती ॥ ९६ ।

अयि मन्मथसुन्दरिका भवती कमलापदसंविदिता भवती।
अयि कामिनिकाऽभिहिता भवती अयि कालककण्ठिनिका भवती ॥ ९७।

अयि कान्ततरा विदिता भवती अयि कामदिका प्रथिता भवती।
करिकुम्भवरस्तनिका भवती करवीरसुवासिनिका भवती ॥ ९८ ।
कलयाणि सुकुण्डलिका भवती कुरुदेशनिवासिनिका भवती।
कुरुविन्ददलाकृतिका भवती अयि कुण्डलिका विदिता भवती ॥ ९९ ।
कुमुदालयिकाऽवगता भवती अयि देवि करालमुखी भवती।
अयि कालिकयाऽभिधयाऽभिहिता अयि कालकरूपिणिका भवती ॥१००।

कमनीयगुणाऽभिहिता भवती अयि देवि कुमुद्वतिका भवती।
अयि कालकजिह्विकयाऽभिधयाऽभिहिता अयि कान्तिपदा भवती ॥१०१।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि देवि कलावतिका भवती अयि कौशिकिकाऽभिहिता भवती।
कमलाकृतिका विदिता भवती अयि कामनिभञ्जिनिका भवती ॥ १०२।

अयि देवि कुमारितरा भवती करुणावरुणालयिका भवती।
ककुब्रन्तगताऽविदिता भवती करिणिप्रियका विदिता भवती ॥ १०३।

अयि केसरिका विदिता भवती अयि केशवनूतगुणा भवती।
अयि देवि कदम्बसुमप्रियका कुलसन्ततिकारिणिका भवती ॥ १०४।

इन्द्रनीलमणिरम्यसानुके नीलभूभृतिकृतास्पदे शिवे ।
पौत्रगोयुगमुदारदर्शने मातरुद्दिश दयावलोकनैः ॥ १०५।

इत्येतदतिनिर्विण्णरघुनाथमुखोद्गतम्।
सन्ततिस्तवकं पुष्पस्तवकप्रतिकञ्चुकम् ॥ १०६।
आवर्तयति यः शक्रदृक्संख्यामितमादरात्
पुत्रपौत्रानुवृत्तिः स्यात्तस्य यावत् स्थिराधरा ॥ १०७।

इति श्रीब्रह्मीभूतकाशीनाथतनयसौभद्रेयरघुनाथकृतौ

सन्ततिस्तवे नवमं शतकम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## दशमं शतकम्

अयि देवि कलिन्दसुता भवती अयि कालिकरालतरा भवती।
कलशीसुतसंस्तुतिका भवती अयि देवि कृपावतिका भवती॥ १।
अयि कामसुकाऽभिहिता भवती क्रतुमत्यभिधानवती भवती।
अयि कामविनिर्मितरूपधरा अयि देवि कुमारितरा भवती॥ २।
अयि कुण्डनिलायिनिका भवती अयि कीरकवाहिनिका भवती।
अयि देवि किरातकवेषधरा अयि केतकिका विदिता भवती॥ ३।
अयि केकयवंशभवा भवती अयि कोकिलरावणिका भवती।
अयि देवि कमण्डलुधारिणिका कुलसन्ततिकारिणिका भवती॥ ४।
कुसुमप्रियका विदिता भवती अयि कर्मनिवर्तिनिका भवती।
अयि कालिकयाऽभिधयाऽभिहिता कलहंसगतिर्विदिता भवती॥ ५।
कृतकौतुकमङ्गलिका भवती कृतकक्षपदाभिहिता भवती।
अयि कस्तुरिकातिलका भवती अयि कम्रमुखाम्बुजिका भवती॥ ६।
अयि देवि करीन्द्रगतिर्भवती कुहकापदसंविदिता भवती।
अयि कर्पुरलेपनिका भवती कृतकृष्णपदाऽभिहिता भवती॥ ७।
कपिलाकुहराश्रयिका भवती अयि कूटकसंस्थितिका भवती।
कुधराकृतकम्रपदा भवती अयि कुक्षिगताऽखिलिका भवती॥ ८।
अयि खेटकखड्गकरा भवती अयि खेचरिका विदिता भवती।
खगवाहिनिका अयि खर्वतरा खगराजकपृष्ठगता भवती॥ ९।
अयि खाट्वकधारिणिका भवति खलघातिनिका विदिता भवती।
अयि खण्डितकाजरिका भवती अयि खण्डकथाप्रसिता भवती॥ १०।
अयि खण्डकचन्द्रललाटिकया लसिताद्भुतभालतला भवती।
खरुकावरदायिनिका भवती खलमानसदूरगता भवती॥ ११।
गणनायकपूजितपादयुगा गुरुवन्दितवन्द्यगुणा भवती।
अयि गङ्गिकयाऽभिधयाऽभिहिता कृतगाधपदा विदिता भवती॥ १२।
अयि गायकपालिनिका भवती अयि गोमतिकाऽभिहिता भवती।
अयि गान्धरिका विदिता भवती अयि गानकलोलुपिका भवती॥ १३।
गगनेचरगीतगुणा भवती अयि गौतमिका विदिता भवती।
गजगामिनिकाऽभिहिता भवती अयि गह्वरिका विदिता भवती॥ १४।
अयि गन्धरवाप्सरसाश्रितिका अयि गन्धरवी विदिता भवती।
अयि गोविदपादगता भवती गुणसंघविभाजितिका भवती॥ १५।
कृतगोत्रपदा विदिता भवती गिरिशागिरिशानुगता भवती।
गिरिसानुगताऽभिहिता भवती गहनागमिका विदिता भवती॥ १६।
गुहिकावरवासवती भवती अयि गौणवती विदिता भवती।
गुरुपापविनाशिनिका भवती अयि गुर्वितराऽभिहिता भवती॥ १७।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुणशालिनिका अयि गुह्यतरा अयि गोप्यपदा विदिता भवती ।
गुणदायिनिकाऽभिहिता भवती गिरिजापदसंविदिता भवती ॥ १८ ।
अयि गुह्यमतङ्गजिका भवती गरुडध्वजवल्लभिका भवती ।
अयि गर्वनिवर्तिनिका भवती अयि गोकुलमूलगता भवती ॥ १९ ।
गदिकाधरिका विदिता भवती अयि गोश्रुतिवासरता भवती ।
अयि गुह्यकमण्डलवर्तिनिका कुलसन्ततिकारिणिका भवती ॥ २० ।
अयि धर्मविधायिनिका भवती धनदायिनिका विदिता भवती ।
अयि घोरकुदानवमर्दिनिका घृणिमन्त्रमयी प्रथिता भवती ॥ २१ ।
अयि घण्टिकटाङ्कृतिकारिणिका कृतघोषपदा विदिता भवती ।
अयि घाण्टरवप्रियका भवती घनपातविधायिनिका भवती ॥ २२ ।
घृणितोषविधायिनिका भवती घनशात्रवमण्डलिका भवती ।
घनवेगिनिका विदिता भवती घनधातुमयी विदिता भवती ॥ २३ ।
घरवर्णविभूषितकाणवती अयि घर्घरघोषवती भवती ।
अयि देवि घृताचिकयाऽभिधयाऽभिहिता घनवर्णवती भवती ॥ २४ ।
अयि चर्चितचारुपदा भवती अयि चारुविहासिनिका भवती ।
अयि चर्चिकयाऽभिधयाऽभिहिता चटुलापदसंविदिता भवती ॥ २५ ।
अयि चित्रकमाल्यविभूषितिका कृतचर्चिपदाऽभिहिता भवती ।
अयि चण्डिकयाऽभिधयाऽभिहिता अयि देवि चतुर्भुजिका भवती ॥ २६ ।
अयि चातुरिका विदिता भवती अयि चारुकदन्तवती भवती ।
अयि चन्दिरहासवती भवती अयि चन्दिरहासिनिका भवती ॥ २७ ।
चरितप्रदिका विदिता भवती अयि चित्रकवस्त्रदशा भवती ।
अयि चन्दिरकर्णककुण्डलिका अयि चारुविधायिनिका भवती ॥ २८ ।
अयि देवि चकोरि चकोरिणिका अयि चारुकमध्यमिका भवती ।
अयि चोरविनाशिनिका भवती अयि चारुगतिर्विदिता भवती ॥ २९ ।
अयि चान्द्रिकभासवती भवती अयि चन्द्रकधात्रितरा भवती ।
अयि चूलिकयाऽभिधयाऽभिहिता अयि चौरवरा विदिता भवती ॥ ३० ।
अयि चण्डितरा विदिता भवती अयि चौरितरा विदिता भवती ।
अयि चञ्चदघोरसरस्वतिका अयि चन्द्रकभूषणिका भवती ॥ ३१ ।
अयि चन्दनलेपवती भवती अयि चामरवीजितिका भवती ।
अयि चन्दिलिका विदिता भवती अयि चन्दिररूपिणिका भवती ॥ ३२ ।
अयि चारुद्युतिप्रियका भवती अयि चारुतराचरिता भवती ।
अयि चक्रकबाहुकयाऽभिधयाऽभिहिता अयि चन्द्रगता भवती ॥ ३३ ।
अयि चन्द्रकमण्डलदर्पणिका अयि चारुविलासिनिका भवती ।
अयि चित्रिकयाऽभिधयाऽभिहिता अयि चन्द्रवती विदिता भवती ॥ ३४ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि चक्रकुचा विदिता भवती चितिरूपिणिका विदिता भवती ।
अयि चेष्टिकयाऽभिधयाऽभिहिता अयि चन्द्रपदाऽभिहिता भवती ॥ ३५ ।

अयि चन्दनकप्रियका भवती अयि चातकिकाऽभिहिता भवती ।
अयि चोदनिका विदिता भवती अयि चारुकहेतुवरा भवती ॥ ३६ ।

छतराभ्रधरा विदिता भवती छतराभ्रगता विदिता भवती ।
छनदः परिसंछदिका भवती छयिकापदसंविदिता भवती ॥ ३७ ।

छिदिरप्रणखा विदिता भवती छदिकेन्द्रियसर्पिणिका भवती ।
छनदः परिणूतगुणा भवती छिदिरोपधिभेदिनिका भवती ॥ ३८ ।

छतरेश्वरिका विदिता भवती छुरिकापदसंविदिता भवती ।
छदनप्रियका विदिता भवती छदिकाऽभिधयाऽभिहिता भवती ॥ ३९ ।

जननीपदसंविदिता भवती अयि जन्मविवर्जितिका भवती ।
अयि देवि जगन्मयि कामवती अयि जातहुताशनजा भवती ॥ ४० ।

अयि जाह्नविका विदिता भवती जटिलापदसंविदिता भवती ।
अयि जेत्रितरा जरिकामरणाऽऽदिविवर्जितविग्रहिका भवती ॥ ४१ ।

अयि जम्बुकदेशवती भवती जलशालिनिका विदिता भवती ।
अयि देवि जुवालिकयाऽभिधयाऽभिहिता जितरोषपदा भवती ॥ ४२ ।

जितकेन्द्रियका विदिता भवती जितशात्रविकाऽभिहिता भवती ।
जगतीप्रियका विदिता भवती अयि जातकरूपमयी भवती ॥ ४३ ।

अयि जिह्विकयाऽभिधयाऽभिहिता अयि जानकिका विदिता भवती ।
जगतीपदसंविदिता भवती जरिकापदसंविदिता भवती ॥ ४४ ।

अयि देवि जनित्रितरा भवती अयि जह्नुसुता विदिता भवती ।
जगतीत्रयमङ्गलकारिणिका कुलकारिणिका विदिता भवती ॥ ४५ ।

जपवत्यभिधानवती भवती ज्वरघातिनिका विदिता भवती ।
जितविष्टपिका विदिता भवती अयि सञ्ज्वलिकामुखिका भवती ॥ ४६ ।

जितका क्रमिका विदिता भवती ज्वरदैवतिका विदिता भवती ।
अयि देवि जुवालिकयाऽभिधयाऽभिहिता अयि जाग्रतिका भवती ॥ ४७ ।

जलदापदसंविदिता भवती ज्वलदग्निशिखोपमिका भवती ।
जयघोषविपाटितदिङ्मुखिका जगतीजनजीर्णतरा भवती ॥ ४८ ।

अयि जम्भिनिका विदिता भवती अयि जृम्भिणिका विदिता भवती ।
अयि जृम्भिकयाऽभिधयाऽभिहिता ज्वलवज्रककुण्डलिका भवती ॥ ४९ ।

झणघोषवती विदिता भवती अयि झांझकवेगवती भवती ।
अयि झिंझिकयाऽभिधयाऽभिहिता अयि झल्लरिका कुशला भवती ॥५० ।

ञभुजा विदिता ऋषिभिर्भवती ञसरूपतरा विदिता भवती ।
अयि टङ्ककसायकधारिणिका कुलसन्ततिकारिणिका भवती ॥ ५१ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि टङ्किनिका विदिता भवती अयि टङ्कविभेदिनिका भवती ।
अयि टाङ्कसमुद्भवघोषयुता अयि टङ्कयमहौरसिका भवती ॥ ५२ ।
अयि टङ्कृतिकारिणिका भवती ठठशब्दनिनादिनिका भवती ।
अयि डामरिका विदिता भवती अयि डाकिनिका विदिता भवती ॥ ५३।
अयि डुण्डुभमारकनिर्जितिका कृतडिम्भपदाऽभिहिता भवती ।
अयि डामरिकासृतिगामिनिका डमरूगणनादिनिका भवती ॥ ५४ ।
अयि डैण्डिकरावसहा भवती अयि डिम्भविलासरता भवती ।
अयि ढुण्ढिगणेशविधायिनिका कुलसन्ततिकारिणिका भवती ॥ ५५ ।
ढक्किका करिका विदिता भवती ढिलिका व्रजिका विदिता भवती ।
अयि नित्यविबोधवती भवती निरुपाधिनिराश्रयिका भवती ॥ ५६ ।
अयि निर्गुणिका विदिता भवती अयि नर्मदिका नदिका भवती ।
त्रिगुणापदसंविदिता भवती त्रिपदापदसंविदिता भवती ॥ ५७ ।
तुलसीपदसंविदिता भवती तरुणीपदसंविदिता भवती ;
अयि तन्त्रिकयाऽभिधयाऽभिहिता तरुकापदसंविदिता भवती ॥ ५८ ।
तिरिविक्रमपादतलाक्रमिका अयि देवि तुरीयपदा भवती ।
तरुणार्कनिभा विदिता भवतो अयि तामसिकाऽभिहिता भवती ॥ ५९ ।
तुहिनातुरिका विदिता भवती त्रिककालिकबोधवती भवती ।
त्रिवली पदसंविदिता भवती त्रिकलोचनिका विदिता भवती ॥ ६० ।
त्रिकशक्तियुताऽभिहिता भवती त्रिपुरापदसंविदिता भवती ।
अयि तुङ्गिकयाऽभिधयाऽभिहिता अयि देवि तुरङ्गमुखी भवती ॥ ६१ ।
अयि देवि तिमिङ्गिलसंगिलिका कृततीव्रपदाऽभिहिता भवती ।
त्रिकवाहिनिका विदिता भवती अयि तामसखादिनिका भवती ॥ ६२ ।
अयि तन्त्रकमन्त्रविशेषविदा तनुमध्यमिका विदिता भवती ।
त्रिकविष्टपिका विदिता भवती त्रिकसन्धिनुताऽभिहिता भवती ॥ ६३ ।
त्रिकसुस्तनिका विदिता भवती अयि तालसुतापिनिका भवती ।
अयि तोषिकयाऽभिधयाऽभिहिता तपनस्थितिका विदिता भवती॥ ६४ ।
अयि ताटकिनीविदिता भवती अयि देवि तुषारनिभा भवती ।
तुहिनाचलवासिनिका भवती अयि तन्तुकजालयुता भवती ॥ ६५ ।
अयि तारकहारकसंवलिता तिलहोमहिता विदिता भवती ।
अयि देवि तमालसुभाकृतिका अयि देवि तलोदरिका भवती ॥ ६६ ।
तिलभूषणिका विदिता भवती त्रियुतापदसंविदिता भवती ।
अयि तन्विकयाऽभिधयाऽभिहिता त्रिकशङ्कुसमावृतिका भवती ॥ ६७ ।
अयि ताटककप्रियवाहिनिका त्रिजटापदसंविदिता भवती ।
अयि तारकयाऽभिधयाऽभिहिता अयि तित्तिरिका विदिता भवती ॥ ६८ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रिविधा तरुणाकृतिका भवती अयि तप्तहिरण्यनिभा भवती ।
अयि तप्तककाञ्चनभूषणिका अयि तर्पणिका विदिता भवती ॥ ६९ ।
त्रिककालिकबोधविधायिनिका अयि तामसिकाऽभिहिता भवती ।
गुणकाम्बकसंविदिता भवती त्रिकवर्गवती विदिता भवती ॥ ७० ।
अयि तुम्बुरुसंस्तुतिका भवती अयि तृप्तिविधायिनिका भवती ।
अयि तृष्णिकयाऽभिधयाऽभिहिता कृततृप्तपदाऽभिहिता भवती ॥ ७१ ।
अयि तीर्थविपाविनिका भवती, कृततीर्थपदाऽभिहिता भवती ।
अयि तीर्थिकयाऽभिधयाऽभिहिता कृततीर्थनिवासनुता भवती ॥ ७२ ।
अयि ताक्ष्यंगता विदिता भवती त्रिगुणाकृतिका विदिता भवती ।
त्रिकभङ्गितनूलतिका भवती अयि थात्करिका विदिता भवती ॥ ७३ ।
अयि थारविका विदिता भवती कृतथान्तपदाऽभिहिता भवती ।
अयि दोहिनिका विदिता भवती अयि दीनकवत्सलिका भवती ॥ ७४ ।
अयि दानवकान्तकरी भवति अयि दुर्गतिदारिणिका भवती ।
अयि दुर्गमदैत्यनिर्वाहिणिका कुलसन्ततिकारिणिका भवती ॥ ७५ ।
अयि दुर्गिकयाऽभिधयाऽभिहिता अयि देवकरीतिवरा भवती ।
दिवकोत्तररात्रिपदा भवती अयि दुन्दुभिनिस्वनिका भवती ॥ ७६ ।
द्रुपदान्वयपाविनिका भवती दिवकापदसंविदिता भवती ।
अयि दैन्यविभेदिनिका भवती अयि दिक्पटिका विदिता भवती ॥ ७७ ।
अयि देवकया निदुरावसिका, दलितासुरसङ्घनुता भवती ।
दलिताञ्जनगञ्जनिका भवती कुलसन्ततिकारिणिका भवती ॥ ७८ ।
अयि दैशविमोहिनिका भवती अयि दीप्ततरा विदिता भवती ।
अयि दामवरोदरवल्लभिका अयि दण्डिनिका विदिता भवती ॥ ७९ ।
अयि दण्डकघोरवनीनिलया अयि देवसमर्चितिका भवती ।
अयि देवकवन्द्यपदा भवती अयि दानवकाकृतिका भवती ॥ ८० ।
दिविषत्प्रवरा विदिता भवती अयि दानवकद्विषिका भवती ।
अयि दीनविनाथनुता भवती अयि दैवतरूपिणिका भवती ॥ ८१ ।
अयि दीक्षिकयाऽभिधयाऽभिहिता अयि धात्रितरा विदिता भवती ।
अयि देवि धनुर्धरिका भवती अयि धारिणिका विदिता भवती ॥ ८२ ।
अयि धेनुपदाऽभिहिता भवती अयि देवि धराधरिका भवती ।
अयि देविधुरन्धरिका भवती धनदायिनिका विदिता भवती ॥ ८३ ।
अयि धान्यकदोहिनिका भवती अयि धर्मकचारिणिका भवती ।
अयि धर्मकशीलवती भवतो अयि देवि धनाधिपिका भवती ॥ ८४ ।
अयि धर्मकवेदविशारदिका धृतिकापदसंविदिता भवती ।
अयि धन्यतरा विदिता भवती धृतचारुपदा विदिता भवती ॥ ८५ ।


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि धर्मनृपप्रियका भवती ध्रुविकापदसंविदिता भवती ।
अयि धूमवती विदिता भवती अयि धूमककुन्तलिका भवती ॥ ८६ ।
अयि धर्मविधायिनिका भवती अयि नन्दकवल्लभिका भवती ।
अयि नन्दनिकाभिधयाऽभिहिता नृनुतापदसंविदिता भवती ॥ ८७ ।
अयि नन्दिकयाभिधयाऽभिहिता अयि नर्मदिका विदिता भवती ।
अयि निद्रिकयाऽभिधयाऽभिहिता नलिनीपदसंविदिता भवती ॥ ८८ ।
अयि नीलिकयाऽभिधयाऽभिहिता अयि नीलगलाश्रयिका भवती ।
अयि नारनिकेतनवल्लभिका कृतनित्यपदाभिहिता भवती ॥ ८९ ।
अयि निर्मलिका विदिता भवती अयि निर्गुणिका विदिता भवती ।
निधिकापदसंविदिता भवती अयि देवि निराश्रयिका भवती ॥ ९० ।
अयि देवि निरोपमिका भवती अयि नित्यविशुद्धतरा भवती ।
अयि देवि निरञ्जनिका भवती नरसिंहिनिका विदिता भवती ॥ ९१ ।
अयि नादकविन्दुकलातिगता अयि नादकबिन्दुकला भवती ।
नगधारिणिका विदिता भवती नृपनागविभूषितिका भवती ॥ ९२ ।
नरकोद्भवदुःखनिवारिणिका नरकान्तकपादभवा भवती ।
अयि देवि निराकृतिका भवती निरवद्यतरा विदिता भवती ॥ ९३ ।
अयि नारदकप्रियकारिणिका नवसूत्रधरा विदिता भवती ।
अयि निर्मलिका निधिदा भवती निरुपद्रवकारिणिका भवती ॥ ९४ ।
अयि नीतिपदाऽभिहिता भवती अयि नानकदीपविभा भवती ।
नवरत्नविभूषणिका भवती अयि नन्दजिका विदिता भवती ॥ ९५ ।
अयि नैमिषकाननवासिनिका नवनीतकगर्धिनिका भवती ।
अयि नीलघनस्वनिका भवती अयि नारितरा विदिता भवती ॥ ९६ ।
निमिषेक्षणिका विदिता भवती अयि देवि नदीत्तरिका भवती ।
अयि नीलगलाऽभिहिता भवती निशिकेश्वरिकाऽभिहिता भवती ॥९७ ।
अयि नामपदावलिका भवती नरचित्तविनोदिनिका भवती ।
अयि देवि निशुम्भनिशुम्भिनिका अयि नागनिवासगता भवती ॥ ९८ ।
नवजाम्बवकान्तिमती भवती अयि नागकदैवतिका भवती ।
अयि नूपुरकान्तपदा भवती नयनश्रितशोणशुभा भवती ॥ ९९ ।
अयि देवि निमग्नविलोचनिका निरघातसमस्वनिका भवती ।
अयि नन्दनकाननवासिनिका निविटङ्कविहारिणिका भवती ॥ १०० ।
अयि देवि निषेधकशेषिणिका नरकादकपेषिणिका भवती ।
नरकान्तकतोषिणिका भवती कुलसन्ततिकारिणिका भवती ॥ १०१ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इन्द्रनीलमणिरम्यसानुके नीलभूभृतिकृतास्पदे शिवे ।
पौत्रगोयुगमुदारदर्शने मातरुद्दिश दयावलोकनैः ॥ १०२ ।

इत्येतदतिनिर्विण्णरघुनाथमुखोद्गतम् ।
सन्ततिस्तवकं पुष्पस्तबकप्रतिकञ्चुकम् ॥ १०३ ।

आवर्त्तयति यः शक्रहक्संख्यामितमादरात् ।
पुत्रपौत्रानुवृत्तिः स्यात् तस्य यावत् स्थिरा धरा ॥ १०४ ।

सहस्रकरभासायाः सहस्रकरसंस्थितेः ।
सहस्रकरशालिन्या मातुश्चरणमाश्रये ॥ १०५ ।

इति श्रीब्रह्मीभूतकाशीनाथतनयसौभद्रेयरघुनाथकृतौ
सन्ततिस्तवे दशमं शतकम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## एकादशं शतकम्

अयि पार्वत्तिका विदिता भवती परमोदरिका विदिता भवती ।
परचेतनिका विदिता भवती परिकापदसंविदिता भवती ॥ १ ।
अयि पञ्चककोशविनिःसृतिका परपातकनाशिनिका भवती ।
परचित्तविधानविदा भवती अयि पञ्चकरूपिणिका भवती ॥ २ ।
अयि पञ्चिकयाऽभिधयाऽभिहिता परिपूर्णतिथिर्विदिता भवती ।
परमापरतैजसभासिनिका अयि देवि पुराणितरा भवती ॥ ३ ।
परिकारतिका विदिता भवती अयि पौरुषिका विदिता भवती ।
अयि पद्मनिभेक्षणिका भवती अयि पुण्यतरा विदिता भवती ॥ ४ ।
पतगालयमग्नतरा भवती परिसारिरतिप्रमुदा भवती ।
परागविवर्धिनिका भवती अयि पावनिका विदिता भवती ॥ ५ ।
अयि पादवती विदिता भवती अयि पेशलिका विदिता भवती ।
पवनाशिनिका विदिता भवती प्रजिकापतिरूपिणिका भवती ॥ ६ ।
परिशान्ततरा विदिता भवती अयि पर्वतकस्तनिका भवती ।
अयि पङ्कजकप्रियका भवती अयि पङ्कजसम्भविका भवती ॥ ७ ।
अयि पद्मकसंस्थितिका भवती अयि पद्मविलोचनिका भवती ।
अयि पद्मकपत्रवती भवती अयि पद्मपदा विदिता भवती ॥ ८ ।
अयि पद्मिनिका विदिता भवती प्रियभाषिणिका विदिता भवती ।
पशुपाशविमोचिनिका भवती अयि देवि पुरन्ध्रितरा भवती ॥ ९ ।
पुरवासिनिका विदिता भवती अयि पुष्कलिका विदिता भवती ।
पुरुषाकृतिका अयि पर्वपदा परिजातसुमप्रियका भवती ॥ १० ।
पतिकव्रतिका विदिता भवती अयि पावनगात्रवरा भवती ।
अयि पुष्पकहासपरायणिका अयि देवि पयस्विनिका भवती ॥ ११ ।
अयि पुत्रकपूजितपादयुगा अयि पट्टिशपाशधरा भवती ।
अयि पौत्रिकयाऽभिधयाऽभिहिता प्रणतारतिभञ्जिनिका भवती ॥ १२ ।
पितृलोकवितारिणिका भवती अयि पङ्क्तिपदाभिहिता भवती ।
अयि पुण्यकशीलवती भवती अयि देवि पुराणितरा भवती ॥ १३ ।
प्रविदावतिकातनया भवती अयि देवि पितामहिका भवती ।
परिपुष्टतरा विदिता भवती परमारकमातृवरा भवती ॥ १४ ।
अयि पद्मपुरावसिका भवती अयि पद्मसमाननिका भवती ।
पृथुजङ्घिकयाऽभिधयाऽभिहिता पृथुचारुभुजा विदिता भवती ॥ १५ ।
पृथुपादिकयाऽभिधयाऽभिहिता पृथुकोदरिका विदिता भवती ।
परवालशुभा विदिता भवती अयि पिङ्गकलोचनिका भवती ॥ १६ ।
अयि पीतपटा विदिता भवती प्रचलाचलिकाऽभिहिता भवती ।
प्रसवापदसंविदिता भवती प्रणवा गतिका विदिता भवती ॥ १७ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि पुष्टिविधायिनिका भवती अयि पुण्यतरा विदिता भवती ।
प्रतिपालिनिका विदिता भवती अयि पञ्चकवर्णवती भवती ॥ १८ ।
अयि पञ्चकगौरवती भवती अयि पञ्जरकस्थितिका भवती ।
अयि पञ्चिकयाऽभिधयाऽभिहिता परमायिनिका विदिता भवती ॥ १९ ।
परतैजसिका विदिता भवती पररागवती विदिता भवती ।
परिका गतिका प्रमिता भवती परपाविनिका विदिता भवती ॥ २० ।
परिका दिशिका विदिता भवती परमेश्वरिकाऽभिहिता भवती ।
पवमानकविद्युतिका भवती अयि पुण्यकभद्रवती भवती ॥ २१ ।
परमेयतराऽभिहिता भवती अयि पुष्पकहासवती भवती ।
पृथुकोदरिका विदिता भवती अयि पीतकगात्रवरा भवती ॥ २२ ।
अयि पीतकवासिनिका भवती अयि पीतकशायिनिका भवती ।
अयि देवि पिशाचिनिका भवती अयि पीतकसङ्कृतिका भवती ॥ २३ ।
अयि देवि पिशाचकघातिनिका अयि पाटललोचनिका भवती ।
पटुकक्रियका विदिता भवती अयि पञ्चकभक्षिणिका भवती ॥ २४ ।
अयि पूतनिका विदिता भवती प्रचलासुविनाशिनिका भवती ।
अयि पुन्नगकाननमध्यगता परशक्तिपदाभिहिता. भवती ॥ २५ ।
अयि पावनतीर्थनिषेविणिका परनिर्वृतिकारिणिका भवती ।
अयि पञ्चकभक्तिशुभा भवती अयि पुष्पकरण्डगता भवती ॥ २६ ।
अयि पूषिकयाऽभिधयाऽभिहिता अयि पोषितविष्टपिका भवती ।
अयि पानकसम्प्रियका भवती अयि पञ्चशिखा विदिता भवती ॥ २७ ।
अयि पन्नगशायिनिका भवती पृथुदोहिनिका विदिता भवती ।
पृथिवीपदसंविदिता भवती पथिकापदसंविदिता भवती ॥ २८ ।
अयि पञ्चपराणुकरूपिणिका प्रणवापदसंविदिता भवती ।
अयि पाटलिका सुमगन्धिनिका अयि देवि पुराणनुता भवती ॥ २९ ।
अयि पारकदायिनिका भवती परमार्गविचारिणिका भवती ।
अयि पल्लवकोदरिका भवती अयि पूर्णमनोरथिका भवती ॥ ३० ।
परविद्रुमकप्रशुभा भवती अयि पुण्यकतोकवती भवती ।
परपूगविदारिणिका भवती कुलसन्ततिकारिणिका भवती ॥ ३१ ।
फलिनीफलदा विदिता भवती फलकाकृतिका विदिता भवती ।
अयि फल्गुपदाभिहिता भवती अयि फूत्करिका विदिता भवती ॥ ३२ ।
फणिभूपतिभोगशया भवती फणिमण्डलमण्डनिका भवती ।
अयि बालकबालतरा भवती बहुमानितवृत्तवरा भवती ॥ ३३ ।
अयि बालरविप्रभिका भवती बलभद्रमनोहरिका भवती ।
अयि वन्द्यपदा विदिता भवती वडवापदसंविदिता भवती ॥ ३४ ।
अयि बुद्धिवरप्रणुता भवती अयि बन्दिनिका विदिता भवती ।
बिलकावतिका विदिता भवती बडिशघ्निबलिप्रियका भवती ॥ ३५ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि बान्धविका विदिता भवती अयि बोधितिकाऽभिहिता भवती।
वरबुद्धिरहोवरबुद्धिमताम् अयि बन्धुकपुष्पशुभा भवती ॥ ३६ ।
अयि बालकभानुविभा भवती अयि विप्रकदैवतिका भवती ।
अयि वैधसिका विदिता भवती वृहतीपतिसंस्तुतिका भवती ॥ ३७ ।
अयि वृन्दिकयाऽभिधयाऽभिहिता वहुवन्दनिहारिणिका भवती ।
अयि देवि बलाकिनिका भवती विलवासरता विदिता भवती ॥ ३८ ।
अयि देवि विलाशिनिका भवती अयि देवि वहूदकिका भवती ।
बहुनेत्रपदा विदिता भवती वहुकर्णवतंसवती भवती ॥ ३९ ।
बहुबाहुयुता विदिता भवती अयि बीजकरूपिणिका भवती ।
बहुरूपिणिकाऽभिहिता भवती अयि विन्दुकनादवपुर्भवती ॥ ४० ।
अयि बिन्दुकनादकलाऽतिगता वदरीवनवासिनिका भवती ।
अयि बद्धकराङ्गुलिपालनिका अयि वद्धकधेनुधया भवती ॥ ४१ ।
अयि वृन्दकगामिनिका भवती वृहदंसवरा विदिता भवती ।
वृहतीपदसंविदिता भवती अयि वाणविपातिनिका भवती ॥ ४२ ।
अयि वृन्दनियामिनिका भवती बहुविक्रमिका विदिता भवती ।
वनितापदसंविदिता भवती अयि देवि वहुप्रणुता भवती ॥ ४३ ।
अयि बद्धकजासनिका भवती अयि विन्दुकदर्पणिका भवती ।
बडिसंस्थितिका विदिता भवती वडवानलवेगिनिका भवती ॥ ४४ ।
अयि बिल्वकपत्रतलस्थितिका अयि बोधितरुश्रितिका भवती ।
अयि बालतरा विदिता भवती अयि वाणवरासनिका भवती ॥ ४५ ।
अयि वैधसकाण्डबहिर्गतिका अयि देवि तदन्तरगा भवती ।
अयि वैधसकङ्कणसूत्रिणिका भयहारिणिका विदिता भवती ॥ ४६ ।
अयि देवि भवानिभवार्तिहरा अयि भाविनिका विदिता भवती।
अयि भीषणिकाऽभिहिता भवती अयि भारतकाशयिका भवती ॥ ४७ ।
अयि देवि भुजङ्गविलोचनिका अयि भारतिका विदिता भवती ।
अयि भैरविका विदिता भवती अयि भूतिविधायिनिका भवती ॥ ४८ ।
अयि भूतिकदम्बवती भवती अयि भीषणकाकृतिका भवती ।
अयि भद्रतरा विदिता भवती अयि कालितरा विदिता भवती ॥ ४९ ।
अयि भामिनिका विदिता भवती अयि भद्रविधायिनिका भवती ।
अयि भोगरताऽभिहिता भवती अयि भूरिकविक्रमिका भवती ॥ ५० ।
अयि भूसुरपूजितपादयुगा अयि मार्गविकाऽभिहिता भवती ।
अयि भूतनिवासवती भवती अयि भार्गववल्लरिका भवती ॥ ५१ ।
अयि देवि भगीरथनन्दिनिका अयि भामिनिका विदिता भवती ।
अयि भोगवती प्रमिता भवती भवनस्थभिषग्वरिका भवती ॥ ५२ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि भामिनिका अयि भोगिनिका अयि भूरिकदक्षिणिका भवती ।
अयि भाषिकयाऽभिधयाऽभिहिता भवकाननकार्तनिका भवती ॥ ५३ ।

अयि देवि भवाम्बुधिपारगमा भवमानसमोहिनिका भवती ।
अयि भीमवतीपदसंविदिता भवबन्धविमोचिनिका भवती ॥ ५४ ।

अयि भर्गकरूपिणिका भवती भजनीयतरा विदिता भवती ।
अयि भूतविधारिणिका भवती भवभञ्जिनिका विदिता भवती ॥ ५५ ।

भुवनेश्वरिकाऽभिहिता भवती भुंजगेश्वरकङ्कणिका भवती ।
अयि भेरुडिका विदिता भवती कृतभीमपदाभिहिता भवती ॥ ५६ ।

अयि भाग्यविधायिनिका भवती अयि मातृवरा विदिता भवती ।
अयि मायिनिका विदिता भवती मधुमत्यभिधानवती भवती ॥ ५७ ।

मधुजिह्वकयाऽभिधयाऽभिहिता मधुकप्रियका विदिता भवती ।
अयि मालिनिका विदिता भवती अयि मीनविलोचनिका भवती ॥ ५८ ।

महती खलु दैवतिका भवती महदादिकभागपदा भवती ।
अयि मायिकरूपधरा भवती अयि मायिकरूपपरा भवती ॥ ५९ ।

मधुमत्यभिधानवती भवती मधुकद्रविका विदिता भवती ।
मधुमांसिकयाऽभिधयाऽभिहिता अयि मानविका विदिता भवती ॥ ६० ।

मधुकप्रभवा विदिता भवती मिथिलापुरवासिनिका भवती ।
मधुकैटभमारिणिका भवती अयि मोदिनिका विदिता भवती ॥ ६१ ।

अयि मेघकदम्बिनिका भवती अयि मन्दकमध्यमिका भवती ।
मसृणप्रियका विदिता भवती अयि मैथिलिका विदिता भवती ॥ ६२ ।

महती किल मायिनिका भवती महती कमला विदिता भवती ।
महती किल कालितरा भवती महती किल तोकपरा भवती ॥ ६३ ।

अयि देवि महेश्वरिका भवती अयि देवि महेन्द्रनुता भवती ।
अयि मेरुसुता विदिता भवती मनदारसुभार्चितिका भवती ॥ ६४ ।

अयि मञ्जुमञ्जीरपदा भवती अयि मोक्षविधायिनिका भवती ।
अयि मञ्जुकभाषिणिका भवती मधुरद्रवकारिणिका भवती ॥ ६५ ।

मलयामलयान्वितिका भवती अयि मारकतद्युतिका भवती ।
अयि मागधिका विदिता भवती अयि मैनकिका विदिता भवती ॥ ६६ ।

अयि मेधिकयाऽभिधयाऽभिहिता अयि मुद्रिकया विदिता भवती ।
अयि देवि महाभरिका भवती अयि देवि महाभटिका भवती ॥ ६७ ।

अयि देवि महेन्द्रमणिप्रभिका मनुवंशभवप्रणुता भवती ।
अयि मातृकयाऽभिधयाऽभिहिता मिहरद्युतिका विदिता भवती ॥ ६८ ।

अयि देवि मुकुन्दपदक्रमिका अयि मूलपराश्रयगा भवती ।
अयि मुग्धिकयाऽभिधयाऽभिहिता मणिपूरकवासिनिका भवती ॥ ६९ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मृगशावविलोचनिका भवती महिषासुरमर्दिनिका भवती।
महिषासुरकांसगता भवती कुलसन्ततिकारिणिका भवती ॥ ७० ।
अयि योगवरासनिका भवती अयि योगगमा विदिता भवती।
अयि योगिकयाऽभिधयाऽभिहिता अयि यौवनिकाश्रयिका भवती ॥७१।
अयि यौवनिका विदिता भवती अयि युद्धरणाङ्गणगा भवती।
यमुनापदसंविदिता भवती युगधारिणिकाऽभिहिता भवती ॥ ७२ ।
अयि दक्षिणिकाऽभिहिता भवती अयि योगवती विदिता भवती।
अयि यक्षकराजसुता भवती अयि यानविधानविदा भवती ॥ ७३ ।
यदुवंशसमुद्भविका भवती अयि याजुषिका विदिता भवती।
अयि यादिहकारविसायिनिका अयि यज्ञवपुर्विदिता भवती ॥ ७४ ।
अयि यामिनि का पदसंविदिता अयि योगरता विदिता भवती।
अयि यातुकधानभयङ्करिका कुलसन्ततिकारिणिका भवती ॥ ७५ ।
अयि रुक्मिणिका रमणी भवती अयि रेवतिका रतिका भवती।
अयि रेणुकयाऽभिधयाऽभिहिता कृतरामपदाभिहिता भवती ॥ ७६ ।
अयि रौद्रितरा विदिता भवती अयि रौद्रहिता विदिता भवती।
अयि रामजनुर्विदिता भवती रतिका प्रियका विदिता भवती ॥ ७७ ।
अयि रोहिणिका रमिका भवती अयि राज्यविधायिनिका भवती।
अयि राजिवलोचनिका भवती अयि रत्नवरासनगा भवती ॥ ७८ ।
अयि रेविकयाऽभिधयाऽभिहिता अयि रूपकसंविदिता भवती।
अयि राकशिका विदिता भवती अयि रक्तकवाससिका भवती ॥ ७९ ।
अयि रक्तकमाल्यधरा भवती अयि रक्तबलिप्रियका भवती।
अयि रक्तकगन्धविलेपिनिका अयि राजकहंसगता भवती ॥ ८० ।
अयि रम्भिकयाऽभिधयाऽभिहिता रमणीययुगाश्रयिका भवती।
अयि राजितभूमितला भवती रुरुचर्मविधारिणिका भवती ॥ ८१ ।
अयि रक्तकमाल्यधरा भवती रथिनीपदसंविदिता भवती ।
अयि रोगमहेश्वरिका भवती अयि रोगशमन्यमिता भवती ॥ ८२ ।
अयि राविणिका विदिता भवती अयि रोमकहर्षिणिका भवती।
अयि रामपदाश्रयिका भवती अयि रावणमारिणिका भवती ॥ ८३ ।
अयि रत्नकवाससंवृतिका रथकक्षगता विदिता भवती।
अयि रुक्मविभूषणिका भवती कुलसन्ततिकारिणिका भवती ॥ ८४ ।
अयि लज्जितदैवतमूर्धगता ललितापदसंविदिता भवती।
अयि लिङ्गविधारिणिका भवती कुलसन्ततिकारिणिका भवती ॥ ८५ ।
अयि लोलिकयाऽभिधयाऽभिहिता अयि लुप्तविषा विदिता भवती।
अयि लोकिनिका विदिता भवती ललनापदसंविदिता भवती ॥ ८६ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि लम्बमहोदरिका भवती अयि लोकविधारिणिका भवती ।
अयि लोकसुविश्रुतिका भवती अयि लक्ष्मिमहामहिमा भवती ॥ ८७ ।
अयि लोलकलोलपदा भवती अयि लज्जितलज्जिकया भवती ।
वरदायिनिका विमलाकृतिका अयि वैष्णविका विदिता भवती ॥ ८८ ।
अयि वन्दितपादयुगा भवती विबुधाधरगा विदिता भवती ।
अयि देवि वराहरदाश्रयिका विरजा अयि वर्णवरा भवती ॥ ८९ ।
वरलक्ष्मिकयाऽभिधयाऽभिहिता अयि देवि विलासिनिका भवती ।
विनतापदसंविदिता भवती वियदङ्गणमध्यगता भवती ॥ ९० ।
अयि वारिजकासनगा भवती अयि वारुणिका विदिता भवती ।
अयि वेणुकसम्भविका भवती अयि देवि विरूपिणिका भवती ॥ ९१ ।
अयि वायुविमण्डलगा भवती अयि वीतिविहोत्रपदा भवती ।
अयि विष्णुवपुर्विदिता भवती विधिकप्रियका विदिता भवती ॥ ९२ ।
अयि वैष्णवपत्नि वसुन्धरिका वसुदोहिनिका विदिता भवती ।
अयि देवि विशालविलोचनिका अयि वज्रिणिकाऽभिहिता भवती ।९३।
अयि विष्णुमती विदिता भवती अयि वासविका विदिता भवती ।
अयि वामनिलिम्पमनोहरिका अयि वेदगवर्णवृता भवती ॥ ९४ ।
अयि वाजकपेयफलप्रदिका अयि वेलिकयाऽभिहिता भवती ।
अयि देवि विकुण्ठपदाश्रयिका अयि वामजनन्यमिता भवती ॥ ९५ ।
अयि वर्मधरावरिका भवती अयि देवि वियासहिता भवती ।
अयि वल्मिकसम्भवसेव्यपदा शिविका शरणागतिका भवती ॥ ९६ ।
अयि शाकभरी विदिता भवती अयि शान्ततरा विदिता भवती ।
अयि शातशुभोदरिका भवती शुभिकाकृतिका विदिता भवती ॥ ९७ ।
अयि शुम्भनिशुम्भविमर्दिनिका शिविकापदसंविदिता भवती ।
अयि शङ्करनेमशरीरगता शुभिकापदसंविदिता भवती ॥ ९८ ।
अयि शोणनदापशुभा भवती शुभकाशयिका विदिता भवती ।
अयि शुभ्रतराविदिता भवती शिरसंहितिकारिणिका भवती ॥ ९९ ।
अयि देवि शरावतिका भवती अयि देवि शुभाननिका भवती ।
शरकाननमध्यविहारिणिका शरदैन्दवतैजसिका भवती ॥ १०० ।
शरमाकृतिका शबरी भवती अयि शूलिनिका विदिता भवती ।
अयि शुद्धतरा शुकवाहनिका कुलसन्ततिकारिणिका भवती ॥ १०१ ।
अयि शर्वकजीवनिका भवती अयि शर्वरिका विदिता भवती ।
श्रवणाद्भुतसौख्यविधायिनिका कुलसन्ततिकारिणिका भवती ॥ १०२ ।
शुचिशुक्लसरोजगता भवती श्रितशर्मविधायिनिका भवती ।
अयि शोधितदानवकारिपदा कुलसन्ततिकारिणिका भवती ॥ १०३ ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इन्द्रनीलमणिरम्यसानुके नीलभूभृतिकृतास्पदे शिवे ।
पौत्रगोयुगमुदारदर्शने मातरुद्दिश दयावलोकनैः ॥ १०४ ।
इत्येतदतिनिर्विण्णरघुनाथमुखोद्गतम् ।
सन्ततिस्तवकं पुष्पस्तबकप्रतिकञ्चुकम् ॥ १०५ ।
आवर्तययितः या शक्रदृक्संख्यामितमादरात् ।
पुत्रपौत्रानुवृत्तिः स्यात् तस्य यावत् स्थिरा धरा ॥ १०६ ।
सहस्रकरभासायाः सहस्रकरसंस्थितेः ।
सहस्रकरशालिन्या मातुश्चरणमाश्रये ॥ १०७ ।

इति श्रीब्रह्मीभूतकाशीनाथतनयसौभद्रेयरघुनाथकृतौ
सन्ततिस्तवे एकादशं शतकम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## द्वादशं शतकम्

अयि षट्श्रुतिभाषिणिका भवती अयि षड्ऋतुकामिनिका भवती।
अयि षट्कसमाश्रयगा भवती अयि षण्मुखकारिणिका भवती॥ १॥
अयि देवि षडङ्गवपुर्भवती सुमतिः सुरसङ्घनुता भवती।
अयि देवि सरस्वतिका भवती अयि देवि सदाश्रयिका भवती॥ २॥
अयि सर्वसुमङ्गलकारिणिका अयि सामसुगायिनिका भवती।
अयि सूक्ष्मतरा विदिता भवती अयि देवि सवितृगता भवती॥ ३॥
अयि सामकसम्भविका भवती अयि सर्वनिवासिनिका भवती।
अयि देवि सनातनहर्षिणिका अयि सुस्तनिका विदिता भवती॥ ४॥
अयि सागरकाम्बरिका भवती अयि सर्वनियामिनिका भवती।
अयि सिद्धिपदाभिहिता भवती अयि साधुपराक्रमिका भवती॥ ५॥
अयि सप्तकमौनिकमण्डलगा अयि सोमकमण्डलगा भवती।
अयि सर्वविदा विदिता भवती अयि सान्द्रदया विदिता भवती॥ ६॥
अयि देवि समाधिकवर्जितिका अयि सर्वकतुङ्गतरा भवती।
अयि सङ्गविहीनतरा भवती अयि सङ्गणिका विदिता भवती॥ ७॥
सकलेष्टविधायिनिका भवती सरघापदसंविदिता भवती।
अयि सूर्यसुताऽभिहिता भवती अयि देवि सुकेशितरा भवती॥ ८॥
अयि सामकसंहृतिका भवती अयि देवि हिरण्यरुचिर्भवती।
हरिणीपदसंविदिता भवती ह्रमादिकबिन्दुमती भवती॥ ९॥
अयि हंसकवाहिनिका भवती क्षुमिकांशुकसंवृतिका भवती।
क्षमिकाक्षिरकाब्धिसुता भवती कुलसन्ततिकारिणिका भवती॥ १०॥
गुणगायकपालिनिका भवती अयि देवि सवितृसुता भवती।
अयि पार्वतिकापदसंविदिता अयि देवि वरारुहिका भवती॥ ११॥
अयि देवि सरस्वतिका भवती अयि वेदकगर्भवती भवती।
अयि देवि पराम्बिकयाऽभिधयाऽभिहिता कुलकारिणिका भवती॥ १२॥
अयि देवि महाविदिता भवती श्रुतिमातृतया विदिता भवती।
अयि देवि परात्परिका भवती भुवरादिमहामनुका भवती॥ १३॥
प्रणवात्मकरूपिणिका भवती अयि साम्यदशाविदिता भवती।
स्वधिकापदसंविदिता भवती ह्रमादिकबिन्दुमती भवती॥ १४॥
अयि देवि सुवाहिकयाऽभिधयाऽभिहिता सकलेष्टकदा भवती।
अयि भक्तमनोरथकल्पलता दशिकात्रयसाक्षिणिका भवती॥ १५॥
अयि तुर्यपदातिगता भवती अयि सच्चितिरूपिणिका भवती।
श्रुतिसायकसंविदिता भवती अयि भानवमण्डलगा भवती॥ १६॥
अयि औषसबाल्यवती भवती अयि रक्तरुचिर्विदिता भवती।
दिनमध्यगता युवती भवती दिनसायगताऽसितिका भवती॥ १७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जरती अयि निर्जरिका भवती अयि सर्वजनारणिका भवती।
परमेश्वरिका विदिता भवती जगती जननी विदिता भवती ॥ १८ ।
अयि पिङ्गविलोचनिका भवती अयि देवि समृद्धितरा भवती।
अयि देवि विशालविलोचनिका अयि वृद्धितरा विदिता भवती ॥ १९ ।
अयि देवि वसुन्धरिका भवती अयि मायिनिका विदिता भवती।
स्वधिकापदसंविदिता भवती त्रिकलोकविधारिणिका भवती ॥ २० ।
अयि देवि सुवाह्निकयाऽभिधयाऽभिहिता त्रिदशेश्वरिका भवती।
अयि गाथकपालिनिका भवती अयि देवि सवितृसुता भवती ॥ २१ ।
अभिरूपतरा विदिता भवती अयि संज्ञपिका विदिता भवती।
श्रुतिदेवगुरुस्वसिता भवती अयि देवि सुरूपिणिका भवती ॥ २२ ।
बहुरूपिणिका विदिता भवती अयि अच्युतकप्रियका भवती।
अयि षण्मुखमातृतया विदिता विमलापदसंविदिता भवती ॥ २३ ।
अमलापदसंविदिता भवती अरुणोपदसंविदिता भवती।
अयि आरुणिका विदिता भवती प्रकृतिर्विकृतिर्विदिता भवती ॥ २४ ।
अयि सृष्टिपदाभिहिता भवती स्थितिकापदसंविदिता भवती।
अयि संहृतिका विदिता भवती अयि मातृतया विदिता भवती ॥ २५ ।
अयि सान्ध्यविधिर्विदिता भवती सतिकापदसंविदिता भवती।
अयि हंसिकयाऽभिधयाऽभिहिता अयि वज्रिकया विदिता भवती ॥ २६ ।
अयि मर्दिकया विदिता भवती कमलासनिका विदिता भवती।
भगवत्यभिधानवती भवती अयि देवजनन्यमिता भवती ॥ २७ ।
अयि देवकभूपसुता भवती त्रिमुखीपदसंविदिता भवती।
अयि सप्तमुखीविदिता भवती सुरकासुरमर्दिनिका भवती ॥ २८ ।
अयि ऊर्ध्वसमुन्नतकेशवती बहुशीर्षवती विदिता भवती।
अयि लम्बकबिम्बफलाधरिका अयि देवि वृकोदरिका भवती ॥ २९ ।
रथरेखिकयाऽभिधयाऽभिहिता शशिरेखिकया विदिता भवती।
गगनाङ्गणवेगवती भवती अयि वातकवेगवती भवती ॥ ३० ।
भुवनावनिका विदिता भवती मदनातुरिका विदिता भवती।
अयि देवि अनङ्गविभाविनिका अयि देवि अनङ्गपदा भवती ॥ ३१ ।
अयि देवि अनङ्गकमेखलिका अयि देवि अनङ्गसुमा भवती।
अयि देवि सुरादिकया विदिता अयि विश्वकरूपिणिका भवती ॥ ३२ ।
क्षयकङ्करिका विदिता भवती अयि अक्षुभिका विदिता भवती।
अयि सत्यकवादिनिका भवती बहुरूपिणिका विदिता भवती ॥ ३३ ।
अयि देवि शुचिव्रतिका भवती अयि वाक्पतिका विदिता भवती।
अयि देवि उदारिकयाऽभिधयाऽभिहिता कुलकारिणिका भवती ॥ ३४ ।
विविधायुधधारिणिका भवती अयि मेदमणिप्रचुरा भवती।
अयि देवि विदापदिका भवती हरमापदसंविदिता भवती ॥ ३५ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि पुष्टिपदाभिहिता भवती अयि देवि कुहूपदिका भवती ।
अयि देवि सिनीवलिका भवती अयि वृद्धिपदाभिहिता भवती ॥ ३६ ।
प्रभिका अयि पोषिणिका भवती अयि ऋद्धिविधायिनिका भवती ।
शुभिकापदसंविदिता भवती अयि वीर्यवती विदिता भवती ॥ ३७ ।
अयि नन्दिकयाऽभिधयाऽभिहिता कृतरुद्रपदाऽभिहिता भवती ।
अयि कालविभावरिका भवती अयि देवि महानिशिका भवती ॥ ३८ ।
अयि भद्रपदाभिहिता भवती अयि कालितरा विदिता भवती ।
अयि देवि कपर्दिनिका भवती अयि देवि शिखण्डिनिका भवती ॥ ३९ ।
अयि सेन्दुकला विदिता भवती अयि मुण्डिनिका विदिता भवती ।
अयि दण्डिनिका विकृतिर्भवती महिषासुरमर्दिनिका भवती ॥ ४० ।
अयि शुम्भनिशुम्भविमाथिनिका शचिकापदसंविदिता भवती ।
अयि शङ्करनेमशरीरगता भवजीवनिका विदिता भवती ॥ ४१ ।
अयि नारिकयाऽभिधयाऽभिहिता अयि नारनिकेतनिका भवती ।
अयि शूलिनिका विदिता भवती अयि पालिनिका विदिता भवती ॥ ४२ ।
अयि अम्बिकयाऽभिधयाऽभिहिता अयि हर्षिणिका विदिता भवती ।
भुवनेश्वरिका विदिता भवती शतयौवतसंवृतिका भवती ॥ ४३ ।
मदनातुरिका विदिता भवती अयि सुन्दरिका विदिता भवती ।
अयि देवि अनङ्गकरूपिणिका अयि देवि अनङ्गमदा भवती ॥ ४४ ।
भुवनत्वरिका विदिता भवती भुवनावनिका विदिता भवती ।
अयि देवि अनङ्गकवेदनिका अयि सर्वकशैशिरिका भवती ॥ ४५ ।
अयि देवि अनङ्गकमेखलिका चलचापलगात्रवरा भवती ।
क्वणदद्भुतरासनिका भवती रणदद्भुतनूपुरिका भवती ॥ ४६ ।
अयि तालकवृन्तधरा भवती चषकाढ्यकराम्बुजिका भवती ।
अयि पर्णदलालिविधारिणिका अतिगर्वितिका विदिता भवती ॥ ४७ ।
अयि आतपवारणधारिणिका अयि चामरधारिणिका भवती ।
विविधाकृतिवाससधारिणिका अयि पुष्पकराम्बुजिका भवती ॥ ४८ ।
अयि धावकहंसगतिर्भवती चपलाललितोपमिका भवती ।
अयि वेत्रकराम्बुजिका भवती कुलसन्ततिकारिणिका भवती ॥ ४९ ।
अयि वैधसिका विदिता भवती अयि देविमहेश्वरिका भवती ।
अयि देवि कुमारितरा भवती अयि वैष्णविका विदिता भवती ॥ ५० ।
अयि देवि वराहवपुर्भवती शचिकापदसंविदिता भवती ।
अयि चण्डकमुण्डविनाशिनिका महती कमला विदिता भवती ॥ ५१ ।
अयि देवि करालतरा भवती विकरालतरा विदिता भवती ।
उमिकापदसंविदिता भवती अयि देवि सरस्वतिका भवती ॥ ५२ ।
उषिका श्रुतिका स्मृतिका भवती धृतिका मतिका विदिता भवती ।
अयि कान्तिपदाभिहिता भवती कृतकार्यपदाभिहिता भवती ॥ ५३ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि दुर्गिकयाऽभिहिता भवती अयि लक्ष्मिकयाऽभिहिता भवती।
अयि मेधिकयाऽभिहिता भवती कुलसन्ततिकारिणिका भवती ॥ ५४ ।
शुचिसद्धिकयाऽभिहिता भवती अयि नीलघनासितिका भवती।
करवालकराम्बुजिका भवती अयि खेटकधारिणिका भवती ॥ ५५ ।
अयि संगरसक्तकमानसिका अयि सैन्यनियामिनिका भवती।
अयि देवि महारथिका भवती बहुशक्तिसमावृतिका भवती ॥ ५६ ।
अयि देवि अनङ्गसुमा भवती अयि देवि अनङ्गमदा भवती।
अयि देवि अनङ्गसुमातुरिका भुवनावनिका विदिता भवती ॥ ५७ ।
गगनाङ्गणवेगवती भवती शशिरेखिकया विदिता भवती।
अयि देवि अनङ्गमदातुरिका अरुणारुणविग्रहिका भवती ॥ ५८ ।
अयि हृल्लिखिका विदिता भवती गगनापदसंविदिता भवती।
अयि रक्तिकयाऽभिधयाऽभिहिता कुलसन्ततिकारिणिका भवती ॥ ५९ ।
अयि देवि करालिकया विदिता बृहदुच्छुषिमापदिका भवती।
अयि पञ्चकभूतसमप्रभिका नवयौवनगर्ववित्तिका भवती ॥ ६० ।
अयि पाशवरा भयधारिणिका अयि अङ्कुशधारिणिका भवती।
अमिताद्भुतभूषणधारिणिका कुलसन्ततिकारिणिका भवती ॥ ६१ ।
भववामवराङ्कगता भवती भुवनेश्वरिका विदिता भवती।
नवरत्नगणाकुलकाञ्चिकया अयि देवि विराजितिका भवती ॥ ६२ ।
द्रुतकाञ्चननद्धविदूरभवाङ्गदभूषणिका विदिता भवती।
क्वणदैन्दिरचक्रविटङ्कसमानकताटकचारुमुखी भवती ॥ ६३ ।
अयि भालविभाविभवैरतिधिक्कृतनेमसुधाकरिका भवती।
अयि विम्बरुचीनिकृतिप्रवणाद्भुतदन्तकवारणिका भवती ॥ ६४ ।
लसदुत्तमकुङ्कुमकस्तुरिका तिलकोज्वलिताननिका भवती।
अयि दिव्यकचौडमणिस्फुरिताद्भुतचन्द्रकसूर्यकिका भवती ॥ ६५ ।
उदिताद्भुतभार्गवकाच्छविभाभृतनासकभूषणिका भवती ।
अयि चिन्तकलम्बितकाच्छसुमौक्तिकगुच्छविराजितिका भवती ॥ ६६ ।
अयि चन्दनचन्द्रककुङ्कुमपङ्कविभूषितसुस्तनिका भवती।
अयि देवि विचित्रविभूषणिका विविधाभरणा विदिता भवती ॥ ६७ ।
अयि कम्बुकसंन्निभकन्धरिका वरदाडिमबोजरदा भवती।
अयि देवि अनर्घकहीरकपूगपिनद्धकमौलिमती भवती ॥ ६८ ।
अयि मत्तकषट्पदमालिकया लसितालकचारुमुखी भवती।
अयि देवि कलङ्कसमुज्झितशारदचन्द्रनिभाननिका भवती ॥ ६९ ।
अयि जाह्नविका सलिलभ्रमिका समनाभिविभूषितिका भवती।
मणिखण्डपिनद्धकमुद्रिकया परिभूषितकाङ्गुलिका भवती ॥ ७० ।
नयनत्रयनिर्जितपद्मदला दलितासुरघोरकुला भवती।
परिकल्पितनिर्मलपद्मकरागमहोज्वलकप्रभिका भवती ॥ ७१ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयि रत्नककिङ्किणिकायुतरत्नककङ्कणिका विदिता भवती ।
मणिमौक्तिकसारलसत्पदिका अयि रक्तकराङ्गुलिका भवती ॥ ७२ ।
अयि कञ्चुकिका परिगुम्फितरत्नकतारततिद्युतिका भवती ।
अयि माल्लिकपूगसरावृतिका अयि माल्लिकमोदिकचा भवती ॥ ७३ ।
अयि देवि सुवृत्तकुचा भवती निविडोन्नतचारुकुचा भवती ।
कुचभारपरालसिका भवती शिविकापदसंविदिता भवती ॥ ७४ ।
अभयाङ्कुशपाशकरा भवती वरधारिकरा विदिता भवती ।
सुकुमारविपुलतिका भवती परसौन्दरधारिणिका भवती ॥ ७५ ।
शुचिशृङ्गविकारकवेषधरा अयि निश्छलकारुणिका भवती ।
निजसंलपिताद्भुतमाधुरिका जितकच्छपिका विदिता भवती ॥ ७६ ।
अयि सर्वनिधिंविदिता भवती अयि कोटिरवीन्दुविभा भवती ।
सखिकाकुलसंवृतिका भवती अयि दासिकसंवृतिका भवती ॥ ७७ ।
अयि देवगणाङ्गनिकावृतिका अयि दैवतकावृतिका भवती ।
अयि एपणिका शुचिशक्तियुता अयि बोधकशक्तियुता भवती ॥ ७८ ।
क्रियकाशुभशक्तियुता भवती अयि लज्जिकयाऽभिहिता भवती ।
अयि तुष्टिपदाभिहिता भवती अयि पुष्टिपदाभिहिता भवती ॥ ७९ ।
अयि कीर्तिरहो विदिता भवती क्षमिका करुणा विदिता भवती ।
अयि बुद्धिपदाभिहिता भवती स्मृतिकापदसंविदिता भवती ॥ ८० ।
अयि मेधिकयाऽभिधयाऽभिहिता अयि लक्ष्मिकया विदिता भवती ।
जयिकापदसंविदिता भवती विजयापदसंविदिता भवती ॥ ८१ ।
अजितापदसंविदिता भवती अपराजितिका विदिता भवती ।
अयि नित्यविलासिनिका भवती नवमङ्गलिका विदिता भवती ॥ ८२ ।
अयि दोग्ध्रिकयाऽभिधयाऽभिहिता अयि देवि अघोरपदा भवती ।
अयि देवि महेशमहेश्वरिका भुवनेश्वरिका विदिता भवती ॥ ८३ ।
अयि मातृतया विदिता भवती महिषी महिषी विदिता भवती ।
अयि सिंहवरासनकेश्वरिका सुरकार्यसमुद्यतिका भवती ॥ ८४ ।
अयि चित्सुरहव्यवहप्रभवा उदितार्कसहस्रविभा भवती ।
युगबाहुसमन्वितिका भवती अयि मानसकेक्षुधनुर्भवती ॥ ८५ ।
अयि रोषवराङ्कुशिका भवती अयि मानसकेक्षुधनुर्भवती ।
अयि पञ्चपराणुकसायकिका कुलवर्धिनिकाऽभिहिता भवती ॥ ८६ ।
निजरक्तविभाभरभञ्जदशेषकवैधसमण्डलिका भवती ।
अयि चम्पकशोकविनाशनपुन्नगपद्मकचारुकचा भवती ॥ ८७ ।
अयि अष्टमिका विधुराजदलौकिकभालविभा शुभिका भवती ।
कुरुविन्दमणिक्वनदद्भुतकोटिरमण्डितमौलिवरा भवती ॥ ८८ ।
मुखचन्द्रकलङ्कनिकाशकमार्गकनाभिविशेषकिका भवती ।
वदनस्मरमङ्गलकास्तकतोरणचिल्लिकया विदिता भवती ॥ ८९ ।
वदनद्युतिका परिवाहचलन्नवमीनकलोचनिका भवती ।
नवचम्पकपुष्पनिकाशकनासिकदण्डविराजितिका भवती ॥ ९० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उडुकान्तितिरस्कृतिकारिकनासिकभूषणभासुरिका भवती ।
अयि देवि कदम्बकमञ्जरिका कृतकर्णविभूषणिका भवती ॥ ९१ ।
नवविद्रुमबिम्बरदच्छदिका तपनोडुपकुण्डलिका भवती ।
अयि पद्मकरागशिलाकृतदर्पणचारुकपोलतला भवती ॥ ९२ ।
अयि शुद्धसुबोधवराङ्कुरकाकृतिदन्तकपङ्क्तिशुभा भवती ।
शशिखण्डसमन्वितवीटिकया परिकर्षितदिग्भविका भवती ॥ ९३ ।
अयि मन्दकसुस्मितपूरनिमज्जदनङ्गकनाथमना भवती ।
अयि देवि अलौकिकचैवुककान्तिविराजितिका विदिता भवती ॥ ९४ ।
अयि मन्मथकेशनिबद्धसुमङ्गलतन्तुककन्धरिका भवती ।
कनकाङ्गदकङ्कणकैः कमनीयभुजद्वयिका विदिता भवती ॥ ९५ ।
अयि रत्नकसारसमन्वितचिन्तकलोलकमौक्तिकिका भवती ।
अयि काममहेश्वरमोहमणिप्रतिपाणकसुस्तनिका भवती ॥ ९६ ।
अयि आलकबालकनाभिकरोमलताफलभूतकुचा भवती ।
अयि लक्ष्यकरोमलतापरिभावितमन्दकमध्यमिका भवती ॥ ९७ ।
कुचभारदलद्वरमध्यकपट्टकबन्धवलित्रयिका भवती ।
अरुणारुणकौसुभवाससभासुरचारुकटीतटिका भवती ॥ ९८ ।
अयि रत्नककिङ्किणिकारवरम्यसुराशनदामवती भवती ।
अयि मन्मथशात्रववृद्धसुसौभगमार्दवकोरुयुगा भवती ॥ ९९ ।
अयि माणिकमौकुटकाकृतिजानुकपर्वविराजितिका भवती ।
अयि जङ्घिकया जितशक्रकगोपरुचिस्मरतूणयुगा भवती ॥ १०० ।
अयि कूर्मकपीठजयिप्रपदा अयि गूढकगुल्फयुगा भवती ।
नखदीधितिभिन्ननमज्जनघोरतमोगुणिका विदिता भवती ॥ १०१ ।
पदगोयुगभाततिका परिभूतसरोरुहिका विदिता भवती ।
मणिनूपुरमण्डितपादयुगा युगयौवतदर्पिणिका भवती ॥ १०२ ।
अयि कल्मषहारिणिका भवती विपदोघनिवारिणिका भवती ।
निजसंश्रिततारिणिका भवती कुलसन्ततिकारिणिका भवती ॥ १०३ ।

इन्द्रनीलमणिरम्यसानुके नीलभूभृतिकृतास्पदे शिवे ।
पौत्रगोयुगमुदारदर्शने मातरुद्दिश दयावलोकनैः ॥ १०४ ।
सहस्रकरभासायाः सहस्रकरसंस्थितेः ।
सहस्रकरशालिन्या मातुश्चरणमाश्रये ॥ १०५ ।
इत्येतदतिनिर्विण्णरघुनाथमुखोद्गतम् ।
सन्ततिस्तवकं पुष्पस्तबकप्रतिकञ्चुकम् ॥ १०६ ।
आवर्तयति यः शक्रदृक्संख्यामितमादरात् ।
पुत्रपौत्रानुवृत्तिः स्यात्तस्य यावत् स्थिरा धरा ॥ १०७ ।

इति श्रीब्रह्मीभूतकाशीनाथतनयसौभद्रेयरघुनाथकृतौ
सन्ततिस्तवे द्वादशं शतकम् ॥

**समाप्तश्चायं सन्ततिस्तवः**



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रजिस्टर्ड न्यूजपेपर्स एक्ट के अन्तर्गत

# विज्ञप्ति

| | | |
|---|---|---|
| १. | प्रकाशन का नाम | सारस्वती सुषमा |
| २. | प्रकाशन की तिथि | त्रैमासिक |
| ३. | प्रकाशक का नाम | भागीरथ प्रसाद त्रिपाठी |
| | राष्ट्रियता | भारतीय |
| | पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, |
| ४. | सम्पादक का नाम | भागीरथ प्रसाद त्रिपाठी |
| | राष्ट्रियता | भारतीय |
| | पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |
| ५. | मुद्रक का नाम | श्री रमाशंकर पंड्या |
| | राष्ट्रियता | भारतीय |
| | पता | तारा प्रिंटिंग वर्क्स, कमच्छा, वाराणसी |
| ६. | स्वामित्व | सम्पूर्णानन्द संस्कृत विश्वविद्यालय वाराणसी |

मैं भागीरथ प्रसाद त्रिपाठी घोषित करता हूँ कि उल्लिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है।

हस्ताक्षर
भागीरथ प्रसाद त्रिपाठी
गवेषणालय-संचालक
सं० सं० वि० वि०, वाराणसी—२२१००२.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुमुक्षु भवन वेद वेदाङ्ग पुस्तकालय
आगत क्रमांक... १६२
दिनांक.........

पञ्जीकरणसंख्या—६६८१।५७

# सारस्वती सुषमा

## सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका ।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति ।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति ।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते ।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति ।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्गलग्रन्थानां समालोचनाः प्रकाश्यन्ते । तदर्थं ग्रन्थकर्तृभिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये ।

७. 'कुलसचिव, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय, वाराणसी-२२१००२ (उ०प्र०) इति सङ्केतेन ('बैंकड्राफ्ट' अथवा 'पोस्टल आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम् ।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी—२२१००२ (उ० प्र०) इति सङ्केतेन विधेयः ।



प्रकाशकः—सञ्चालकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः;
वाराणसी-२२१००२ (उ० प्र०) ।
मुद्रकः—तारा प्रिंटिंगवर्क्स, कमच्छा, वाराणसी ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# सुसङ्ग्राह्याः केचन वेद-वेदाङ्गग्रन्थाः

क्रमसंख्या ग्रन्थनाम — मूल्यम्

१. शुक्लयजुर्वेदकाण्वसंहिता—संहितेयं खलु सायणभाष्यसमलङ्कृता साम्प्रतं मुद्रितप्रायैव। ग्रन्थरत्नमिदं विविधैः पद-पाठ-टीकागतसन्दर्भसन्निवेशविशिष्टैः टिप्पण्यादिभिः, अथ च विदुषा श्रीचिन्तामणिमिश्रमहोदयेन विरचितया गवेषणाप्रधानभूमिकया विविधैः परिशिष्टैश्च समेधितमस्ति— २२·००

२. अथर्ववेदे शान्तिपुष्टिकर्माणि—श्रीमत्या डॉ० मायामालवीयया वैदिकवाङ्मयस्यानुशीलनं कृत्वा विरचितो विविधाभिरानुसन्धानिकफलश्रुतिभिः प्रतिष्ठापितश्चायं गवेषणाप्रबन्धः— ८·००

३. बौधायनशुल्वसूत्रम्—[ बोधायनाचार्यप्रणीतम् ]। मुद्रितप्रायोऽयं ग्रन्थः श्रीव्यङ्कटेश्वरदीक्षितविरचितया बोधायनशुल्बमीमांसाख्यया व्याख्यया, अथ च श्रीद्वारकानाथयज्वप्रणीतया बौधायनशुल्वसूत्रव्याख्यानाख्यया टीकया प्रभूतैः संवादात्मकैः रेखाचित्रैश्च सनाथीकृतः—

४. बृहत्संहिता—[भागद्वयात्मिका] श्रीवराहमिहिराचार्यप्रणीता। ग्रन्थोऽयं श्रीभट्टोत्पलविवृतिविभूषितः, अथ च विमर्शात्मकेनोपोद्घातेन समुल्लसितः।

प्रथमभागस्य मूल्यम्–१८·००

द्वितीयभागस्य मूल्यम्–२०·००

५. स्कन्दशारीरकम्—सामुद्रिकशास्त्रमधिकृत्य केनाप्यज्ञातनाम्ना विदुषा प्रणीतोऽयं ग्रन्थोऽज्ञातनाम्न्या टीकया पुरस्कृतोऽस्ति, अस्मिन् हि खलु ग्रन्थे शरीरस्थरेखापरीक्षणद्वारा सुकृतदुष्कृतयोरिष्टप्राप्तिसाधनयोर्भृशं विवेचनम् उपलभ्यते। पुस्तकमिदं गवेषणाप्रधानैः भूमिका-टिप्पणादिविविधपरिशिष्टैर्नूनं स्वीयं महत्त्वं भजते— १५·००

६. अर्वाचीनं ज्योतिर्विज्ञानम्—ग्रन्थोऽयं विदुषा श्रीरमानाथसहायमहोदयेन विनिर्मितः खल्वाधुनिकगवेषणापद्धत्या प्राच्यभारतीयगणितशास्त्राधुनिकभौतिकशास्त्रयोरत्र तुलाबोधकं परीक्षणं कृतम्— १३·००

७. परिभाषेन्दुशेखरः—[ हैमवतीसंवलितः ] वैयाकरणमूर्धन्यपण्डितश्रीयोगेश्वरशास्त्रिकृतया 'हैमवती' व्याख्यया समुद्भासितः। ग्रन्थरत्नमिदं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयनव्यव्याकरणविभागीयैः आचार्यपदमलङ्कुर्वद्भिः श्रीकालिकाप्रसादशुक्लमहोदयैः विविधपाठभेदटिप्पणी-परिभाषापाठानुक्रमणी-वर्णानुक्रमसूची-परिभाषाव्याख्यातृकृतपरिभाषापाठभेदप्रभृतिभिरुपादेयगवेषणामूलकभूमिकादिभिरुपस्कृतः— ४९·००

प्रकाशकः—निदेशकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी–२२१००२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अभिनवप्रकाशनानि सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

| क्रम सं० | ग्रन्थनाम | | मूल्यम् |
|---|---|---|---|
| १. | शुक्लयजुर्वेदकाण्वसंहिता | [उत्तरविंशतिः] संहितेयं सायणभाष्यसहिता प्रकाशिता विविधैः खलु गवेषणाप्रधानैः भूमिका-टिप्पण-परिशिष्टैः समलङ्कृता | २२-०० |
| २. | वाक्यपदीयम् | [वृत्तिसमुद्देशात्मकम्] ग्रन्थरत्नमिदं हेलाराजप्रणीतया प्रकाशव्याख्यया तथा च प० रघुनाथशर्मविरचितया अम्बाकर्त्रीटीकया विभूषितम् | ६५-५० |
| ३. | वैयाकरणसिद्धान्तमञ्जूषा | [नागेशभट्टविरचिता] ग्रन्थोऽयं सर्वतः प्रथमं सम्पादककृतविविधैः सारभूतैः टिप्पण-भूमिका-परिशिष्टैः समलङ्कृत्य प्रकाशितः | ३६-०० |
| ४. | प्रक्रियाकौमुदी | [भागद्वयात्मिका] रामचन्द्राचार्यप्रणीतेयं प्रक्रियाकौमुदी सर्वतः प्रथमं शेषश्रीकृष्णपण्डितप्रणीतया प्रकाशव्याख्यया विभूष्य प्रकाशिता। तृतीयो भागोऽपि चिरादेव प्राकाश्यमेष्यति। प्रथमभागस्य | ५२-०० |
| | | द्वितीयभागस्य | ६७-०० |
| ५. | सरलत्रिकोणमितिः | [ज्योतिषम्] म० म० श्रीबापूदेवशास्त्रिविरचितोऽयं ग्रन्थो गवेषणापूर्णैः उपोद्घात-परिशिष्टैः सम्भूष्य प्रकाशितः | २९-०० |
| ६. | प्रशस्तपादभाष्यम् | [प्रशस्तपादाचार्यप्रणीतम्] न्यायदर्शनस्य प्राणभूतमिदं ग्रन्थरत्नं श्रीधरभट्टकृतन्यायकन्दलीव्याख्यया, श्रीदुर्गाधरझाकृतहिन्दीभाषानुवादेन च समलङ्कृतं पुनः प्रकाशितम् | ६८-०७ |
| ७. | रसगङ्गाधरः | [पण्डितराजजगन्नाथविरचितः] साहित्यशास्त्रग्रन्थोऽयं प० केदारनाथओझा प्रणीतया रसचन्द्रिकाख्यया व्याख्यया विभूष्य प्रकाशितः। द्वितीयभागोऽपि किलाचिरादेव प्राकाश्यमेष्यति | २२-०० |
| ८. | नानकचन्द्रोदयमहाकाव्यम् | [श्रीदेवराजशर्मविरचितम्] गुरुनानकचरितमुपजीव्यत्वेनाङ्गीकृत्य प्रतिभावता देवराजशर्मणा महाकविना विरचितमिदं महाकाव्यं कामं संस्कृतवाङ्मयस्य श्रियं समेधयति | ७४-६० |
| ९. | रसिकजीवनम् | [पण्डितश्रीरामानन्दपतित्रिपाठिविरचितम्] नायिकाभेदनिरूपणपरमिदं काव्यं सर्वतः प्रथमं विस्तृतगवेषणात्मिकया प्रस्तावनया समलङ्कृत्य प्रकाशितम् | ७-०० |

प्रकाशनाधिदेशकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी-२२१००२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri